

श्रीवेङ्कटेशाय नमः ।

# नारदपञ्चरात्र-

## ( भारद्वाजसंहिता )

प्रयागराजप्रान्तवर्ति–पं० सरयूप्रसादमिश्रकृत–

टीकासहिता ।






सेयम्

खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रागारे

मुद्रयित्वा प्रकाशिता ।



कार्तिक संवत् १९६२, शके १८२७.





# भूमिका ।



असारेऽस्मिन्संसारे धर्मार्थकाममोक्षसाधनैकेहेतुरिदमति-दुर्लभं नरशरीरं पूर्वार्जितपुण्यपुञ्जेनैव लभ्यते । तत्रापि धर्मार्थकाममोक्षेषु धर्मार्थकामास्तु कथंचिदपि सिध्यंत्येव परं च मोक्षसिद्धिस्तु कलिकलुषितान्तःकरणात् दुर्लभतरा जाता । अतः करुणार्द्रचित्तैर्भरद्वाजादिभिर्महर्षिभिर्नारदपंचरात्रांगभूतनिजनामप्रख्यापितसंहितायां हरिशरणागतिरेव मोक्षसाधनभूता घोरकलिदावानलशांतकरणे वारिदायते इति प्रतिपादितम् "हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" ॥ "कृते तपः प्रशंसन्ति त्रेतायां ज्ञानमंडज ॥ द्वापरे यज्ञचर्यां च कलौ केशवकीर्तनम्" इत्यादिवाक्यान्यपि हरिभक्तिमेव दृढीकुर्वन्ति । अतो हरिभक्तिबोधकमिदं पुस्तकं भक्तजनमनोरंजनाय मया स्वीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितमिति शिवम् ॥

आपका कृपाकांक्षी–

खेमराज श्रीकृष्णदास,

" श्रीवेङ्कटेश्वर " ( स्टीम् ) यन्त्रालयाध्यक्षः–मुंबई.

श्रीवेङ्कटेश्वराय नमः ।

# नारदपञ्चरात्र-भारद्वाजसंहिता ।

## सटीका ।

श्रुत्वा तु सकलान्धर्मान्सिद्धिमेषां च शाश्वतीम् ।
भूय एव मुनिश्रेष्ठमिदमूचुर्महर्षयः ॥ १ ॥

श्रीकृष्णाय नमः ॥ अथ तत्रभगवान् भरद्वाजो महामुनिः संसाराग्निसंविदीपनव्यपगतप्राणात्मसंजीवनेच्छया सकलवेदान्तेषु प्रतिपन्नन्यासाख्ययोगसकलधर्मोपदेशानन्तरमुपनिषत्कल्पेन संहिताशेषेणोपादिशत् । तत्र सम्यगुपपन्नानां शिष्याणां महर्षीणां प्रश्नकालप्रतीक्षाणां तादृशोपायश्रवणकौतूहलवतां प्रश्नश्लोकोऽयं श्रुत्वेत्याद्यः धर्मशब्दः अलौकिकश्रेयःसाधनपरः । यद्यप्यसौ सामान्यपरः तथापि प्रकरणवशात् निःश्रेयससाधनं परं वक्ति तच्च तत्तद्विद्याप्रतिनियतपरमेश्वरतत्तद्गुणविशेषविषयविशदतमाविच्छिन्नप्रियश्रुतिसन्ततिरूपविद्याबहुत्वाभिप्रायेण बहुवचनम् । सकलशब्देनावान्तरभेदभिन्नतदङ्गभूतकर्मज्ञानोक्तिः—श्रुत्वेति।न्यासाख्ययोगश्रवणप्रतिबन्धकनिवृत्तिसूचनम् । क्त्वाप्रत्ययस्तूपायान्तरश्रवणस्य तद्दौष्कर्म्यानुसन्धानद्वारा अव्यवहितानन्तरभाविन्यासाख्ययोगाविषयप्रश्नव्यवहितपूर्वभावित्वमाह । तुशब्देन पूर्वश्रुतधर्मदौष्कर्यानुसन्धानजनितवैक्लव्यरूपो विशेषो द्योत्यते । एषां धर्माणां शाश्वतीं तत्तद्धर्मप्रतिनियतां सिद्धिं फलरूपाम् । भक्तिस्तवव्यवधानेनापवर्ग प्रतिनियता सिद्धिः । ज्ञानयोगस्य भक्तियोगः । कर्मयो-



गस्य ज्ञानयोगः। यद्वा, तृतीयाध्यायोक्तप्रक्रियया विशिष्टतया व्यपदिष्टानां ज्ञानयोगव्यवधानमन्तरेणापि कर्मयोगद्वारा साक्षादेवात्मावलोकनम्। भूय इत्याचार्यवचनश्रवणात् तृतीय एवकारेण मुनिश्रेष्ठामिति परमाप्ततमत्त्वमभिप्रैति। इदमूचुर्महर्षय इति। तादृशोपायश्रवणेन सर्वेषामैककण्ठ्यं व्यञ्जयति। मुनिश्रेष्ठं महर्षय इति, शिष्याचार्यसमाजोऽतिरमणीय इति भावः॥ १॥

केनोपायेन भगवन्निह सर्वेऽपि जन्तवः।
प्राप्नुयुः परमां सिद्धिं सद्यो विगतकल्मषाः॥ २॥

केनोपायेनेति। इह अस्मिन् लोके सर्वेऽपि जन्तवः अत्रैवर्णिका अपि जन्तवः सद्यो विगतकल्मषाः सन्तः परमां सिद्धिं निःश्रेयसं प्राप्नुयुः। सर्ववर्णाधिकारिकः अपेक्षितकालमोक्षफल उपायः क इति प्रश्नार्थः। सद्यो विगतकल्मषा इत्यस्यायं भावः। आर्त्यतिशये सति यः सद्यो मोक्षं साधयति तादृशोपायः क इति॥ २॥

तेषां तद्वचनं श्रुत्वा भरद्वाजो महामनाः।
सस्मार परमं गुह्यं पुनश्चेदमभाषत॥ ३॥

तेषामिति। तेषामृषीणां तद्वचनं सर्ववर्णाधिकारिकक्षिप्रमोक्षफलदोपायविषयकं वचनं श्रुत्वा महामनाः प्रदिशतु भगवानशेषपुंसां हरिरपि जन्मजरादिकां समृद्धिमित्यादिप्रकारेण श्रीपराशरादिवत् सर्वेषामपि निरतिशयपुरुषार्थप्रतिलम्भकसाधनोपदेशौपयिकमानसौदार्यवान् भरद्वाजः परमं गुह्यं परमं रहस्यं सस्मार स्मृतवान्। पुनश्च पुनरिदं वक्ष्यमाणमभाषत॥ ३॥

---

( १ ) अनन्तरमिति शेषः। ( २ ) वार इति शेषः।

श्रूयतां संप्रवक्ष्यामि न्यासाख्यं योगमुत्तमम् ।
सिद्धिं चैवास्य परमां द्वयमेतच्छ्रुतं यथा ॥ ४ ॥

श्रूयतामिति । श्रूयतामित्यनेन श्रवणस्यार्थसिद्धत्वादन्यपरित्यागो लक्ष्यते । इदं परतया श्रोतव्यमित्यर्थः । न्यासाख्यं योगमुपायं संप्रवक्ष्यामि संप्राभ्यामुपसर्गाभ्यां न्यासोपदेशस्य तदङ्गतदवान्तरभेदविषयत्वं द्योत्यते ।उत्तमं भक्तियोगादप्यधिकं न्यासाख्यं योगम् अस्य न्यासाख्ययोगस्य परमां निरतिशयां सिद्धिम् एतद्द्वयं यथाश्रुतं आचार्यसकाशात् येनप्रकारेणाधीतं तथा संप्रवक्ष्यामीत्यर्थः ॥ ४ ॥

अयं च योगो वेदेषु वेदान्तेषु च गीयते ।
तथैव धर्मशास्त्रेषु दिव्यशास्त्रगणेषु च ॥ ५ ॥

न्यासयोगप्रमाणं निदर्शयति–अयमिति । अयं योगः वेदेषु कर्मभागेषु वेदान्तेषु ब्रह्मभागेषु तथैव धर्मशास्त्रेषु मन्वादिस्मृतिषु दिव्यशास्त्रगणेषु श्रीपञ्चरात्रसंहितासु च गीयते 'तस्माद्वध्यं प्रपन्नं न प्रयच्छन्ति' इत्यादिभिर्वेदेषु 'ब्रह्मणेत्वा महसेओमित्यात्मानं युञ्जीत' इत्यादिभिर्वेदान्तेषु 'शरणागतबालस्त्रीहिंसकान् संवसेन्नतु' इत्यादिभिर्धर्मशास्त्रेषु ' प्रपत्तिं तां प्रयुञ्जीतस्वाङ्गैः पञ्चभिरावृताम् ' इत्यादिभिर्दिव्यशास्त्रगणेषु च प्रतिपाद्यत इत्यर्थः ॥ ५ ॥

अनेनैव हि कर्माद्या योगाः सिध्यन्ति योगिनाम् ।
सिद्धिर्न तद्व्यपेक्षास्य तस्मादेनं परं विदुः ॥ ६ ॥

अनेनेति । न्यासाख्यं योगमुत्तममिति पूर्वोक्तमुत्तमत्वं हेतुद्वयेनोपपादयति हिशब्दः प्रमाणप्रसिद्धिं द्योतयति । अनेन न्यासेन योगिनां कर्माद्या योगाः कर्मज्ञानभक्तियोगाः



सिद्ध्यन्ति। अस्य न्यासस्य सिद्धिर्न तद्व्यपेक्षा न कर्मादिसकांक्षा तस्मात् कर्मयोगादिनिष्पत्तिहेतुत्वात् स्वयं तन्निरपेक्षत्वाच्च एवं न्यासं परं कर्मयोगादिभ्य उत्कृष्टं विदुः वृद्धा इति शेषः ॥ ६ ॥

निश्चितेऽनन्यसाध्यस्य परत्वेष्टस्य साधने ।
अयमात्मभरन्यासः प्रपत्तिरिति चोच्यते ॥ ७ ॥

न्यासस्वरूपमाह—निश्चितेति। अयं न्यासाख्ययोगः अनन्यसाध्यस्य न्यासव्यतिरिक्तोपायान्तरासाध्यस्य इष्टस्य फलस्य साधने निश्चिते साधनत्वेनावधृते परमात्मनि आत्मभरन्यासः आत्मभरसमर्पणम्। अयमेव भरन्यासः प्रपत्तिरिति चोच्यते। अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकमित्यादिकमत्रानुसन्धेयम् ॥ ७ ॥

प्रायो गुणवशादेष कृतः सर्वत्र देहिनाम् ।
सर्वेषां साधयत्येव तांस्तानर्थानभीप्सितान् ॥ ८ ॥

भगवदेकविषयत्वं न प्रपत्तिमात्रस्य लक्षणं किन्तु मोक्षसाधनत्वं प्रपत्तेरेव। रजस्तमोमूलानां निःश्रेयसव्यतिरिक्ताः तत्तत्कामफलार्थनां प्रपत्तीनामन्येऽपि विषयास्सम्भवन्तीत्याह—प्राय इति। गुणवशात् रजस्तमःपारवश्यात्। सर्वत्र ब्रह्मरुद्रादिकेऽपि विषये कृत एष न्यासः सर्वेषां देहिनां तांस्तानभीप्सितानिष्टानर्थान्प्रायः साधयत्येव। एवकारेण सानुक्रोशसमर्थविषयायाःप्रपत्तेः फलाव्यभिचारो द्योत्यते। प्राय इत्यनेन क्वचिदसमर्थनिरनुक्रोशविषयायास्तस्याः फलव्यभिचारो द्योत्यते। मोक्षातिरिक्तपुरुषार्थपरायाः प्रपत्तेर्यः कश्चिदपि कारुणिकः समर्थो विषयो भवतीति श्लोकाभिप्रायः ॥ ८ ॥

अनन्तज्ञानशक्त्यादिकल्याणगुणसागरे ।
परे ब्रह्मणि लक्ष्मीशे मुख्योऽयं सर्वसिद्धिकृत् ॥ ९ ॥

मोक्षार्थस्य न्यासस्य तु भगवानेव विषय इत्याह—अनन्तेति। अनन्तज्ञानेत्यादिना अनन्तत्वमन्त्रेयत्ताराहित्यम्। तयोरनन्तत्वसामर्थ्ययोः सतोरपि ज्ञानाभावे इष्टानिष्टयोरपि ज्ञानाभावात तत्प्रापणनिर्वहणे न युज्येते। अत उक्तं ज्ञानेति। शक्तिः सामर्थ्यम् आदिशब्देन कारुण्यादिसंग्रहः आनन्त्यं ज्ञानादौ सर्वत्र द्रष्टव्यम् एतेन प्रपत्तव्यत्वपूर्त्तिरुक्ता। परे ब्रह्मणीति, परत्वविषयत्वात् मुख्यत्वं युज्यत इति भावः। मुख्यः श्रेष्ठः मोक्षोपाय इति यावत्। न केवलं भगवत्प्रपत्तेर्मोक्षमात्रफलकत्वम अपि तु तत्तदर्थिनां तत्तत्फलकत्वमपीत्याह। सर्वसिद्धिकृदिति सकलपुरुषार्थसाधनभूत इति भावः॥ ९॥

प्रशासितुरशेषाणामात्मनां परमात्मनः।
न हि प्रसादनं विष्णोरन्यदात्मार्पणादृते ॥ १० ॥

ननु निश्चितेऽनन्यसाध्यस्य परत्रेष्टस्य साधने इत्यनेन भगवत एवोपायत्वं कथितम्।तत्कथं प्रपत्तेरुपायत्वमिति शङ्कां वारयितुं प्रपत्तेः प्रसदनोपायत्वं तादृक् प्रसदनं प्रति निरतिशयोपायत्वं चाह-प्रशासितुरिति।अशेषाणामात्मनां प्रशासितुर्नियन्तुः तत्तत्कर्मानुरूपफलप्रदाननिरतस्येति यावत्।अनेन प्रसदनस्य साध्यत्वलाभाय कलुषोज्झितचित्तत्वमुक्तं परमात्मनो भगवतः अनेन प्राप्तिविषयकत्वात्प्रपत्तेः स्वरूपानुरूपत्वमुक्तम्।आत्मार्पणादृते आत्मसमर्पणमन्तरेणान्यत प्रसादनं प्रसदनसाधनं नह्यस्ति।यद्यप्युपासनस्यापि प्रसदनसाधनत्वमस्ति, प्रपत्त्यै तस्योक्तेः; प्रसदनसाधनं प्रपत्तिर्निदिध्यासनगत इत्याचार्योक्तेः।अथापि क्षिप्रमोक्षसाधनप्रश्नविषयत्वात् क्षिप्रप्रसदनसाधनं प्रपत्तेरन्यन्नास्तीत्यर्थः।प्रसदनद्वारामोक्षहेतुत्वान्न विरोध इति भावः ॥१०॥

अहमस्मि तवैवेति प्रपन्नाय सकृत्स्वयम्।
देवो नारायणः श्रीमान्ददात्यभयमुत्सुकः ॥ ११ ॥

प्रपत्तेर्भगवत्प्रसदनहेतुत्वं सकृदेव प्रपन्नायेत्यादिरूपशरण्यवचनप्रत्यभिज्ञापकेनोत्तरश्लोकेन द्रढयति-अहमिति । तवैवाहमस्मीति भरन्यासरूपं प्रपत्तिम् । सकृदेवकृतवते । अनेन जात्याद्यनियमसिद्धिः स्वयमित्यौत्सुक्यकार्यं स्वयं प्रपदनमाह भक्त्यादौ तु तेषामेवानुकम्पार्थमित्याद्युक्तरीत्या साहाय्यमात्रमेव न तु स्वयंप्रपदनमिति भावः । देव इत्यनेन प्रनष्टस्य यथालाभ इत्युक्तरीत्या अलभ्यलाभनिमित्तकविकासितमुखकमलत्वमुच्यते । नारायणः स्वाभाविकसम्बन्धबलेन चेतनलाभायावसरप्रतीक्षां कुर्वन्नित्यर्थः । श्रीमानित्यनेन तादिङ्गितपराधीनो विधाताखिलमित्युक्तप्रकारेण प्रपन्नाय अभयदानादिकमपि तत्प्रीत्यर्थमिति व्यज्यते । उत्सुकः अभयं भयाभावं सकृदेव ददाति प्रतिपादनान्तरराहित्येन सम्बन्धिपर्यन्तरक्षणं करोतीत्यर्थः । सर्वभूतेभ्य इति भावयन् ॥११॥

आत्यन्तिकीमनिष्टानां सद्यः शान्तिमभीप्सताम् ।
प्रपत्तिरञ्जसा कार्या न त्वशुद्धमुखी क्वचित् ॥ १२॥

क्षिप्रकारिण्या भगवत्प्रपत्तेर्विषयनियमोऽप्यस्तीत्याह-आत्यन्तिकीमिति । अनिष्टानामविद्याकर्मवासनारुचिप्रतिसम्बन्धसुखदुःखादीनाम् आत्यन्तिकीम् अनिष्टप्रागभावाक्षयसहचरितां सद्यः शान्तिमविलम्बितत्वध्वंसात्मिकामभीप्सतामभितः आकाङ्क्षमाणानां विलम्बसहानां प्रपत्तिर्भगवद्विषये अञ्जसा अव्यवधानेन कार्या । अशुद्धमुखी तु प्रतर्दनविद्यान्यायेन चेतनान्तरव्यवहिता न कार्येत्यर्थः । चेतनान्तरव्यवधाने तु तत्सायुज्यप्राप्त्यादिना प्राप्तिर्विलम्बिता भवेदिति भावः ॥ १२ ॥

प्राप्तुमिच्छन्परां सिद्धिं जनः सर्वोऽप्यकिञ्चनः ।
श्रद्धया परया युक्तो हरिं शरणमाश्रयेत् ॥ १३ ॥

प्रपत्तेर्भक्त्यपेक्षया अधिकारान्तरमप्यस्तीत्याह
सर्वोऽप्यकिञ्चनो जन इत्यनेन पपत्तेः सर्वाधिकारित्वम् आकिञ्चन्यरूपं मुमुक्षातिरिक्तं भक्त्यपेक्षया अधिकारान्तरं च कथितम्। श्रद्धया परया युक्त इत्यनेन महाविश्वासपूर्वकत्वमुच्यते। हरिं शरणमाश्रयेत भगवन्तमुपायत्वेन स्वीकुर्यात् ॥ १३ ॥

न जातिभेदं न कुलं न लिंगं न गुणक्रियाः ।
न देशकालौ नावस्थां योगो ह्ययमपेक्षते ॥ १४ ॥

जनः सर्वोऽप्यकिंचन इत्यत्रोक्तं सर्वाधिकारत्वं स्फुटयति–नेति। लिंगं ब्रह्मचर्यादिलिंगभूताजिनबन्धादि। गुणाः औदार्यादयः। क्रियाः योगादिक्रियाः। देशकालौ पुण्यदेशः पुण्य कालः अयं योगो न्यासः जातिभेदादिकं नापेक्षते ॥ १४ ॥

ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चान्तरजास्तथा ।
सर्व एव प्रपद्येरन्सर्वधातारमच्युतम् ॥ १५ ॥

नजाति भेदमित्युक्तमर्थं विवृणोति–ब्रह्मक्षत्रेति। सर्व धातारमच्युतमित्यनेन सर्वेषामप्यविशेषेण प्रपत्तृत्वं युक्त मिति युज्येत ॥ १५ ॥

प्रपत्तिं कारयन्त्येव सर्वभूतानि साधवः ।
अनपायहता सा तु तस्य तस्याशु सिद्धिदा ॥ १६ ॥

प्रपत्तेः सर्वाधिकारत्वे शिष्टाचारप्रमाणं दर्शयन् तस्या अपायैरनपहतत्वमपेक्षितमित्याह–प्रपत्तिमिति। अत्र पूर्वार्द्धेन शिष्टाचाररूपं प्रमाणमुत्तरार्द्धेन अनपायहतत्वं च प्रदर्श्यते। अपायांश्च अपायाधिकारे वक्ष्यति। आशु सिद्धिदेत्यस्यायं भावः। अपाया अपि न प्रपत्तिं स्वरूपेण नाशयन्ति, अपि तु कालविशेषनियतं फलोद्देशमन्तरेण प्रपत्तिमनुष्ठितवतः



पुंसः फलविलम्बं जनयन्ति। कालविशेषनियतफलोद्देशेनानुष्ठितवतस्त्वपाया एव न सम्भवन्ति।सम्भवन्तोऽपि वा त एव प्रपत्त्याः स्वार्हप्रायश्चित्तान्वयसम्पादनेन नाशयन्तीति ॥ १६ ॥

प्रपत्तिरानुकूल्यस्य सङ्कल्पोऽप्रतिकूलता ।
विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा ॥ १७ ॥
कृतानुकूल्यसंकल्पः प्रातिकूल्यं विवर्जयेत् ।
विश्वासशाली कृपणः प्रार्थयन् रक्षणं प्रति ॥ १८ ॥

अष्टाङ्गयोगन्यायेन प्रपत्तेरङ्गैः सह षाड्विध्यमाह-प्रपत्तीति। कृतेति च।आनुकूल्यस्य सङ्कल्पः अप्रतिकूलता प्रातिकूल्यवर्जनम्। विश्वासः रक्षिष्यतीति विश्वासः। वरणं गोप्तृत्ववरणम्। न्यासः आत्मभरन्यासः। कार्पण्यमाकिञ्चन्यानुसन्धानात्मकं कृपाजनककृपणवृत्तिनिरतत्वमित्येवं स्वाङ्गैः सह षड्विधा ॥ १७ ॥ १८ ॥

आत्मानं निक्षिपति यद्विप्रदेवस्य पादयोः ।
सा प्रपत्तिरियं सद्यः सर्वपापप्रमोचनी ॥ १९ ॥

आत्मानमिति- 'आत्मानं निक्षिपेद्धीमान् धिया देवस्य पादयोः' आत्मानं निक्षिपतीति यत् सा प्रपत्तिरित्यन्वयः।आत्मनिक्षेपाङ्गीभूतानुकूल्यसङ्कल्पादीन्यङ्गानीत्यर्थः। 'निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः' इत्यादिकं प्रमाणमत्रानुसन्धेयम्॥ १९॥

आर्त्तानामाशु फलदा सकृदेव कृता ह्यसौ ।
दृप्तानामपि जन्तूनां देहान्तरनिवारिणी ॥ २० ॥

ननु सद्यः पापप्रमोचनीत्युक्तम् तत्कथं प्रपत्त्यनन्तरं प्रपन्नानां देहानुवृत्तिरित्याशङ्कायामाह-आर्त्तेति। आर्त्तानां क्षणमपि संसारसम्बन्धमसहमानानाम् आशु फलदा शीघ्रफलदा अनेन

प्रपन्नानां देहसम्बन्धानुवृत्तिरात्त्यंभावनिबन्धना न प्रपत्त्यसमर्थतानिबन्धना सत्यामार्त्तौ तदेव मोक्षं प्रयच्छतीति ज्ञाप्यते। तर्हि दृप्तानां कदा मोक्षः इत्यपेक्षायामाह। दृप्तानामपीत्यादि। देहान्तरनिवारिणीत्येतदप्युपलक्षणार्थं यावानंशः शोकविषयः तावन्तं वारयतीत्यर्थः ॥ २० ॥

एषा च त्रिविधा ज्ञेया करणत्रयभेदतः ।
गुणत्रयविभेदादप्येकैका त्रिविधा पुनः ॥ २१ ॥

एवमार्तदृप्तभेदेन भेदमुक्त्वा करणभेदेनापि भेदमाह-एषेति। एकैका, कायिकी, वाचिकी, मानसी च स्वमूलभूतसत्त्वरजस्तमोरूपगुणभेदेन प्रत्येकं पुनस्त्रिविधा भवति। एवं नवविधेत्यर्थः ॥ २१ ॥

प्रणामांकनमुख्येन न्यासलिंगेन केवलम् ।
गुर्वधीना हि भवति प्रपत्तिः कायिकी क्वचित् ॥ २२ ॥

तत्र कायिकीं प्रपत्तिमाह-प्रणामेति। प्रणामः साष्टाङ्गादिरूपः। अङ्कनं चक्रादिचिह्नधारणं मुख्यं प्रधानं यस्य। तेन ऊर्द्ध्वपुण्ड्रादिधारणरूपेण न्यासलिङ्गेन गुर्वधीना आचार्यनियमनपूर्विका कायिकी प्रपत्तिर्भवति। आचार्यनियमनपूर्वकं क्रियमाणं प्रणामाङ्कनादिरूपं प्रपत्तिलिङ्गं कायिकी प्रपत्तिरित्यर्थः। प्रपत्तिलिङ्गे प्रपत्तिशब्दो गौणः क्वचिदित्यनेन वा तूलकादीनां प्रपत्तावनधिकारित्वात् तेष्वियमेव प्रपत्तिरित्यर्थः ॥ २२ ॥

अविज्ञातार्थतत्त्वस्य मन्त्रमीरयतः परम् ।
गुर्वधीनस्य कस्यापि प्रपत्तिर्वाचिकी भवेत् ॥ २३ ॥

अथ वाचिकीं प्रपत्तिमाह-अविज्ञातेति। अविज्ञातम् अर्थतत्त्वं मन्त्रार्थतत्त्वं येन तथोक्तस्य गुर्वधीनस्य आचार्यायत्तस्य



मन्त्रमीरयतः परं मन्त्रमात्रमुच्चारयतः कस्यचिद्वाचिकी प्रपत्तिर्भवति । आचार्योच्चारणपूर्वकप्रपत्तिमात्रोच्चारणं वाचिकी प्रपत्तिरित्यर्थः ॥ २३ ॥

न्यासलिंगवतांगेन धियार्थज्ञस्य मन्त्रतः ।
उपासितगुरोः सम्यक् प्रपत्तिर्मानसी भवेत् ॥ २४ ॥

अथ मानसप्रपत्तिमाह–न्यासेति । न्यासलिङ्गवता प्रपत्तिलिङ्गचक्रांकनादिमताङ्गेन उपलक्षितस्य उपासितगुरोः अर्थज्ञस्य मन्त्रार्थज्ञानवतः पुंसः धिया मन्त्रार्थविषयिण्या बुद्ध्या मन्त्रतः मन्त्रेण कृता सम्यक् प्रपत्तिः सङ्गभरन्यासात्मिका मानसी प्रपत्तिर्भवति । आचार्योपास्तिपूर्वकम् । आचार्यान्मूलमन्त्रार्थमवगत्य तदर्थानुसन्धानपूर्वकमाचार्यानुज्ञायां क्रियमाणानुकूल्यादिभिरङ्गैर्विशिष्टा प्रपत्तिर्मानसीप्रपत्तिरित्यर्थः ॥ २४ ॥

यदीच्छन्प्रतिकूलानि सर्वभूतानुकम्पिनम् ।
प्रपद्यते हरिं मोहात्सा प्रपत्तिस्तु तामसी ॥ २५ ॥

एतत्प्रपत्तित्रयस्यापि प्रत्येकं गुणभेदेनापि त्रैविध्यस्य विवक्षितत्वान्मोक्षप्रतिकूलप्रपत्तिस्वरूपमाह–यदीति । प्रतिकूलानि भूतहिंसादीनि इच्छन् आकाङ्क्षमाणः सर्वभूतानुकंपिनं सर्वजीवदयापरं हरिं मोहात् यदि प्रपद्यते सा प्रपत्तिस्तामसी सर्वभूतानुकम्पिनामित्यस्य न भूतद्रोहेच्छया तदनुकम्पिप्रपदनमिहकार्यमिति भावः ॥ २५ ॥

अभीप्सन्विविधान्कामान् यदकामैकवत्सलम् ।
प्रपद्यते हृषीकेशं तामिमां राजसीं विदुः ॥ २६ ॥

अथ राजसीं प्रपत्तिमाह–अभीप्सन्निति । विविधान्कामान् ऐहिकामुष्मिकभोगान् अभीप्सन् प्राप्तुमिच्छन् अकामैकवत्सलं

निष्कामैकप्रियं हृषीकेशम् इन्द्रियगणनियन्तारं हरिं प्रपद्यत इति यत् सा राजसी प्रपत्तिः। अकामैकवत्सलमित्यस्य पूर्ववदभिप्रायः। हृषीकेशमित्यस्य तस्यैव चरणग्रहणे न्यास एव भोगेच्छामपि निवर्त्तयतीति भावः ॥ २६ ॥

परित्यज्याखिलान् कामान् भक्त्यैवात्मेश्वरं हरिम्।
प्रपद्यते दास्यरतिर्यदेषा सा तु सात्त्विकी ॥ २७ ॥

सात्त्विकप्रपत्तिस्वरूपमाह—परित्यज्येति। अखिलान् कामान् त्रैवर्गिकान् दास्यरतिः कैङ्कर्यरूपफलेच्छुः स्पष्टमुच्यते ॥ २७ ॥

हीनाहीनतमाश्चैव रजसा तमसा कृताः।
सत्त्वेन याः प्रयुज्यन्ते मुख्यास्ताः परिकीर्तिताः॥२८॥

राजसतामसनिन्दापूर्वकं सात्त्विकप्रपत्तेरुत्कर्षमाह—हीनेति। याः प्रपत्तयः रजसा कृता हीनाः तमसा कृता हीनतमाः। सत्त्वेन प्रयुक्ता मुख्या इत्यर्थः ॥ २८ ॥

सत्त्वजा मानसी त्वेका तत्र मुख्यतमा मता।
तया हि परमां सिद्धिं सद्यो यान्ति मनीषिणः ॥ २९ ॥

सत्त्वमूलानां प्रपत्तीनां मुख्यत्वमुक्त्वा तन्मूला मानसी प्रपत्तिर्मुख्यतमेत्याह—सत्त्वजेति। तत्र वाचिककायिकमानसप्रपत्तिषु सत्त्वजा सत्त्वमूला मानसी प्रपत्तिरेकैव मुख्यतमा सत्त्वमूलत्वान्मुख्यत्वम्। मानसत्वान्मुख्यतमत्वं फलाधिक्यं सम्भवति। हेत्वधीनत्वेऽपि तादृशहेतुं न्यस्य विलक्षणफलजनकत्वमन्तरेण न सम्भवतीति मत्वा सहजमानसप्रपत्तिविलक्षणफलहेतुत्वमाह। तया हि परमाम् आत्यन्तिकीं सिद्धिं सद्यो यान्ति हि यतः ततो मुख्यतमेत्यर्थः ॥ २९ ॥

प्रणामः कीर्तनं वापि स्मरणं वापि केवलम् ।
एकैकमपि चांगानां प्रपत्तिः प्राज्ञसंश्रयात् ॥ ३० ॥

ननु प्रणामाङ्कनरूपस्य न्यासचिह्नस्य कायिकस्य प्रपत्तिमन्त्रोच्चारणस्य वाचिकस्य च कथं प्रपत्तित्वं तयोरेतल्लक्षणलक्षितत्त्वात् । न च प्रपत्तिकार्यकारित्वात् तत्र तदुपदेशः अतल्लक्षणलक्षितस्य तत्कार्यकारित्वायोगात् न च तल्लक्षणत्वात्तन्मात्रं पाठान्तरम् । मन्त्रत्वाच्च गौणस्तद्व्यपदेशः तथा सति मोक्षार्थप्रपत्तेस्त्रैविध्यकथनमयुक्तं स्यात् । वाचिककायिकप्रपत्त्योर्मुक्तिं प्रति प्रपत्तिलक्षणलक्षितत्वेनासाधकत्वादित्याशङ्क्य प्रपत्तिकार्यकरत्वात्कायिकवाचिकप्रपत्त्योः प्रपत्तित्वमभिसन्धाय कायिकवाचिकमानसिकप्रपत्त्येकदेशः प्रणामादिरेव प्राज्ञसंश्रयात् प्रपत्तिकार्यकरत्वेसम्भवतीति वक्तव्यं कायिकवाचिकप्रपत्त्योः प्रपत्तिकार्यकरत्वमित्याभिप्रायेणाह-प्रणाम इति प्रणामः कायिकप्रपत्त्येकदेशः पूर्वं प्रणामांकनमुख्येनेति श्लोके अङ्कनस्याप्युक्तत्वात् । कीर्त्तनं वाचिकप्रपत्त्येकदेशः मन्त्रन्तरेणे केवलकीर्त्तनस्य तदेकदेशत्वात् स्मरणं मानसिकप्रपत्त्येकदेशः एकैकमपि चाङ्गानामिति मानसप्रपत्त्येकदेशकथनम् आनुकूल्यसंकल्पप्रभृत्यङ्गविशिष्टस्यात्मभरन्यासस्य मानसप्रपत्तित्वात् । ननु कथमेतावन्मात्रस्य प्रपत्तित्वमत आह ।प्राज्ञसंश्रयादिति। शिष्यार्थमपि प्राज्ञेनाचार्येणैव प्रपत्तेरनुष्ठितत्वात् । प्रणामादेस्तदन्वयज्ञापकत्वात्प्रपत्तित्वं युज्यते इति भावः ॥ ३० ॥

अन्वयादपि चैकस्य सम्यङ्न्यस्तात्मनो हरौ ।
सर्वे एव प्रमुच्येरन्नराः पूर्वे परे तथा ॥ ३१ ॥

भगवन्न्यस्तभरस्य सम्बन्धिनोऽपि मोक्षं लभन्त इत्याह-अन्वयादिति।साङ्गमात्मात्मीयभरन्यासं कृतवत इत्यर्थः ॥३१॥

बालमूकजडान्धाश्च पंगवो बधिरास्तथा ।
सदाचार्येण संदृष्टाः प्राप्नुवंति परां गतिम् ॥ ३२ ॥

सदाचार्यकटाक्षविषयीकृतानामपि मोक्षः सम्भवति, तद्वं-श्यानां मोक्षो भवतीति किमुत वक्तव्यमित्यभिप्रायेणाह-बालेति। संदृष्टाः मदीयत्वाभिमानपूर्वकं दृष्टा इति भावः॥३२॥

गुरुणा योऽभिमन्येत गुरुं वा योऽभिमन्यते ।
तावुभौ परमां सिद्धिं नियमादुपगच्छतः ॥ ३३ ॥

ननु बालादयो गुरुं गुरुत्वेनाभिमन्तुं न ज्ञास्यंति। ततः कथं तेषां मुक्तिरित्यत इत्याह-गुरुणेति । गुरुणा योऽभिमन्येत मदीयोयं मम रक्ष्य इत्यभिमानेन :वा वीक्ष्येत । गुरुं वा यो-ऽभिमन्यते । एकलव्यादिन्यायेन ममायं रक्षको गुरुरित्यभि-मानेन गुरुं यः आचार्यस्यात्मीयभरन्यासवेलायामुभयवि-धाभिमानस्य गुर्वन्वयसम्पादकत्वेन नियमेन तत्प्रपत्तिद्वारा सिद्धिहेतुत्वं तत्प्रपत्तिवेलायामनन्वये पश्चाद्गुरुकर्तृकस्वप्रपत्त्य-नुष्ठानपर्यवसाने न्याससिद्धिहेतुत्वमिति बहु मनुते । तावुभौ गुर्वभिमानविषयौ गुरुर्बहुमन्ताचेत्युभौ नियमात् अव्यभि-चारेण परमां सिद्धिं मुक्तिम् उपगच्छतः ॥ ३३ ॥

ज्ञानतस्त्वनुपेतस्य ब्रह्मचर्यमभीप्सतः ।
वृथैवात्मसमित्क्षेपो जायते कृष्णवर्त्मनि ॥ ३४ ॥

पुस्तकनिरीक्षणादिना ज्ञानं सम्पाद्य आचार्य समाश्रय-णमन्तरेण प्रपत्तिमनुतिष्ठतां वेषसंवादकत्वेन प्रपत्त्यनुष्ठानपर्य-वसानेन सिद्धिहेतुत्वमिति न किञ्चित्फलमित्याह-ज्ञानेति । ज्ञानतः प्रपत्तिस्वरूपतदङ्गतत्प्रकारान् पुस्तकनिरीक्षणादिना सम्यग् ज्ञातवतोऽप्यनुपेतस्य आचार्योपसत्तिमकृतवतः ब्रह्म-

चर्यं परब्रह्मानुभवपूर्वकं तत्कैङ्कर्यमाप्तुमिच्छतः पुंसः कृष्ण इति वर्त्म उपायः तस्मिन्सिद्धोपाये कृतः आत्मसमित्क्षेपः । आत्मसमर्पणं वृथैव जायते न किञ्चित्फलमित्यर्थः । अर्थान्तरे अनुपेतस्य उपनयनकृतिशून्यस्य ब्रह्मचर्यकामस्य कृष्णवर्त्मनि वह्नौ आत्मनः समिधां क्षेपो वृथैव जायते तद्दृष्टान्तत्वेनान्वयः॥३४॥

शास्त्रादिषु सुदृष्टापि साङ्गा सह फलोदया ।
न प्रसीदति वै विद्या विना सदुपदेशतः ॥ ३५ ॥

उक्तमर्थं विशदयति-शास्त्रेति । विद्या ब्रह्मविद्या न प्रसीदति, प्रसन्ना न भवति, फलाय न भवतीत्यर्थः ॥ ३५ ॥

कामं लोकप्रमाणस्य कामाः सिध्यन्ति कामिनः ।
गृहीतसत्पदस्यैव निरपायफलोदयः ॥ ३६ ॥

ननु किमाचार्योपदेशेन कृष्णादाविव प्रमाणेन इष्टसाधनतां ज्ञात्वा तदनुष्ठाने फलावश्यंभावादित्याशङ्क्याह-काममिति । लोकप्रमाणस्य, लोकशब्दः प्रत्यक्षानुमानतन्मूललौकिकशब्दपरः प्रत्यक्षादिप्रमाणाधीनप्रवृत्तेः कामिनः प्रत्यक्षादिभिर्गृहीतेष्टसाधनतया कृष्यादिभिः कामं कामाः सिद्ध्यन्ति सिद्ध्यन्तु निरपायफलोदयः मोक्षस्तु गृहीतसत्पदस्यैव समाश्रिताचार्यचरणयुगलस्यैव । अयं भावः । लौकिकं हि प्रमाणं कृष्यादाविष्टसाधनतां कृष्यादित्वेनैव बोधयति । न त्वाचार्याधीनकृष्यादित्वेन । अलौकिकप्रमाणम् । आचार्याधीनब्रह्मविद्यात्वेनेष्टसाधनतामवगमयतीति अतन्मूलायास्तस्याः निष्फलत्वमेव युक्तमिति । गृहीतसत्पथस्येति पाठे सत्पथः शास्त्रम् । शास्त्रोक्तक्रमेण आचार्योपसत्तिं कृतवत इत्यर्थः । अभिप्रायस्तु पूर्ववत् ॥ ३६ ॥

न्यासे वाप्यर्चने वापि मन्त्रमेकान्तिनः श्रयेत्।
अवैष्णवोपदिष्टेन मन्त्रेण न परा गतिः ॥ ३७ ॥

एवमाचार्योपदेशस्यावश्यकत्वमुक्त्वा तत्र त्वेकान्तिन एवाचार्यत्वम् । न त्ववैष्णवस्येत्याह—न्यास इति । न्यासः प्रपत्तिः। अर्चनं भगवत्समाराधनम्। न्यासमन्त्रम् आराधन-मन्त्रं च । एकान्तिनः अनन्ययाजिनः सकाशात् श्रयेत् भजेतेति यावत्। स्पष्टमन्यत् ॥ ३७ ॥

प्रपित्सुर्मन्त्रनिरतं प्राज्ञं हितपरं शुचिम्।
प्रशान्तं नियतं वृत्तौ भजेद्द्विजवरं गुरुम् ॥ ३८ ॥

आचार्यलक्षणमाह—प्रपित्सुरिति । प्रपित्सुः प्रपत्तु मिच्छुः । मन्त्रनिरतम्—यद्वा मन्त्रानुसन्धानेन सहेतिवत् सर्वदा मन्त्रानुसन्धाननिरतं प्राज्ञं तदर्थाभिज्ञम् । हितपरं शिष्टशिष्यहितनिरतम् । शुचिम् अर्थाकाङ्क्षाद्यशुद्धिरहितम्। प्रशान्तं निगृहीतेन्द्रियग्रामम्। वृत्तौ वक्ष्यमाणविहिताचारादि-रूपवृत्तौ नियतं द्विजवरं गुरुं भजेत् । गुरुत्वेन समाश्रये-दित्यर्थः ॥ ३८ ॥

सप्तपूरुषविज्ञेये सन्ततैकान्तिनिर्मले।
कुले जातो गुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुः ॥ ३९ ॥

अयमेव गुरुः सत्कुलप्रसूतश्चेत् श्रेष्ठतम इत्याह—सप्तपूरुषेति । पितृपितामहादिक्रमेण सद्वृत्तैः सप्तभिः पूरुषैः विज्ञेये ज्ञातुं योग्ये। सन्ततम् अविच्छिन्नम् एकान्तिनः नियमेन निर्मले शुद्धे तस्मिन्कुले जातः गुणैः पूर्वश्लोकोक्तमन्त्रनि-रतत्वादिगुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुः पूर्वोक्तगुणैर्युक्तः शिष्टः स एवात्रोक्तकुले जातश्चेत् श्रेष्ठतम इत्यर्थः ॥ ३९ ॥

स्वयं वा भक्तिसम्पन्नो ज्ञानवैराग्यभूषितः ।
स्वकर्मनिरतो नित्यमर्हत्याचार्यतां द्विजः ॥ ४० ॥

सत्कुलप्रसूतत्वं तु आचार्यस्य अतिशयः आचार्यत्वप्रयोजको धर्मः । आचार्यत्वस्य तद्धृद्धप्राप्तव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वाभावात् । सत्यपि तस्मिन् ज्ञानशक्त्यादिवर्जितत्वे आचार्यत्वाभावाच्चेति श्लोकद्वयेनाह । स्वयमिति । स्वयं वा भक्तिसम्पन्नः स्वपित्रादीनां भक्तिशून्यत्वेन अकुले जातोऽपि क्रमेण आचार्यताम् अन्यं प्रत्याचार्यतामर्हतीत्यर्थः ॥ ४० ॥

नाचार्यः कुलजातोऽपि ज्ञानभक्त्यादिवर्जितः ।
न च हीनवयोजातिः प्रकृष्टानामनापदि ॥ ४१ ॥

नाचार्य इति । कुलजातोऽपि सप्तपूरुषविज्ञेयसन्तत्यैकान्तिनिर्मलकुलजातोऽपि ज्ञानभक्त्यादिवर्जितः आचार्यो न भवति । हीनवयोजातिः अपकृष्टवया अपकृष्टजातिश्च क्रमेण प्रकृष्टानाम् उत्कृष्टवयसाम् उत्कृष्टजातीनां च आचार्यो न भवति । अयं नियमः कालविशेषनियत इत्याह । अनापदीति । प्रकृष्टवयोजातित्वाचार्यलक्षणलक्षिताभावात् ॥ ४१ ॥

न जातु मन्त्रदा नारी न शूद्रो नान्तरोद्भवः ।
नाभिशस्तो न पतितः कामकामोऽप्यकामिनः ॥४२॥

एवमापदि हीनजातीनामप्याचार्यत्वमनुज्ञातं तेन स्त्रीशूद्रादीनामपि प्राप्तमाचार्यत्वं निषेधति—न जात्विति । जातु कदाचिदपि आपद्यपीत्यर्थः । नारी जातु मन्त्रदा न भवति आचार्यत्वं नार्हतीत्यर्थः । शूद्रोऽपि मन्त्रदो न अन्तरोद्भवः प्रतिलोमजातोऽपि मन्त्रदो न । अभिशस्तः महापातकयो-

गवानपि मन्त्रदो न। पतितोऽपि न। अकामिनः निष्कामस्य कामकामोऽपि मन्त्रदो न भवतीत्यर्थः॥ ४२॥

स्त्रियः शूद्रादयश्चैव बोधयेयुर्हिताहितम्।
यथार्हं माननीयाश्च नार्हन्त्याचार्यतां क्वचित्॥ ४३॥

अप्रधानहिताहितोपदेष्टृत्वस्य स्त्रीशूद्रादीनामप्यनिषिद्ध-त्वं तादृशहिताहितबोधकेषु तेषु कर्त्तव्यं वृत्तिविशेषं चाह-स्त्रिय इति। यथार्हं माननीयाः। उच्छिष्टाशनादिवर्जं माननीयाः स्पष्टमन्यत्॥ ४३॥

किमप्यत्राभिजायन्ते योगिनः सर्वयोनिषु।
प्रत्यक्षितात्मनाथानां नैषां चिन्त्यं कुलादिकम्॥४४॥

पूर्वश्लोकद्वयेन स्त्रीशूद्रादीनामाचार्यत्वं निषिद्धमित्युक्तम्। इदानीं तु प्रत्यक्षितात्मनाथविषये तु निषेधो नास्तीत्याह किमिति। अत्र लोके योगिनः सर्वयोनिषु निकृष्टास्वपि योनिषु अभिजायन्ते किमपि किं वा कारणं प्रयोजनं नावजानीम इत्यर्थः। किमपि प्रतिसन्धाय सर्वयोनिषु अभि-जायन्त इति वान्वयः। प्रत्यक्षितात्मनाथानां साक्षात्कृतभग-वत्तत्त्वानाम् एषां योगिनां कुलादिकं न चिन्त्यम् एतेन हीन-कुलजाताः आचार्यतां नार्हन्तीति न चिन्तनीयम् अपि तु तेऽपि तु आचार्यतामर्हन्तीत्यपीत्यर्थः॥ ४४॥

विश्वात्मन्यात्मनो न्यासं धिया वृत्तिं च शाश्वतीम्।
मन्त्रेणोच्चारयेद्यस्तु स आचार्यः परो मतः॥ ४५॥

एवमाचार्यलक्षणमभिधाय यस्तु मन्त्रेण प्रपत्तिं कार-येत् वृत्तिं वक्ष्यमाणां विहिताचारदृष्टिभक्त्याद्यात्मिकां च मन्त्रे-

णोच्चारयेत् । स उपकारातिशयात् पर आचार्य इत्याह-विश्वात्मनीति । सर्वान्तर्यामिणि भगवति आत्मनः शिष्यस्य न्यासं रक्ष्यत्वेन समर्पणं प्रपत्तिमिति यावत् धिया ज्ञानेन शाश्वतीं वृत्तिं च यो मन्त्रेणोच्चारयेत् स पर आचार्यो मतः ॥ ४५ ॥

शान्तोऽनसूयुः श्रद्धावान् गुर्वर्थार्थात्मवृत्तिकः ।
शुचिः प्रियहितो दान्तः शिष्यश्चोक्तो मनीषिभिः ४६

अथ शिष्यलक्षणमाह-शान्त इति । शान्तः अचलितमनाः अनसूयुः गुणेषु दोषाविष्करणमसूया तद्रहितःश्रद्धावान् आस्तिक्यसम्पन्नः । अर्थाः धनानि,आत्मवृत्तयः स्वव्यापाराश्च गुर्वर्थाः यस्य सः गुर्वर्थार्थात्मवृत्तिकः। शुचिः शुद्धः । प्रियहित आचार्यविषये प्रियहितपरः । नियमातिक्रमे रहसि बोधयेदित्यादिविधेः कदाचिद्रहसि हितोपदेशस्याभिमतत्वाद्धितपरत्वमविरुद्धमादान्तः निगृहीतेन्द्रियः निषिद्धविषयेषु विमुखःविहितेषु च विषयेषु अत्यासङ्गरहित इत्यर्थः । वृत्त्यातिरिक्तलौकिकव्यापारेभ्य उपरतः। सुधीः उपदिष्टार्थग्रहणसमर्थबुद्धिः ॥ ४६ ॥

न मत्तोन्मत्तपतिताभिशस्तक्रूरनास्तिकाः ।
नानर्थिनो न चाज्ञाताः कर्तव्या मन्त्रगामिनः ॥ ४७ ॥

शिष्येषुवर्ज्यानाह-नेति । अज्ञाताः अपरीक्षिताः ॥ ४७ ॥

स्त्रीणां च पतिमित्रादीननतिक्रम्य सत्तमान् ।
अनुज्ञया वाप्यन्येभ्यः स्मृतो मन्त्रपरिग्रहः ॥ ४८ ॥

स्त्रीणांचेति । पतिश्च पिता चेति द्वन्द्वः । आदिशब्देन श्वशुरादिसङ्ग्रहः । पत्युः पिता श्वशुर इत्येके । सत्तमान् । उक्ताचार्यत्वलक्षणलक्षितान् उक्तलक्षणाभावे पतिपित्रादयोऽपिनाचार्या इति भावः। अनुज्ञया पतिपित्रादीनामनुज्ञया । वा-

शब्दो भिन्नक्रमः। अन्येभ्यो वा पतिपित्रादिव्यतिरिक्तेभ्योऽपि वा मन्त्रपरिग्रहः स्मृतः॥ ४८॥

वैदिकास्तान्त्रिकाश्चैव यथार्था लौकिकास्तथा।
प्रपत्तौ विहिता मन्त्रास्तत्र तत्र व्यवस्थया॥ ४९॥

पूर्वं 'विश्वात्मन्यात्मनो न्यासं धिया वृत्तिं च शाश्वतीम्। मन्त्रेणोच्चारयेद्यस्तु' इत्यत्र प्रपत्तेर्मन्त्रेणोच्चारणमुक्तम्। स मन्त्रो वैदिकस्तान्त्रिको वेत्यपेक्षायामाह—वैदिकास्त्विति। यथार्था वैदिकतान्त्रिकमन्त्रसदृशार्थास्तु तत्र व्यवस्थया त्रैवर्णिकानां वैदिकास्तान्त्रिकाश्चाशूद्रादीनां तान्त्रिकाः प्रतिलोमजानां वैदिकादिमन्त्रसमानार्था लौकिका इति व्यवस्था द्रष्टव्या॥ ४९॥

न्यासिनो न्यास एव स्यान्निष्ठा तत्पूर्विकाः क्रियाः।
व्यापकैर्नैष्ठिकैर्वान्यैः कुर्यात्तेऽप्यर्पणे मताः॥ ५०॥

अथ कुत्र मन्त्रे निष्ठेत्यपेक्षायामाह—न्यासिन इति। न्यासिनः प्रपन्नस्य न्यास एव प्रपत्तिप्रतिपादकमन्त्ररत्न एव निष्ठा तस्यैव नित्यजप इत्यर्थः। क्रिया अर्चनादिक्रियास्तत्पूर्विकाः तन्मन्त्रपूर्विकाः कुर्यात्। व्यापकैः विष्णुगायत्र्यामाम्नातैः षडष्टद्वादशाक्षरैः नैष्ठिकैः निष्ठामन्त्रैरन्यैः मन्त्ररत्नव्यतिरिक्तैर्वा कुर्यात्। मन्त्ररत्नव्यतिरिक्तेष्वपि व्यापकेषु वा निष्ठा क्रियाश्च तत्पूर्विका भवितुमर्हन्तीत्यर्थः। ननु तेषां प्रपत्तिप्रतिपादकत्वाभावात् प्रपन्नस्य कथं तेषु निष्ठा विधीयत इत्याह। तेऽप्यर्पणे मता इति तेषामपि नमःशब्दादिविशिष्टत्वात्प्रपत्तिप्रतिपादकत्वमस्तीत्यर्थः॥ ५०॥

करेण स्पर्शयन् गात्रं मन्त्रविद्भावयेद्दृशा।
एषा वा सर्ववर्णानां दीक्षेत्याह मुनिः स्वयम्॥ ५१॥

अर्चनादिक्रियायाः मन्त्राणां च दीक्षितैरनुष्ठेयत्वाद्दीक्षास्वरूपमाह-करेणेति । मन्त्रविदाचार्यः करेण गात्रं शिष्यस्य देहं स्पर्शयन् स्पृशन् दृशा भावयेत्पश्येदिति यतः सर्वत्रर्णानां दीक्षेति मुनिर्भरद्वाजः स्वयमाह ॥ ५१ ॥

यां सिद्धिं वैष्णवैर्मन्त्रैराधत्ते वैष्णवो गुरुः ।
सर्ववेदधरोऽप्यन्यो नान्यैः कुर्वीत तादृशीम् ॥५२॥

वैष्णवेन गुरुणा मन्त्रैरपि वैष्णवैरेव भवितव्यमित्याह-यामिति । वैष्णवैर्मन्त्रैर्यादृशीं सिद्धिम् आधत्ते सर्ववेदधरोऽप्यन्यः अन्यैरवैष्णवैर्मन्त्रैः तादृशीं न कुर्वीत ॥ ५२ ॥

वैदिकास्तान्त्रिकाश्चैव द्वये मुख्या द्विजन्मनाम् ।
शूद्रानुलोमजातीनां मन्त्राः स्युस्तान्त्रिकाः परम् ॥५३
भाषाख्या लौकिका मन्त्राः प्रपत्त्यर्थविभावनाः ।
सर्वेभ्यः प्रतिलोमेभ्यो देयाः कामं द्विजातिभिः ॥५४॥

वैदिकास्तान्त्रिकाश्चैवेति श्लोकोक्तां मन्त्रे व्यवस्थां विशदयति-वैदिक इत्यादिश्लोकद्वयेन । भाषाख्या इतिलौकिकशब्दार्था भाषारूपा इत्यर्थः । प्रपत्त्यर्थविभावनाः प्रपत्तिरूपमर्थं विभावयन्तीति प्रपत्त्यर्थविभावनाः प्रपत्तिप्रकाशका इत्यर्थः द्विजातिभिरिति भाषारूपमन्त्रदानमपि द्विजातिभिरेव कर्तव्यमिति भावः ॥ ५३ ॥ ५४ ॥

मन्त्रं नियतमग्र्याणां यो हीनाय प्रयच्छति ।
स वै हीनगुरुर्निन्द्यस्तेन सार्द्धं पतत्यधः ॥ ५५ ॥

अत्रैवर्णिकादिभ्यो वैदिकादिमन्त्रप्रदाने प्रत्यवायमाह-मन्त्रमिति । अग्र्याणां त्रैवर्णिकानां नियतं वैदिकादिकमित्यर्थः । हीनाय अत्रैवर्णिकाय वैदिकं प्रतिलोमजाय तान्त्रिकं च प्रयच्छन्पततीत्यर्थः ॥ ५५ ॥

तदेवं स्वोचितैरेव मन्त्रैर्मन्त्रविदाश्रयाः ।
श्रयेयुः शरणं सर्वे सर्वभूतेश्वरं हरिम् ॥ ५६ ॥

तदेवमिति । मन्त्रविदाश्रयाः मन्त्रविदाचार्यसमाश्रयाः । सर्वभूतेश्वरमिति तस्य सर्वभूतेश्वरत्वात् सर्वेऽपि शरणं गन्तुमर्हा इत्यर्थः ॥ ५६ ॥

पुण्येऽनुकूले समये देशे भागवते शुभे ।
निमज्ज्य नियतस्तीर्थे प्रणिपत्याश्रयेद्गुरुम् ॥ ५७ ॥

पुण्येति । इदं च अनापद्विषयम् । आपदि तु न देशकालादिनियमः । 'स एष देशः कालश्च' इत्याद्युक्तेः । 'न देशकालौ नावस्थां योगोह्ययमपेक्षते' इति प्रागभिधानाच्च ॥ ५७ ॥

आचार्यश्चोपसन्नाय भक्त्याभ्यर्च्य जनार्दनम् ।
गुरून्प्रणम्य मन्त्रेण प्रपत्तिं प्रतिपादयेत् ॥ ५८ ॥

अथाचार्यकृत्यमाह—आचार्यश्चेति । भक्त्या उपसन्नाय प्राप्ताय शिष्याय जनार्दनमभ्यर्च्य गुरून्प्रणम्य मन्त्रेण प्रपत्तिं प्रतिपादयेत् दद्यात् गुरुपरम्पराप्रणामपूर्वकं मन्त्रेण प्रपत्तिं कारयेदित्यर्थः ॥ ५८ ॥

अथ स्त्रीशूद्रसङ्कीर्णानिर्मलापतितादिषु ।
अनन्येनान्यदृष्टौ च कृतापि न कृता भवेत् ॥ ५९ ॥

आचार्यत्वानर्हेणाचार्यत्वेन परिगृह्य कृता प्रपत्तिरकृतप्रायेत्याह—अथेति । सङ्कीर्णाअनुलोमप्रतिलोमजाताः अनिर्मलाः आचार्यसमाश्रयगराहिताः आपतिताः महापतकादियुक्ताः अन्यदृष्टिर्बाह्यकुदृष्टिर्यदि शास्त्रमात्रसम्पन्नज्ञानः । एतेष्वाचार्येषु सत्सु अनन्येन शिष्येण कृतापि प्रपत्तिः कृता न भवेत्

अन्यदृष्टाविति पदम् अपाञ्चरात्रादिकान्यभक्तालक्ष्यान्यसेवकानामुपलक्षणम्॥ ५९ ॥

अतोऽन्यत्राशु विधिवत्कर्त्तव्या शरणागतिः ।
उपदेष्टा तु मन्त्रस्य मूढः प्रच्यवते ह्यधः ॥ ६० ॥

अतोन्य इति । अन्यत्र स्त्रीशूद्रादिव्यतिरिक्ते आचार्ये सति शरणागतिः कर्तव्या। मन्त्रस्य उपदेष्टा मूढः स्त्रीशूद्रादिः अधः प्रच्यवते च्युतो भवति । मूढः प्रच्यवतेऽधम इत्यपरः पाठः॥६०॥

अनादेर्वासनायोगाद्विपरीतादिहात्मनः ।
स्मृतिर्न जायते विष्णौ कुत एवार्पणे मतिः ॥ ६१ ॥

अतिसुकरोऽपि न्यासोपायः अनादिदुर्वासनाकलुषितानां दुरात्मनां दुर्लभ इत्याह-अनादेरिति । अनादेः अविच्छिन्नप्रवाहात् विपरीताद्वासनायोगाद्विपरीतवासनासम्बंधाद्विष्णौ स्वान्तरवस्थितेऽपि भगवति विषये स्मृतिरपि न जायते अर्पणे आत्मरक्षाभरसमर्पणे मतिः कुतः ? रुचिर्दूरापास्तेत्यर्थः ॥६१॥

स्वपापसंभवादेव कुलात्संसर्गतोऽन्यतः ।
देशात्कालात्स्वभावाच्च प्रपद्यन्ते न केशवम् ॥ ६२ ॥

स्वपापेति । स्वपापसम्भवादेव स्वपापैकमूलात्कुलात् अन्यतः संसर्गाद्भगवद्विमुखैः संसर्गाद्देशात्पापदेशवासात्कालात् दुष्टकालात्स्वभावात्पापमूलदुःखस्वभावाच्च केशवं न प्रपद्यन्ते ॥ ६२ ॥

अविज्ञाय सदा शुद्धं नरा नारायणं प्रभुम् ।
अशुद्धानामहोऽन्येषां दास्यमिच्छन्त्यबुद्धयः ॥ ६३ ॥

पापमूलदुर्बुद्धिमहिम्ना भगवंतमविज्ञाय अन्यशेषत्वमप्यंगीकुर्वतीत्याह-अविज्ञयेति।नरा नारायणमित्यनेन स्वयं नरा अपि

नारायणं नराणामयनभूतमपि अविज्ञाय अन्यं प्रपद्यन्ते इत्यनौचित्यमुच्यते । अशुद्धानां कर्मवश्यानां रजस्तमोऽभिभूतानामपि अन्येषां ब्रह्मरुद्रादीनां दास्यमिच्छन्ति तत्र हेतुरवुद्धय इति ॥ ६३ ॥

केचित्सर्वेश्वरं विष्णुमशेषदुरितापहम् ।
कामकामाः प्रपद्यन्ते न ते दास्यं परं विदुः ॥ ६४ ॥

भगवंतं प्रपद्यापि केचिद्भाग्यहीना व्यर्था भवन्तीत्याह—केचिदिति । सर्वेश्वरमित्यनेन स्वामिविषये प्रपत्तिः स्वरूपान्तर्गतेति सूच्यते अशेषदुरितापहमित्यनेन सर्वपापनिवर्तकत्वे सत्यपि तदनपेक्ष्य कामानेव कामयन्ते दुर्भगा इति सूच्यते दास्यं भगवत्कैङ्कर्यं परं प्राप्यं न विदुः ॥ ६४ ॥

बहुजन्मकृतैः पुण्यैरात्मनः क्षीणकल्मषाः ।
हरिं सन्तः प्रपद्यन्ते तद्दास्यैकफलार्थिनः ॥ ६५ ॥

भाग्याधिकास्तु भगवद्दास्यमेवापेक्ष्य भगवन्तमेव प्रपद्यन्त इत्यत आह—बहुजन्मेति।सन्तःपरस्वरूपाभिज्ञाः'अस्तिब्रह्मेतिचेद्वेद सन्तमेनं ततो विदुः, इति श्रुतिः ॥ ६५ ॥

कृतिनां वीतमोहानां केशवे निहितात्मनाम् ।
स्वदते केवलं दास्यं स्वधर्मकरणादिकम् ॥ ६६॥

प्रपन्नस्योत्तरकृत्यत्वेन वर्णाश्रमधर्माणां कर्तव्यत्वं महाभाग्यसम्पन्नानां तेषु भोग्यताबुद्धिसंभवं चाह—कृतिनामिति । केशवनिहितात्मनां भगवन्निक्षिप्तात्मस्वरूपाणाम् । अत एव कृतिनां वीतमोहानाम् । अर्थपञ्चकविषयकाज्ञानशून्यानां स्वधर्मकरणादिकं वर्णाश्रमादिनियतधर्मकरणादिकं केवलं पुंसाम् उपायत्वबुद्धिरहितं दास्यं स्वदते स्वादुत्वेन भाति ॥ ६६ ॥

वासुदेवं प्रपन्नानां तद्दास्यैकरसात्मनाम् ।
भेदो वीतभयानां हि नात्र कश्चित्परत्र वा ॥ ६७ ॥

भोग्यतया स्वधर्माननुतिष्ठन्तो मुक्तप्राया इत्याह—वासुदेवमिति । वीतभयानां 'न बिभेति कुतश्च न' इतिवदत्राप्यभयं प्राप्तानाम् । अत्र इह लोके परत्र परलोके ॥ ६७ ॥

इह श्रुत्यादिनियता वृत्तिरेव स्वयं फलम् ।
परत्र च परेशस्य कामात्कामप्रवृत्तयः ॥ ६८ ॥

उक्तमर्थं विशदयति-इहेत्यादि । इह अत्र लोके श्रुत्यादिविहिता श्रुतिस्मृतिचोदिता वृत्तिरेव स्वयं फलं परत्र परमपदे परेशस्य भगवतः कामात् नियमनरूपात् सङ्कल्पात्कामप्रवृत्तयः स्वच्छन्दकैङ्कर्यप्रवृत्तयः स्वयं फलं परमपदेऽपि हि स्वाम्यभिमतकैङ्कर्यं स्वयं फलं स्वाम्यभिमतस्तु मोक्षो मुक्तेन साक्षात्क्रियते । अत्र शास्त्रमुखेन ज्ञायते । कैङ्कर्यं तु उभयत्र तुल्यं फलम् । अतस्तथाविधकैङ्कर्यानुष्ठातॄणां मुमुक्षूणां मुक्तानां च न भेद इति भावः ॥ ६८ ॥

निक्षिप्यात्मानमात्मीयमशेषमखिलात्मनि ।
क्रियाश्च सकलास्तत्र वर्त्तन्ते वीतकल्मषाः ॥ ६९ ॥

एतावद्भिः श्लोकैरुक्तमर्थं सङ्गृह्याह—निक्षिप्येति । अत्र पूर्वार्द्धेन प्रपत्त्यनुष्ठानमुक्तम् । उत्तरार्द्धेन भगवत्कैङ्कर्यतया प्रपन्नस्य स्ववर्णाश्रमावस्थोचिताशेषधर्मानुष्ठानात्मकमुत्तरकृत्यमुक्तं तत्रेति परमात्मपरामर्शः सकलाः क्रियाश्च परमात्मनि निक्षिप्य परमात्मप्रीणनार्थतया सङ्कल्प्य वर्त्तते तत्र वर्त्तते च इति सन्मुख एव चान्वयः । भगवदनुसंधानेन कालं नयन्तीत्यर्थः ॥ ६९ ॥

मन्यन्ते च स्वकीयान्नः स्वप्रीत्यै स्वोचितां स्वयम् ।
नाथः स्वकीयसेवां तां वृत्तिं कारयतीति वै ॥ ७० ॥

अथ प्रपन्नानां फलासंगतः अकर्तृत्वानुसंधानं चाह-मन्यन्ते चेति।स्वकीयान् स्वशेषभूतान्नः स्वप्रीत्यै स्वसन्तोषाय स्वोचितां स्वार्थां स्वकीयसेवां तां भगवतः दास्यपर्यतां वृत्तिं स्वयं कारयतीति मन्यन्ते च ॥ ७० ॥ इति प्रपत्त्यधिकारः ॥

यथा प्रपत्तिर्विहिता भगवच्चरणाब्जयोः ।
तथैव तत्र वृत्तिश्च कार्या गुरुनिदेशतः ॥ ७१ ॥

" धिया वृत्तिं च शाश्वतीम् " इत्युक्तां वृत्तिं विधानप्रदर्शनमुखेन विशदयितुमारभते-यथेति । भगवच्चरणाब्जयोः । प्रपत्तिर्यथा विहिता । येन प्रकारेण षाड्विध्येन कृता तथैव षाड्विध्येनैव तत्र भगवच्चरणाब्जयोः गुरुनिदेशतः आचार्यानुज्ञया वृत्तिश्च कार्या ॥ ७१ ॥

वृत्तिश्च विहिताचारः प्रतिषिद्धविवर्जनम् ।
दृष्टिर्भक्तिस्तथा लक्ष्म सतां सेवेति षड्विधा ॥ ७२ ॥

षाड्विध्यमेवाह-वृत्तिरिति । विहितानामाचारः करणं विहिताचारः । दृष्टिर्ज्ञानम् । लक्ष्म भगवल्लाञ्छनादिकं भागवतचिह्नम् ॥ ७२ ॥

अनन्यरतिरत्यन्तं विहितानि समाचरन् ।
वर्जयन् प्रतिषिद्धानि वेदवेदांततत्त्ववित् ॥ ७३ ॥

अथ श्लोकद्वयेन पूर्वश्लोकार्थं विवृणोति-अनन्येति । अनन्यरतिः प्रयोजनान्तरेच्छारहितः । अत्यन्तमनन्यरतिरिति वान्वयः । अत्यन्तं वर्जयन्निति वान्वयः पूर्वश्लोकस्य दृष्टिरित्यस्य विवरणं 'वेदवेदान्ततत्त्ववि' इति । भक्तिरित्यस्य विवरणम् । अर्चादिष्वर्चयन्विष्णुमिति लक्ष्मेत्यस्य विवरणम् । 'अङ्कितो हरिलाञ्छनैः' इति। सतां सेवेत्यस्य विवरणम्। 'सेवते यद्गुरून् भक्त्या' इति यत सेयं वृत्तिरित्यन्वयः ॥ ७३ ॥

अर्चादिष्वर्चयन्विष्णुमङ्कितो हरिलाञ्छनैः ॥
सेवते यद्गुरून्भक्त्या सेयं वृत्तिः परा मता ॥ ७४ ॥

अर्चादिष्विति । अस्य श्लोकस्यापि पूर्वेणान्वयः ॥ ७४ ॥

स्वाभाविकोऽस्य सम्बन्धः पुंसो यः परमात्मना ।
तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम् ॥७५॥

प्रपत्तेर्वृत्तेश्चाभेदं वक्तुं न्यासस्वरूपं कथयन्नर्थात् अनुरूपस्वरूपवृत्तित्वेन प्रपत्तेः सकृत् कर्तव्यता न स्यादिति चोद्यं च परिहरति-स्वाभाविक इति । अस्य पुंसो जीवस्य परमात्मना समं यः स्वाभाविकः सम्बन्धः स्वस्वामिभावलक्षणः, तस्य बोध एव न्यासाख्यः न्यासशब्दवाच्यः सन् प्रथममुपायतां भगवद्वशीकरणोपायतां याति सम्बन्धबोधस्यन्यासत्वस्वरूपकभरसमर्पणभूतन्यासैकदेशस्वरूपसमर्पणात्मत्वात ॥ प्रथमं यात्युपायतामित्यनेन उपायत्वेन सकृत्करणम् । आवृत्तिस्तु फलस्वरूपस्य तस्येति न विरोधः इति सूचितम् ॥ ७५ ॥

स एवोपर्युपर्यस्य परां प्रीतिमुपावहन् ।
वृत्त्याख्यां फलतां याति तदेवामृतमुच्यते ॥ ७६ ॥

सेति। स एवसम्बंधः स्वबोधस्वरूपोपन्यासः उपर्युपरि प्रथमानुष्ठानानंतरमुपर्युपरि अस्य परमात्मनः परां प्रीतिं हर्षमुपावहन् जनयन् वृत्त्याख्यं यत्फलं तत्स्वरूपतां याति अस्य परां प्रीतिमुपावहन्नित्यस्य प्रपन्नस्य भोग्यतया निरतिशयां प्रीतिं जनयन्निति भावार्थः ॥ ननु प्रपन्नस्य मोक्षफलं न वृत्तिरित्यत आह तदेवामृतमुच्यत इति । तद्वृत्त्याख्यफलमेव अमृतं मोक्ष उच्यते यद्वा जीवपरमात्मसम्बन्धज्ञानं प्रथममुपायः अनन्तरं वृत्त्याख्यं फलं भवति अनन्तरं मोक्षस्वरूपं भवति । 'बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः'। इत्यादिवत्स्वरूपाविर्भावस्यैव मोक्षत्वात्

शेषत्वस्यैव स्वरूपाच्चेति भावः ॥ तदिति नपुंसकलिंगनिर्देशः विधेयस्यामृतशब्दस्य नपुंसकलिंगत्वादुपपद्यते 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इत्यादितुल्यन्यायात् ॥ ७६ ॥

या स्वधर्मेष्वभिरतिः सा भवत्यनुकूलता ।
वर्जनं प्रतिषिद्धानां तथैषा प्रतिकूलता ॥ ७७ ॥
वेदवेदान्तविज्ञानं विश्वासो गोप्तरि स्वयम् ।
गोप्तृत्ववरणादन्यत्र विष्णोरर्चनादिकम् ॥ ७८ ॥
प्रपत्तेर्ह्यात्मनि क्षेपो दास्यचिह्नैकलक्षणः ।
सतां देशिकमुख्यानां सेवा कार्पण्यमुच्यते ॥ ७९ ॥

प्रपत्तिवृत्त्यो ःसमभेदं श्लोकत्रयेण दर्शयति—यास्वधर्मेत्यादि। स्वधर्मेष्वाभिरातिर्वृत्तिश्च विहिताचार इत्यत्रोक्तो विहिताचारः, सा अनुकूलता भवति प्रपत्त्यङ्गभूत आनुकूल्यसङ्कल्पो भवति प्रातिकूल्यवर्जनं प्रतिषिद्धानां वृत्तिशरीरानुप्रविष्टं प्रतिषिद्धविवर्जनम् । अप्रातिकूलता प्रपत्त्यङ्गभूतप्रातिकूल्यवर्जनम् । भगवदनभिमतनिषिद्धवर्जनस्यैव प्रातिकूल्यवर्जनं वेदवेदान्तविज्ञानं वृत्त्यनुप्रविष्टा दृष्टिः । विश्वासः प्रपत्त्यङ्गभूतो रक्षिष्यतीति विश्वासः । विश्वासो हि रक्षकत्वाध्यवसायविशेषश्च । गोप्तरि भवति वेदवेदान्तविज्ञानम् अयमेव रक्षक इत्यध्यवसायात्मकमेवेत्यर्थः । विष्णोरर्चनादिकं वृत्त्यनुप्रविष्टभक्तिशब्दवाच्यम् अर्चनादिकं गोप्तृत्ववरणादन्यत्र भवति गोप्तृत्ववरणाय घटितत्वादिति भावः । आत्मनिक्षेपः अङ्गीभूतो न्यासः दास्यचिह्नैकलक्षणः प्रथते । तवैवाहमिति दास्यानुसन्धानात्मकत्वात् न्यासस्य चक्राङ्कनादिचिह्नानामपि तत्प्रवाहबाह्यरूपतया दास्याभि व्यञ्जकत्वाद्वृत्त्यनुप्राविष्टं लक्ष्म आत्मनिक्षेपान्नातिरिच्यत इत्यर्थः । देशिकमुख्यानाम् आचार्य-

मुख्यानां सतां सेवा वृत्तिशरीरानुप्रविष्टा प्रपत्त्यङ्गभूतकार्पण्यमुच्यते । सेवायाः कृपाजनककृपणवृत्तिरूपत्वात् आकिञ्चन्यानुसन्धानकार्यत्वात्तद्व्यभिचरितत्वाच्च कार्पण्यान्नातिरेक इति भावः ॥ ७७ ॥ ७८ ॥ ७९ ॥

अतः प्रपत्तिरेवेह वृत्तिर्भवति शाश्वती ।
तस्यैवास्मीति बोधात्मा प्रवृत्ति वृत्तिरेव च ॥ ८० ॥

वृत्तिप्रपत्त्योरभेदं निगमयति–अत इति । यतः प्रपत्तिर्वृत्तिरेव च तस्यैवाहमस्मीति बोधात्मा अतः प्रपत्तिरेव शाश्वती वृत्तिरित्यन्वयः ॥ ८० ॥

तदेवं भगवान्प्रीतः प्रपत्त्या साधनं परम् ।
तयैव वृत्तिवपुषा प्रीतः फलमपि स्वयम् ॥ ८१ ॥

ननु प्रपत्तेरेवोपायोपेयत्वे भगवत एवोपायत्वोपेयत्ववादो न स्यादित्यत आह–तदेवमिति । प्रपत्त्या प्रीतोभगवान् परं साधनं भवति; वृत्तिवपुषा तया प्रीतः फलमपि भवति; न स्वरूपेण प्रपत्तेरुपायत्वम् । अपि तु भगवत्प्रसादनद्वारा । नापि वृत्तिस्वरूपायास्तस्याः स्वरूपेण फलत्वमपि भगवत्प्रीणनहेतुत्वात् । अतः प्रपत्त्युपायोपेयभावस्य भगवदुपायोपेयभावनिबन्धनत्वात्साक्षादुपायोपेयभावो भगवत एवेत्यर्थः ॥ ८१ ॥

विहितांतर्गतान्येव दृष्ट्यादीनि तथापि तु ।
तेषां विशेषमान्यत्वात्पृथक् चांगतया विधिः ॥ ८२ ॥

ननु वृत्तेः षाड्गुण्यमुक्तं तन्न युक्तं दृष्ट्यादीनां विहिताचारान्तर्गतत्वादित्याशङ्क्याह । न्यायशास्त्रादिमे सूत्रे सर्वेषां प्रमेयान्तर्गतत्वेऽपि प्रकारातिशयेन पृथग्वक्तव्यत्वात्प्रमाणादीनामिव दृष्ट्यादेरपि पृथगुपादानं युक्तमित्याह–विहितेति । दृष्ट्यादी-

त्यादिशब्देन भक्तिसत्सेवयोः सङ्ग्रहात्तेषां दृढदृष्ट्यादीनां विशेषमान्यत्वात् विशेषतः प्राधान्येन ज्ञातव्यत्वात् ॥ ८२ ॥

निषिद्धांतर्गतान्येव विरुद्धान्यखिलान्यपि ।
हानं सर्वस्य चैकांगं पृथग्व्याचक्षते परे ॥ ८३ ॥

एवं वक्ष्यमाणदृष्ट्यादिविरुद्धपरित्यागोऽपि प्रतिषिद्धवर्जनान्तर्गत एव । तथापि विशेषतः परित्याज्यत्वात् दृष्ट्यादिविरुद्धानां पृथगुक्तिरित्याह-निषिद्धेति । अखिलान्यपि विरुद्धानि दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धानि सर्वाण्यपि निषिद्धान्तर्गतान्येव षड्विधवृत्त्यन्तर्गतप्रतिषिद्धवर्जनप्रतियोगिप्रतिषिद्धान्तर्गतान्येव तथापि प्राधान्यात् पृथगुक्तिरिति भावः । यथा विहिताचारान्तर्गतानामपि दृष्ट्यादीनां पृथगङ्गत्वेन विधिः एवं प्रतिषिद्धवर्जनान्तर्गतस्यापि दृष्ट्यादिविरुद्धहानस्य पृथगङ्गत्वं केचिद्व्याचक्षत इत्याह । हानमिति । तस्य दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धस्य हानं वर्जनं पृथगेकाङ्गं परे व्याचक्षते । तन्मते वृत्तेः सप्तविधत्वमित्यर्थः । यद्वा सर्वस्य विहिताचारस्य दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धस्य सर्वस्यापि हानं पृथगेकांगं व्याचक्षते अस्मिन् व्याख्याने विहिताचारदृष्टिलक्ष्मसत्सेवा विरुद्धवर्जनरूपेण षाड्विध्यमेव द्रष्टव्यत्वात् ॥ ८३ ॥

आनुकूल्यस्य संकल्पात्प्रातिकूल्यस्य वर्जनात् ॥
प्राप्ते समस्तेऽपि तथा विश्वासादेः पृथग्विधिः ॥ ८४॥

सर्वेषामपि वृत्तिभेदानां विहिताचारप्रतिषिद्धवर्जनान्तर्गतत्वेऽपि दृष्ट्यादेः पृथगुपन्यासः आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनान्तर्गतत्वेऽपि प्रपत्त्यंगानां विश्वासादीनां पृथग्विधिरेव युज्यते इति ज्ञापयितुम् आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनयोरितरेषामंतर्भावमाह-आनुकूल्यस्येति । आनुकूल्यस्य सङ्कल्यात्

भगवदनुकूलशास्त्रविहितवृत्तानुवृत्तिसङ्कल्पात् प्रातिकूल्यस्य-भगवत्प्रातिकूलनिषिद्धानुवर्तनस्य वर्जनादपि समस्ते विश्वासादौ सर्वस्मिन् प्राप्ते सिद्धेऽपि विश्वासादेः पृथग्विधिः यथा आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनांतर्गतत्वेऽपि विश्वासादीनां पृथग्विधिः, तद्वद्वृत्तावपीति भावः यद्यपि आनुकूल्यसङ्कल्पेन विश्वासादेरंतर्भावः,तेषामानुकूल्यान्तर्गतत्वेऽपि तत्सङ्कल्पान्तर्गतत्वाभावात् अथापि सङ्कल्पविद्यानुकूलांतर्गतत्वात्तथोक्तिः॥८४

न कर्म हीनं ज्ञानेन न तत्तेन न ते अपि ॥
भक्त्या ताभ्यां न सा तानि न वैराग्येण तन्न तैः॥८५॥

वृत्तिभेदाः षडपि परस्परेण विनाकृता न भगवत्प्रीणनाय प्रभवन्तीत्याह-नेति। ज्ञानेन दृष्ट्या हीनं कर्म विहिताचारः न भगवत्प्रीणनहेतुर्भवितीत्यर्थः। तत् ज्ञानं तेन कर्मणा हीनं न भवति। ते अपि कर्मज्ञाने अपि भक्त्या विना न भवतः। भक्तिशब्देन लक्ष्मसत्सेवयोरपि सङ्ग्रहः। ताभ्यां ज्ञानकर्मभ्यां हीना सा भक्तिर्न भगवत्प्रीणनाय भवति। तानि भक्तिकर्मज्ञानानि वैराग्येण विना न भवन्ति। तैर्भक्त्यादिभिर्हीनं विरुद्धवर्जनं न भगवत्प्रीणनाय भवतीत्यर्थः॥ ८५ ॥

विहिताचरणं कर्म वैराग्यं निंद्यवर्जनम् ॥
ज्ञानं सुदृष्टिर्भक्तिस्तु हरिचिह्नसमाश्रया ॥ ८६ ॥

असङ्गत्वशङ्कामपाकर्तुं कर्मज्ञानादिशब्दानामर्थमाह-विहितेति। भक्तिस्तु हरिचिह्नसमाश्रयेति हरिचिह्नं वृत्त्यनुप्रविष्टं लक्ष्म सतां सेवेत्युक्ताः परमैकान्तिनः। ते आश्रया यस्याः सा भक्तिशब्देन लक्ष्मसत्सेवयोरन्तर्भावात्संग्रह इति भावः॥ ८६ ॥

एवं चतुर्विधामेनां प्रीतिरूपां हरेः स्वयम् ।
यो वृत्तिमवमन्येत न हि तस्यास्ति निष्कृतिः ॥ ८७ ॥

वृत्त्यवमाने प्रत्यवायमाह—एवमिति। चतुर्विधां विहिताचारदृष्टिभक्तिविरुद्धवर्जनात्मकवैराग्यरूपां भक्तिशब्देन लक्ष्मसत्सेवयोरपि सङ्ग्रहात् चातुर्विध्यमविरुद्धम् । हरेः स्वयं प्रीतिरूपां साक्षाद्भगवत्प्रीणनहेतुभूतां वृत्तिं योऽवमन्येत तस्य निष्कृतिः प्रायश्चित्तं नास्तीति ॥ ८७ ॥

न देवतान्तरपरा न च कस्यापि साधनम् ।
परं प्रसाद एवैषा वृत्तिर्विश्वात्मनो हरेः ॥८८॥

परमैकान्तिनः कर्मणां त्यागे हि द्वौ हेतू। कर्मणां देवतान्तरसम्बन्धः काम्यरूपत्वं च । तद्द्वयस्यापि वृत्तावभावात्। केवलभगवत्प्रीणनत्वात् वृत्तिरवश्यमनुष्ठेयेत्याह-नेति ननु विहिताचारात्मकवर्णाश्रमधर्माणामग्नीन्द्रादिदेवतासम्बन्धित्वात्कथं देवतान्तरपरत्वाभाव इत्याशङ्क्याह । विश्वात्मन इति । तत्रापि तदन्तर्यामिण एव भगवत आराध्यत्वादिति भावः।ननु कस्यापि साधनं यदि न स्यात्तर्हि किं तदनुष्ठानेनेत्याशङ्कायामाह। परं प्रसाद इति । भगवत्प्रीतिहेतुत्वान्निषेधस्य तद्व्यतिरिक्तविषयत्वाच्चेति भावः ॥ ८८ ॥

देहस्यात्यन्तिकलये मोक्षाख्ये सति सा पुनः ।
निःश्रेयसं परं ब्रह्म निर्वाणमिति चोच्यते ॥ ८९ ॥

मुक्तिदशायामपि कैङ्कर्यस्यैव पुरुषार्थत्वात् वृत्तेरपि कैङ्कर्यत्वात् कदाचिदपि तत्र स्ववशायां पुरुषार्थभूतायां शैथिल्यं न सम्पादनीयमित्यभिप्रायेणाह—देहस्येति । मोक्षाख्ये देहस्यात्यन्तिकलये अपुनरङ्कुरं विलये सति सा वृत्तिः पुनःनिरवधिकश्रेयोरूपकत्वात् निःश्रेयसमप्युच्यते। परब्रह्मविषयत्वात परब्रह्मेत्युच्यते । निरवधिकसुखरूपत्वात् सकलदुरितबन्धनिवृत्त्यनन्तरभावितत्त्वाच्च निर्वाणमिति चोच्यते । पश्चादनु-

भावस्यापि मोक्षस्य तद्रूपत्वात् मोक्षफलरूपेयं वृत्तिरवहेया न भवतीत्यभिप्रायः ॥ ८९ ॥ इतिवृत्त्यधिकारः ॥

प्रपन्नस्यापि हि पुनर्देहे कर्मकृते स्थिते ।
दुरितानि परां वृत्तिं दूषयन्ति मुहुर्बलात् ॥ ९० ॥

एवं वृत्तिं निरूप्य तद्विरुद्धानि विवक्षुस्तद्विरुद्धानां प्रपन्नेषु सम्भवबीजं तत्प्रशमनोपायं च श्लोकद्वयेनाह-प्रपन्नस्येति । देहे कर्मकृते स्थित इति अभ्युपगतप्रारब्धांशानिविष्टदुरितसंभावनाभिप्रायः ॥ ९० ॥

तानि सर्वाण्यशेषाणि पापानि प्रशमं नयेत् ।
पुनः प्रपदनेनाशु कर्मभिर्वापि तत्परैः ॥ ९१ ॥

तानीति।तत्परैः भगवत्परैः कर्मभिः वैष्णवेष्ट्यादिभिः॥९१॥

एकांती शक्तितः कुर्वन् विहितानि समुत्सुकः ॥
तथैव प्रतिषिद्धानि त्यक्त्वा याति परां गतिम् ॥ ९२ ॥

एवमुपायैरपराधारम्भकपापानि प्रशमय्य वृत्तिमनुतिष्ठन्मुक्तो भवतीत्याह-एकान्तीति । शक्तितः कुर्वन्विहितानीत्यनेनदृष्ट्यादेः संग्रहः । प्रतिषिद्धानीत्यनेन दृष्ट्यादिविरुद्धस्यापि संग्रहः ॥ ९२ ॥

पाखण्डशैवशाक्तादितंत्रार्चालोकनादिकम् ।
स्वतो ब्रह्मशिवादीनां बद्धानामर्चनादिकम् ॥ ९३ ॥

पाखण्डेति।पाखण्डाः वेदबाह्याःतेषां तंत्रालोकनं च आदिशब्देन अनुमोदनादिसंग्रहः । इदं च दृष्टिविरुद्धम् ।स्वतो ब्रह्मशिवादीनां बद्धानामर्चनादिकमित्यनेन भक्तिविरुद्धमित्युक्तम्। स्वतः अर्चनमित्यनेन नियतेषु तदन्तर्याम्याराधनमदोषावहमिति ज्ञाप्यते ॥ ९३ ॥

ऊनधीः समताशङ्का विष्णोर्विस्मृतिरेव च ।
अनादरश्चतन्मन्त्रलक्षणार्चाक्रियादिषु ॥ ९४ ॥

ऊनधीरिति । ऊनधीरित्यादिकं दृष्टिविरुद्धं भक्तिविरुद्धं चोक्तम्। अनादरश्च तन्मन्त्रलक्षणार्चाक्रियादिष्वित्यनेन लक्ष्मभक्तिविरुद्धे उक्ते ॥ ९४ ॥

तस्यैवात्यन्तिके दास्ये विमतिः कामकामिता ।
अविश्वासः प्रपदने साधनान्तरसंश्रयः ॥ ९५ ॥

तस्यैवेति । कामकामिता प्रयोजनान्तरपरता साधनान्तरसंश्रयः उपायान्तरान्वयः । इदं भक्तिविरुद्धम् ॥ ९५ ॥

साधनत्वाभिमत्या च निजधर्मस्य वर्जनम् ।
असच्छास्त्रेष्वभिरतिर्दिव्यशास्त्रावधीरणम् ॥ ९६ ॥

साधनेति । साधनत्वाभिमत्या निजधर्मानुष्ठाने साधनान्तरान्वयः स्यादित्यतिशङ्कया निजधर्मस्य स्ववर्णाश्रमोचितधर्मस्य वर्जनम् । इदं विहिताचारविरुद्धम् । असच्छास्त्रेष्वभिरतिः दिव्यशास्त्रं भगवच्छास्त्रम् इदं सर्वं दृष्टिविरुद्धम् ॥ ९६ ॥

अभागवतसंसर्गो रीढा भागवतेषु च ।
मर्त्यसामान्यभावेन गुरौ चानतिगौरवम् ॥ ९७ ॥

अभागवतेति । रीढा अवमानना । मर्त्यसामान्यभावेन मनुष्यत्वबुद्ध्यां अनतिगौरवमतिगौरवाभावः । इदं सत्सेवाविरुद्धम् ॥ ९७ ॥

इति भागवतस्योक्ताः प्रपन्नस्य विशेषतः ।
अपाया दुस्त्यजा ह्येते देहबन्धनिबन्धनाः ॥ ९८ ॥

इतीति । भागवतस्य भगवत्प्राप्त्युपायनिष्ठस्य प्रपन्नस्य तद्विशेषस्य देहबन्धनिबन्धनाः शरीरसम्बन्धमूलाः ॥ ९८ ॥

एतानन्याँश्च विविधानपचारान्विशेषतः ।
सर्वानप्यनपाकृत्य नाप्नोति मधुसूदनम् ॥ ९९ ॥

एतानिति । एतानन्याँश्च वक्ष्यमाणाननपाकृत्य आलयमेव सदा आवर्त्तयन् वृत्तिं विहिताचारादिलक्षणाम् अनिवर्त्य९९॥

अतो देहस्य कालुष्यान्मंत्रमर्थेन केवलम् ।
आवर्त्तयन्सदा वृत्तिं कुर्वन्कालं नयेत्सुधीः॥१००॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां न्यासोपदेशो नाम प्रथमोऽध्यायः ॥ १ ॥

---

अपराधप्रवेशावकाशसाहित्ये हेतुमाह—अत इति । देहस्य कालुष्यात्कलुषहेतुत्वात् । अर्थेन सह मन्त्रं केवलं द्वयमेव सदा आवर्त्तयन् वृत्तिं विहिताचारादिलक्षणां कुर्वन्कालं नयेत् ॥ १०० ॥ इति पापप्रशमनाधिकारः ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहिताटीकायां न्यासोपदेशो नामप्रथमोऽध्यायः ॥१॥

---

अथानुकूल्यमुख्यानि प्रपत्त्यङ्गानि विस्तरात् ।
धर्माणां तद्विरुद्धानां स्वरूपं च निबोधत ॥ १ ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां द्वितोयोऽध्यायः२ ॥

---

एवं प्रथमाध्याये प्रपत्तिस्वरूपमुक्त्वा तदभेदेनोपचरितवृत्त्यङ्गानि तद्विरुद्धानि चोक्त्वा प्रपत्त्यङ्गस्वरूपं तद्विरुद्धप्रपञ्चनम अवसरप्राप्तं द्वितीयाध्यायेन क्रियत इति प्रतिजानीते ॥

अथेति। आनुकूल्यमुख्यानि आनुकूल्यसङ्कल्पप्रभृतिप्रपत्त्य-

ङ्गानि । तद्विरुद्धानामानुकूल्यसङ्कल्पादिप्रपत्त्यङ्गविरुद्धानां धर्माणां स्वरूपं च विस्तरात्प्रपञ्चमानं निबोधतेत्यनेन अवहितेन मनसा श्रोतव्यमिति द्योत्यते ॥ १ ॥

अन्यत्सर्वं द्वितीयाध्यायवचनजातं विच्छिन्नसम्प्रदायम् ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहिताटीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

अथ स्वकर्मनिरतः प्राज्ञो भक्तः सुलक्षणः ।
सत्सेवाभिरतो ह्येव प्रपन्नः सिद्धिमाप्नुयात् ॥ १ ॥

तृतीयाध्याये वृत्त्यंगानि विस्तरेण प्रतिपिपादयिषुः प्रथमं वृत्तिमनुतिष्ठन् सिद्ध्यतीत्याह—अथेति । स्वधर्मनिरतःविहिताचारनिरतः प्राज्ञः दृष्टिसम्पन्नः भक्तः भक्तिसम्पन्नः सुलक्षणः भगवल्लाञ्छनलक्षितः सत्सेवाभिरतः सतां सेवायां निरत एव प्रपन्नः सिद्धिं निश्रेयसं प्राप्नुयात् अत्र प्रतिषिद्धविवर्जनस्य विहिताचारविवर्जनरूपत्वात् । तस्य विरुद्धाधिकारे प्रपञ्चयिष्यमाणत्वात् अस्मिन्नध्याये विहिताचारदृष्टिभक्तिलक्ष्मसत्सेवानामेव प्रपञ्चयमानत्वादेतस्य श्लोकस्यैतदध्यायसंग्रहरूपत्वात् विहिताचारदृष्ट्यादीन्येवोक्तानि सम्प्रति निषिद्धविवर्जनमिति द्रष्टव्यम् ॥ १ ॥

यथार्हं विहितैस्तैस्तैः संस्कारैः संस्कृतः क्रमात् ।
नयेदात्मगुणोपेतस्तानि तानि व्रतानि च ॥ २ ॥

अथ विहिताचारं प्रपञ्चयति—यथार्हमिति। तैस्तैर्विहितैः शास्त्रचोदितैः संस्कारैर्गर्भाधानादिभिः क्रमात्संस्कृतः आत्मगुणोपेतः सर्वभूतदयाक्षान्त्यनसूयार्जवशौचानायासमंगल्याकार्पण्यरूपैरष्टाभिरात्मगुणैरन्यैरत्यमानित्वादिभिरुपेतः तानि तानि

व्रतानि वेदव्रतानि नयेत् कुर्यादित्यर्थः। अत्र 'यस्यैते चत्वारिंशत्संस्कारा' इत्यादिना गौतमधर्मोक्तमनुसन्धेयम् ॥ २ ॥

ध्यात्वा नारायणं देवमादौ कर्माण्यशेषतः।
तस्यैवाराधनतया कुर्यात्सङ्कल्पपूर्वकम् ॥ ३ ॥

ध्यात्वेति। ध्यात्वेत्यादौ सर्वकर्मणामादौ देवम् अकर्मवश्यतया दीप्तिमन्तं नारायणं ध्यात्वा तस्यैव नारायणस्यैवाराधनतया सङ्कल्पपूर्वकमशेषतः कर्माणि सर्वाणि कुर्यात् ।भगवदाराधनतया इदं कर्म करिष्य इति सङ्कल्पं कुर्यादित्यर्थः। तस्यैवेत्येवकारेण कञ्चुकप्रायेष्वग्नीन्द्रादिषु न दृष्टिर्निधेयेत्युच्यते ३॥

समाप्तानि च कर्माणि तस्मिन्नेव समर्पयेत्।
आदावन्ते च मन्त्राणां योजयेद्व्यापकान्तरम् ॥ ४ ॥

समाप्तानीति। कर्मसु समाप्तेषु 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण' मित्येतानि भगवदर्पितानि कुर्यात्। गायत्र्यादिमन्त्राणाम् आदावन्ते च व्यापकान्तरं षडष्टद्वादशवर्णोयद्वात्यन्तमव्यापकं योजयित्वा जपेदित्यर्थः ॥ ४ ॥

प्रातरुत्थाय विधिवत्स्नात्वा नित्यं समाहितः।
यजेत कर्मभिस्तैस्तैर्विष्णुं देवादिसंज्ञितम् ॥ ५ ॥

प्रातरिति। विधिवत् यथाविधि उद्बोधमारभ्य स्नानपर्यन्तो विधिः श्रीपञ्चरात्रशास्त्रे विशदतममनुसन्धेयः। तैस्तैः कर्मभिः सन्ध्यावन्दनादिभिः। देवादिसंज्ञितं तत्कर्माराध्यदेवताशरीरकतया तत्तच्छब्दवाच्यं विष्णुं यजेत।तद्देवतावाचकशब्दवाच्यत्वे हेतुतया विष्णुमित्यनेन अन्तर्यामितया व्याप्तिरुक्ता ॥ ५ ॥

ततश्च देवदेवेशं भोगैरभ्यर्चयेद्धरिम् ।
अशुद्धवर्जं सकलैः परिचारैः समन्वितम् ॥ ६ ॥

ततश्चेति । ततश्चेत्यनेन सन्ध्यादीनां कर्म्मणां भगवत्कैङ्कर्ययोग्यतापादकत्वमभिप्रेतम् । अशुद्धवर्जम् । इन्द्राद्यशुद्धपरिवारं वर्जयित्वा सर्वैः परिवारैः सहितं नारायणं गन्धपुष्पनैवेद्यादिभिर्भोगैरभ्यर्चयेत् ॥ ६ ॥

पूर्वमेव यथान्यायमभिगम्य जगद्गुरुम् ।
उपादाय च यागार्थान् सम्भारान्नियतः स्वयम् ॥ ७ ॥
यजेत पुरुषं साक्षाद्यथेच्छं प्रतिमादिषु ।
पञ्चरात्रेण विधिना गुर्वधीनोऽपरेण वा ॥ ८ ॥

पूर्वमिति । पूर्वं भगवदर्चनात्पूर्वमेव यथाशास्त्रमभिगम्य अभिगमनं कृत्वा योगः अर्थः प्रयोजनं येषां तान् योगसाधनानि उपादाय उपादानसङ्कल्पपूर्वकं सम्पाद्य नियतः सन् पुरुषं पुरुषसूक्तप्रसिद्धं नारायणं गुर्वधीनः आचार्यायत्तः तदनुज्ञापूर्वकं पञ्चरात्रेण विधिना श्रीपञ्चरात्रोक्तमार्गेण अपरेण वा स्मृतिपुराणाद्युक्तेन वा विधिना प्रतिमादिषु साक्षाद्देवतान्तरव्यवधानमन्तरेण स्वयं यजेत ॥ ७ ॥ ८ ॥

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिस्तथा परैः ।
यथार्हमर्च्यः सेव्यश्च नित्यं सर्वेश्वरो हरिः ॥ ९ ॥

एवमभिगमनोपादानेज्यानां कर्त्तव्यतामुक्त्वा इज्यायां सर्वेऽप्यधिकारिण इत्याह ब्राह्मणैरिति इतरैरनुलोमप्रतिलोमजातैः यथार्हं यथोचितं चतुर्णां वर्णानां प्रतिमादिषु प्रतिलोमजातानां पादुकादिषु विभागेनेत्यर्थः इज्यः यष्टव्यः नित्यमित्यनेन भगवत्समाराधनस्य नित्यत्वमुच्यते तदाहुः—'नित्यं सदा यावदायुर्न-

कदाचिदतिक्रमेत् ॥ इत्युक्त्यातिक्रमेदोषश्रुतेरप्यागच्चोदनात् ॥ फलश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्' सर्वेश्वर इति साभिप्रायं पदम्। भगवदीश्वरत्वस्य सर्वप्रतियोगिकत्वात् सर्वैरपि भगवानिज्य इति भावः यथार्हमितिपदेनाभिप्रेतमर्थं विशदयति ब्राह्मणैरिति चत्वारो वर्णाः प्रतिमादिषु जगद्गुरुं भगवन्तमर्चयेयुः चकारेण पादुकार्चनं समुच्चीयते अन्ये तु तद्व्यतिरिक्तास्तु तत्पादुकार्चनं तस्य जगद्गुरोः पादुकायामर्चनं कुर्युः ॥ ९ ॥

अधिकप्रीतिरर्चायामेकान्ती हरिमर्चयेत् ।
तदभावेऽग्निवत्सूर्यभूम्यम्बुगगनादिषु ॥ १० ॥

प्रतिमादि...त्यत्रादिशब्दाभिप्रेतं विशदयन् तस्य मुख्यत्वं चाह–अधिकेति एकान्तीअधिकप्रीतिः अतिशयितप्रेमा सन् अर्चायां प्रतिमायामेव हरिमर्चयेत् । तदभावे अर्चाभ वह्निमध्ये हृदयकमलमध्ये सूर्यमण्डले भूमौ अम्बुनि गगने च यथारुचि क्वचिदर्चयेत् । आदिशब्देन पादुकादिसंग्रहः ॥ १० ॥

भोजयेद्वैष्णवान्नित्यं पित्रर्थानतिथींस्तथा ।
वैष्णवानेव बिभृयात्पुत्रदारादिकान्निजान् ॥ ११ ॥

भोजयेदिति । नित्यं पित्रर्थान् अतिथींश्च वैष्णवानेव भोजयेत् । पितॄनुद्दिश्य तान्वैष्णवान्भोजयेत् । नाप्यवैष्णवानतिथीन्नित्ययमेवकारार्थः । निजान्स्वकीयान्पुत्रदारादीनपि वैष्णवानेव बिभृयात् । स्वकीयानामप्यवैष्णवत्वे भरणं न कर्त्तव्यमित्यर्थः ॥ ११ ॥

नातिसङ्गः परिचरेत्पुत्रादीनप्यवैष्णवान् ।
भिक्षेत वैष्णवेष्वेव ब्रह्मचारी यतिस्तथा ॥ १२ ॥

नोति । अवैष्णवान्पित्रादीनपि अतिसङ्गः न परिचरेत् किन्तु बिभृयादित्यभिप्रायः । ब्रह्मचारी तथा यतिरपि वैष्णवेष्वेव भिक्षेत परमैकान्तिष्वेव भिक्षाटनं कुर्यान्नावैष्णवेष्वित्यर्थः ॥ १२ ॥

असद्दार्ष्टिं परिहरेदच्युतस्य निवेदिते ।
दद्यादाचार्यमुख्येभ्यः स्वार्थं चात्र प्रकल्पयेत् ॥ १३ ॥

असदिति। अच्युतस्य निवेदिते अन्नादौ असद्दार्ष्टिम् अवैष्णवदृष्टिं परिहरेत् असद्भिर्दृष्टं भगवदर्पितमपि न भुञ्जीतेत्यर्थः। अच्युतस्यनिवेदना इत्यपरः पाठः । तदा भगवन्निवेदनदशायामसतां दार्ष्टिं परिहरेदित्यर्थः। अथ संविभागमाह दद्यादिति। भगवन्निवेदितम् आचार्यप्रभृतिभ्यो दद्यात् समर्पयेत् अत्र आचार्यमुख्येभ्यो दत्तशिष्टे भगवन्निवेदिते स्वार्थञ्च किंचित्प्रकल्पयेत् ॥ १३॥

निवेद्य हृदि तद्भूयः परिषेकादिपूर्वकम् ।
जुहुयादाहुतीः पञ्च विष्णौ प्राणादिसंज्ञके ॥ १४ ॥

अथानुयागमाह-निवेद्येति। तद्भगवन्निवेदितं भूयः पुनरपि परिषिंचनादिपूर्वकं हृदि निवेद्य हृदयकमलवासिने भगवते निवेद्य प्राणादिसंज्ञके प्राणापानाद्यन्तर्यमितया तत्तच्छब्दवाच्ये विष्णौ पंचाहुतीर्जुहुयात् प्राणायस्वाहेत्यादिभिर्मन्त्रैर्जुहुयात् ॥१४॥

निवेदयेच्च भुञ्जानो मनसानागतं पुरः ।
मनो हि पूतमन्यत्र सूतोदक्याशवस्पृशः ॥ १५ ॥

भोजनमध्ये अपूर्वेषु पदार्थेष्वागतेषु तेषां भगवन्निवेदनप्रकारं निवेदनाधिकारसंपत्तिं चाह-निवेदयेदिति । भुञ्जानः अभ्यवहरन्नेव पुरा प्राङ्निवेदनदशायामनागतान्भोग्यान्मनसा भगवते निवेदयेत् । ननु भुञ्जानस्य मनोऽत्र कथं शुद्ध-

मित्यत आह । मनोहीति। सूतोदक्याशवस्पृशः अन्यत्र । मनः पूतं हि प्रमाणप्रसिद्धिं द्योतयति । सूतकिस्पृशः उदक्यास्पृशः शवस्पृशश्च मनः शुद्धं न भवति । तदन्येषां तु शुद्धमित्यर्थः । उदक्या रजस्वला ॥ १५ ॥

प्रशस्तं भगवद्भुक्तं पितृदेवादिकर्मसु ।
लब्धेन चान्यतस्तेन पुनर्यागोऽपि चोदितः ॥ १६ ॥

हव्ये कव्ये च भगवन्निवेदितं प्रशस्तमित्याह-प्रशस्तमिति । देवादीत्यादिशब्देन ऋषीणां संग्रहः । उक्तमर्थं कैमुत्यन्यायेन द्रढयति । यत्यादिभिर्भिक्षापन्नादिना अन्यतः अन्यस्माल्लब्धेन तेन भगवद्भक्तेन पुनर्यागोऽपि चोदितः । पुनरिज्यापि विहिता । किं पुनः पितृदेवतादिकर्मणीति भावः ॥ १६ ॥

कृत्वानुयागं कुर्वीत स्वाध्यायं वैष्णवं परम् ।
ततो युञ्जीत चात्मानं पुरुषे पुष्करेक्षणे ॥ १७ ॥

कृत्वेति । अथ स्वाध्याययोगादिबाह्ययागं कृत्वा परं प्रधानं यागानन्तर्भाविनं वैष्णवं भगवन्मन्त्रविषयकं स्वाध्यायजपरूपं कुर्वीत । शाण्डिल्यादिभिः व्यापकमन्त्रानुसन्धानस्य स्वाध्यायतोक्तेः । ततः स्वाध्यायानन्तरं पुष्करेक्षणे पुण्डरीकाक्षे पुरुषे आत्मानं मनो युञ्जीत यद्वा आत्मानं जीवं स्वपुरुषे युञ्जीत ईदृशः । परमात्मायं प्रत्यगात्मायमीदृशइत्यादिशाण्डिल्योक्तप्रक्रियया स्वपरसम्बन्धानुसंधानमविच्छेदेन कर्म कुर्वीतेत्यर्थः ॥ १७ ॥

ये च भागवता मन्त्रा ये च दिव्याश्च विग्रहाः ।
यथोपदेशं नियतस्तांश्च सेवेत नित्यशः ॥ १८ ॥

येचेति । ये भगवन्मंत्राः ये वा भगवद्विग्रहाः आचार्यकृपालब्धाः तान्मन्त्रान्विग्रहांश्च नियतः सन्स्वाध्याये योगे च

सेवेत उपदिष्टान्भगवन्मन्त्रान्स्वाध्याये अधीयीत। आचार्येभ्यो लब्धान् भगवद्विग्रहान्योगे ध्यायीतेत्यर्थः ॥१८॥ (?)

कृत्वाभिगमनं पूर्वमुपादाय च सम्पदः।
इष्ट्वाधीत्य च युञ्जानो भोगैः कालं नयेद्यतिः ॥ १९ ॥

पञ्चकालकर्त्तव्यानि सङ्गृह्याह–कृत्वेति। पूर्वम् आदौ अभिगमनं कृत्वा अनन्तरं सम्पदः यागसम्भारान् उपादाय इज्यार्थमुपादानं कृत्वा इष्ट्वा इज्यां कृत्वा अधीत्य स्वाध्यायमधीत्य युञ्जानो योगं कुर्वाणो भोगैः कालं नयेदिति अनेन प्रकारेण कालं पञ्चधा विभज्य अभिगमनादिभिर्नयेदित्यर्थः ॥ १९ ॥

तमेव मत्वा भोक्तारमिज्यं यष्टारमेव च।
यजेत सकलैर्यज्ञैः सर्वयज्ञमयं हरिम् ॥ २० ॥

एवं भगवदाराधनतया फलसङ्गकर्तृत्वपरित्यागपूर्वकं पंचमहायज्ञानन्यानपि ज्योतिष्टोमादिकान्यथाशक्ति कुर्यादित्याह–तमिति। भोक्तारं यागजनितप्रीत्याधारम् इज्यं यागविषयम्। यष्टारं यज्ञकर्तारमपि तमेव भगवंतमेव मत्वा सकलैर्यज्ञैः सर्वयज्ञमयं हरिं यजेत सर्वयज्ञमयं भोक्तारमिज्यं यष्टारमिति पदैर्व्याप्तं यष्टारं तमेव मत्वेत्यनेन कर्तृत्वपरित्यागोऽभिहितः भोक्तारमिति यागजनितप्रीतिभोक्तृत्वकथनेन कर्मणां स्वयं प्रजोजनरूपत्वेन फलपरित्यागोऽभिप्रेतः फलितस्य भगवन्निष्ठत्वकथनात् सङ्गपरित्यागः फलितः ॥ २० ॥

विष्णोः सेवेत तीर्थानि तथैवायतनानि च।
दद्यादर्थांश्च विप्रेभ्यश्चरेच्च विविधं तपः ॥ २१ ॥

विष्णोरिति–विष्णोस्तीर्थानि सेवेत नत्ववैष्णवतीर्थानि 'अस्वाध्यायमतीर्थग'मित्यभिप्रेतं तीर्थगमनं वैष्णवतीर्थविषय-

नियमामीति मन्तव्यम् । आयतनानि दिव्याभिव्यक्तिस्थलानि श्रीरङ्गादीनि विप्रेभ्यः अत्र विप्रशब्दः परमैकान्तिपरः।'वासुदेवं विजानन्विप्रो विप्रत्वं गच्छति तत्त्वदर्शी' इतिश्रुतेः। 'अवैद्येन न केनापि वैद्यः किञ्चित्समाचरेत्' इति सामान्यतः। 'अवैष्णवेभ्यो यत्किञ्चित्प्रतिगृह्य प्रदापय' इत्यादिना विशेषतश्चावैष्णवेभ्यो दानस्य निषिद्धत्वात् । तपः उपवासप्रधानं कृच्छ्रचान्द्रायणादि ॥ २१ ॥

प्रायश्चित्तं तु परमं प्रपत्तिस्तस्य केवलम् ।
कुर्यात्कर्मात्मकं वापि वासुदेवमनुस्मरन् ॥ २२ ॥
विशुद्ध्येद्विष्णुभक्तस्य दृष्ट्या स्पर्शेन सेवया ।
स्मरणेनान्नपानाद्यैर्गिरा पादरजोऽम्बुभिः ॥ २३ ॥

अभागवतदृष्ट्यादिप्रायश्चित्तमाह श्लोकद्वयेन-प्रायश्चित्तेत्यादिना । तस्य भगवन्न्यस्तभरप्रपत्तेः केवलं प्रपत्तिरेव परमं प्रायश्चित्तम्। 'अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं सात्र यत्पुनः शरणं श्रयेत्' इत्यादिकमन्त्राण्यनुसन्धेयानि।शक्तौ सत्यां प्रतिपदोक्तं प्रायाश्चितं कर्त्तव्यमित्याह।कुर्यादिति ।वासुदेवमनुस्मरन् तत्कर्माराध्यं सर्वान्तर्यामिणं सर्वेश्वरं मन्वानः कर्मात्मकं क्रियारूपं वापि प्रायश्चित्तं कुर्यात् । अत्र लघुनिमित्ते यथाश्रुतमेव प्रायश्चित्तम् । गुरुनिमित्ते तु तदर्थविहितं वैष्णवेष्ट्यादिकमनुष्ठाय तदनन्तरमत्रोक्तमाचरेत् । अवैष्णवदृष्टेर्वैष्णवदृष्टिः प्रायश्चितम् । अवैष्णवस्पर्शस्य वैष्णवस्पर्शः । अवैष्णवसेवायाः वैष्णवसेवा । अवैष्णवस्मरणस्य वैष्णवस्मरणम् । अवैष्णवान्नपानादेः हारीतोक्ततदर्थेष्ट्यनुष्ठानानन्तरं वैष्णवान्नपानादिकम् । गिरा अवैष्णवसम्भाषणस्य वैष्णवसम्भाषणम् । अवैष्णवपादरजसः वैष्णवपादरजः । अवैष्णवाम्बुनि वैष्णवाम्बु ॥ २२ ॥ २३ ॥

विष्णोर्निवेदितान्नाद्यैस्तथा तत्कीर्तनादिभिः।
अभागवतदृष्ट्यादेः शुद्धिरेषा विशेषतः॥ २४॥

विष्णोरिति। अनिवेदितान्नादेर्निवेदितान्नादिकाले अवैष्णवकीर्तनादेः वैष्णवकीर्तनादि। अभागवतदृष्ट्यादेरेषा विशेषतः शुद्धिः। तदर्थविहितकर्मानुष्ठानानन्तरं विशेषतः शुद्ध्यापादकं विधीयते यद्वा, अशक्तस्य परमास्तिकस्य दृढाध्यवसायसम्पन्नस्य अभागवतदृष्ट्यादेर्भागवतदृष्ट्यादिकमात्रमेव प्रायश्चित्तं न्मतव्यम्॥ २४॥

कृता यज्ञाः समस्ताश्च दानानि च तपांसि च।
प्रायश्चित्तमशेषेण नित्यमर्चयतां हरिम्॥ २५॥

अविच्छेदेन भगवन्निरतस्य तदर्चने कालं नयतः प्रायश्चित्तराहित्येऽपि न वृत्तिवैकल्यमित्यभिप्रायेणाह—कृता-इति। यथाशक्ति यत्किञ्चिदनुष्ठानेनापि यज्ञदानतपःप्रभृतिकं सर्वम्पूर्णम्भवति प्रायश्चित्तमपि प्रतिपदोक्ताशक्तौ यत्किञ्चिदनुष्ठानमात्रेणैव मुख्यकल्पानुष्ठानसदृशं भवतीत्यर्थः। न पुनरत्र नित्यस्य यज्ञादेः सति निमित्ते प्रायश्चित्तस्य चाकरणमभिप्रेतम्। शक्यनित्यकर्मपरित्यागे प्रायश्चित्तानन्वये भगवदिज्यायामप्यनधिकारित्वोक्तेः। यद्वा, अनेन श्लोकेन यज्ञदानादिसकलधर्मापेक्षया नित्यभगवदाराधनस्य परमैकान्तिनः प्रधान धर्मतया तत्प्रशंसा क्रियत इति॥ २५॥

एवं नित्यानि कर्माणि तथा नैमित्तिकानि च।
भर्तुः प्रियकराणीति कुर्यात्प्रीत्यैव केवलम्॥ २६॥

उक्तं विहिताचारं निगमयति—एवमिति। स एवमुक्तानि नित्यानि कर्माणि नैमित्तिकानि च आत्मभर्त्तुः सर्वेश्वरस्य

प्रीतिकराण्येव कुर्यात् प्रीत्यैव केवलं न तु विहितानीति निर्बन्धबुद्ध्या ॥ २६ ॥

अथैवं ब्राह्मणो विद्वानेकान्ती धर्ममाचरन् ।
सरहस्यमिदं सम्यक्साधुभ्यश्चोपपादयेत् ॥ २७ ॥

अथेति । ब्राह्मणो विद्वान् अधीतवेदः कृततद्विचारः परमैकान्तीविप्रः एवमुक्तक्रमेण धर्मं विहिताचारमाचरन् सरहस्यं गोप्यार्थसहितम् । इदं विहिताचाररूपं सर्वं सम्यक् साधुभ्यः उपदेशपात्रेभ्यश्चोपपादयेत् उपदिशेत् ॥ २७ ॥

प्रजापालनरूपं च धर्मं भागवतं चरन् ।
प्राप्यापि महदैश्वर्यं मृतः स्यादेव निर्भरः ॥ २८ ॥

एवं क्षत्रियोऽपि स्ववर्णविहिताचारं कुर्यादित्याह-प्रजेति । भगवदाराधनतया प्रजापालनादिरूपं स्वधर्मं चरन् । अत्यधिकमैश्वर्यं लब्ध्वापि राजा निर्भर एव स्यात् । महता तेनैश्वर्येण न बध्यत इत्यर्थः । इदमैश्वर्यं स्वस्य न बन्धकमितिमत्वा निर्भर एवस्यादित्यर्थः ॥ २८ ॥

तथा वैश्यः स्वधर्मस्थो वैष्णवानभितर्पयन् ।
धनेष्वसक्त एकान्ती परं प्राप्नोति तत्पदम् ॥ २९ ॥

अथ वैश्योऽपि स्वविहिताचारं कुर्यादित्याह-तथेति । धनेष्वसक्तः जातिनिबन्धनलोभमकुर्वाणः । यद्वा, पशुपालनादिना विहितेन धनं सम्पादयन्नपि न तत्र सक्तः स्यादिति ॥ २९ ॥

शुश्रूषमाणः शूद्रोऽपि वैष्णवानग्रजन्मनः ।
स्वधर्मरत एकान्ती मुच्यते सर्वकिल्बिषैः ॥ ३० ॥

शुश्रूषमाणेति । शूद्रोऽपि अग्रजन्मनो वैष्णवान् शुश्रूषमाणः शूद्रस्योक्तं त्रैवर्णिकशुश्रूषां वैष्णवत्रैवर्णिकविषये नियमया ति ॥ ३० ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः।
एकान्तिनः स्वधर्मस्थाः सर्वे यान्ति परां गतिम्॥३१॥

एवं चतुर्णां वर्णानां स्ववर्णविहिताचारः अनुल्लंघनीयः, इत्युक्त्वा चतुर्णामप्याश्रमिणां स्वाश्रमविहिताचारोवऽश्यमनुष्ठेय-इत्याह–ब्रह्मचारीति। ब्रह्मचारी गृहस्थो, वानप्रस्थो यतिश्चेति परमैकान्तिनः सर्वे स्वधर्मस्थाः स्वाश्रमनियतधर्मनिरताः परां गतिं यान्ति भगवन्निग्रहस्याविषयभूता भवन्तीत्यर्थः॥ ३१॥

नित्योप्तकेशा निभृतास्त्यक्तसर्वपरिग्रहाः।
स्त्रीशूद्राद्याः स्वधर्मेण वर्तेरञ्जगतीपतौ॥ ३२॥

अथ कासाञ्चित् स्त्रीणां केषाञ्चिच्छूद्राणां च ग्राम्यभोगपरित्यागेनावस्थितिमनुजानाति–नित्येति। उप्ताः वपनं प्रापिता केशा येषां ते तथोक्ताः। निभृताः निश्चलाः। त्यक्तसर्वपरिग्रहाः धनदारादिसकलपरिग्रहरहिताः। स्त्रीशूद्राद्याः। आदिशब्देन तत्सन्निकृष्टा गृह्यन्ते। जगद्गुरौ भगवद्विषये स्वधर्मेण वर्तेरन् स्वधर्मेण भगवन्तमाराधयेयुरित्यर्थः। 'जपस्तपस्तीर्थसेवा प्रव्रज्यामन्त्रसाधनम्। देवताराधनञ्चेति स्त्रीशूद्रपतनानि षट्' इति शास्त्रं परमैकान्तिव्यतिरिक्तविषयम्। अत्र यथार्हं तन्नितयस्यापि तेष्वनुज्ञानात्॥ ३२॥

वर्णाश्रमपराश्चैव परेऽपि हरिमाश्रिताः।
अपायैर्नावसीदन्ति स्वेषु धर्मेष्ववस्थिताः॥ ३३॥

वर्णेति। चत्वारो वर्णाश्चत्वार आश्रमाः अपरेऽपि अनुलोमप्रतिलोमजाता विदुरादयः हरिमाश्रिताः स्वविहितधर्मनिरताः अपायैरपायाधिकारोक्तैः नावसीदन्ति अवसादं न प्राप्नुवन्ति॥
॥ ३३॥ इति विहिताचाराधिकारः।

समाश्रितो दास्यरतिः पतिं विश्वस्य माधवम् ।
यथार्हमाचरन्धर्मान्भूयो दृष्टयादि संश्रयेत् ॥ ३४॥

प्रतिषिद्धवर्जनस्य विरुद्धेषु प्रपञ्चयिष्यमाणत्वात विहिताचारानन्तरं षड्विधवृत्त्युद्देशक्रमप्राप्तं प्रतिषिद्धविवर्जनं विहाय दृष्टिमधिकरोति–समाश्रितेति । विश्वस्य पतिं माधवं श्रियः पतिं दास्यरतिः कैङ्कर्यरूपफलार्थी सन् समाश्रितो यथार्हं स्ववर्णाश्रमोचितधर्मानाचरन् विहिताचारान् कुर्वन् भूयः दृष्टयादि संश्रयेत । आदिशब्देन लक्ष्मभक्तिसत्सेवानां संग्रहः ॥ ३४ ॥

प्रतिष्ठां सर्वधर्माणां प्रसादैकात्मनां हरेः।
तदाज्ञारूपमनघं शास्त्रश्रुत्यादि मानयेत् ॥ ३५ ॥

प्रतिष्ठामिति । हरेः प्रसादैकात्मनां भगवत्प्रसादैकफलानां सर्वधर्माणां प्रतिष्ठां प्रतिष्ठाहेतुत्वात् प्रतिष्ठेत्युच्यते, सकलधर्मप्रतिपादकमित्यर्थः । तदाज्ञारूपं भगवदाज्ञारूपम् अनघं नित्यापौरुषेयतया वक्तव्यदोषभ्रमाद्यमूलकं श्रुत्यादि । आदिशब्देन स्मृतीतिहासपुराणानि संगृह्यन्ते । श्रुत्याद्यात्मकं शास्त्रं मानयेत् बहुमन्येत । तत्वाहितपुरुषार्थप्रमापकमिदमेवेति सादरमनुसन्दधीतेत्यर्थः ॥ ३५ ॥

साङ्गान्वेदानधीयीत न्यायैश्चार्थं विचारयेत् ।
विद्यात्कर्मादिकं यत्र विष्णोराराधनात्मकम् ॥ ३६ ॥

साङ्गानिति । साङ्गान् शिक्षाकल्पाद्यङ्गसहितान्वेदान् अधीयीत अध्ययनेन स्वाध्यायसंस्कारं कुर्यात् । न्यायैर्जैमिनिसूत्रोक्तैर्नयैः अर्थं वेदार्थं च विचारयेत । विष्णोराराधनात्मकम् आराधनरूपमखिलं सर्वमपि कर्मजातं यत्र वेदे शब्देषु विद्यात् जानीयात् तान्वेदानधीयीत । तत्तदर्थं च विचारयेदित्यन्वयः ॥ ३६ ॥

व्यवस्थां पदवर्णादेश्छन्दः कालक्रियाविधिम् ।
ज्ञात्वाङ्गैर्गमयेदर्थान् न्यायैः सर्वत्र साधुभिः ॥ ३७ ॥

व्यवस्थामिति । पदवर्णादेर्व्यवस्थाम् । आदिशब्देन मानादिकं गृह्यते । पदव्यवस्थां वर्णव्यवस्थां प्रमाणादिव्यवस्थाम् । छन्दः गायत्र्यादि । कालं कालस्वरूपम् । क्रियाविधिं यज्ञविधिम् । अङ्गैर्ज्ञात्वा, अङ्गशब्दो न्यायविस्तरस्याप्युपलक्षणार्थः। पदव्यवस्थां व्याकरणेन, वर्णव्यवस्थां शिक्षया, प्रमाणादिव्यवस्थां न्यायविस्तरेण, छन्दः छन्दश्चित्या, कालं ज्योतिषेण, क्रियाविधिं कल्पसूत्रेण च ज्ञात्वेत्यर्थः । साधुभिः समीचीनैर्न्यायैः सर्वत्र अर्थान् निगमयेत् । मीमांसया वेदार्थविचारं कुर्यादित्यर्थः ॥ ३७ ॥

शिष्टैर्वर्णाश्रमादीनामच्युताराधनात्मकान् ।
स्मृतांश्च विविधान्धर्मान्विद्याद्वैदिकसंमतान् ॥ ३८ ॥

शिष्टैरिति। वर्णाश्रमादीनामित्यत्रादिशब्देन अवस्था गृह्यते अच्युताराधनात्मकान् भगवदाराधनात्मरूपान् शिष्टैर्मन्वादिभिः स्मृतान् स्मृतिविषयीकृतान् विविधान्बहुविधान् वैदिकसंमतान् वेदप्रामाण्याभ्युपगन्तृसंमतान् वर्णाश्रमादीनां धर्मान् वर्णाश्रमादिनियतधर्मान् विद्यात् जानीयात् । अच्युताराधनात्मकं विविधवर्णाश्रमनियतधर्मप्रतिपादकवैदिकसंमतं मन्वादिविरचितस्मृतिपरिशीलनं कुर्यादित्यर्थः । मन्वादिधर्मशास्त्रैः कर्मभागमुपबृंहयेदित्यर्थः ॥ ३८ ॥

अथौपनिषदं चार्थं शृणुयान्न्यायतः सुधीः ।
येनाराध्यं परं ब्रह्म जानीयात्पुरुषोत्तमम् ॥ ३९ ॥

अथेति-अथशब्दः आनन्तर्यपरः।आनन्तर्यं चात्र कर्मविचारानन्तरम्।साङ्गान्वेदानधीयीतेत्यारभ्यैतत्पर्यन्तं कर्मविचारस्य प्रतिपाद्यतया प्रकृतत्वात्। 'अथातो ब्रह्मजिज्ञासा' इत्यत्र 'अथ' शब्दः अत्रत्याथशब्देन प्रत्यभिज्ञापितः। तेन 'सौत्राथ शब्दस्य साधनचतुष्टयानन्तर्यपरत्ववादिनां कुदृष्टीनामनवकाशो मन्तव्यः। न्यायतः शृणुयादित्यनेन जिज्ञासाशब्दार्थोऽप्युक्तः। येनाराध्यं परं ब्रह्मेत्यनेन सूत्रस्थब्रह्मशब्दः प्रत्यभिज्ञापितः। पुरुषोत्तममित्यनेन ब्रह्मशब्दार्थोक्तिः। अत एव ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषानवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयत इति भगवद्भाष्यकारोक्तिः।अक्षरार्थस्तु अथ कर्मविचारानन्तरम् औपनिषदम् उपनिषत्प्रतिपादितम् अर्थं न्यायैः शृणुयात्। 'तद्विजिज्ञासार्थं सद्गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इत्यादिप्रक्रियया आचार्योपसत्तिपूर्वकं गुरुमुखेन वेदान्तमीमांसां शृणुयादित्यर्थः। शृणुयादिति न श्रवणस्य विधिः। तस्य रागतः प्राप्तत्वात्। साङ्गसशिरस्कस्वाध्यायाध्ययनेनापातत: पदपदार्थावगमेन श्रवणे रागत एव प्रवृत्तिः।अपि तु श्रवणमनूद्य गुरूपसत्तिर्विधीयत इति बोद्धव्यम्। येन औपनिषदार्थश्रवणेन अखिलाराध्यं पूर्वभागप्रतिपादितसकलधर्माराध्यं पुरुषोत्तमशब्दवाच्यं परं ब्रह्म जानीयात्।आराध्यमित्यनेन पूर्वोत्तरभागयोराराधनतदाराध्यज्ञापनार्थं प्रवृत्ततया 'सर्वे वेदा यत्रैकं भवन्ति' इत्यादिश्रुतिप्रतिपादितपरमार्थपरत्वम् एकार्थपरतयापि एकशास्त्रतद्विचारयोरप्येकव्याख्येयैकव्याख्यानात्मकतया ऐकशास्त्र्यं चाभिप्रेतम् ॥ ३९ ॥

पञ्चरात्रं महद्दिव्यं शास्त्रं श्रुतिविभावनम् ।
विशेषेणाधिगन्तव्यं गीतं भगवता स्वयम् ॥ ४० ॥

पञ्चरात्रेतिहासपुराणैर्वेदांतार्थमुपबृंहयेदित्याह–पञ्चरात्रमिति । भगवता स्वयं गीतं स्वेनैवोक्तम् अष्टोत्तरशतसंहितारूपेण प्रवृत्तत्वान्महत् । वेदगुह्यार्थकत्वात् श्रुतयो विशेषेण भाव्यंते बोध्यंते अनेनेति श्रुतिविभावनम् ।श्रुत्युपबृंहणं पञ्चरात्राख्यं शास्त्रं विशेषेणाधिगंतव्यम् । वेदांतोपबृंहणेतत्वहितपुरुषार्थांशेषु विशदतरप्रतिपादकतयात्यंतांतरङ्गत्वेन विशेषेणाधिगंतव्यमिति भावः ॥ ४० ॥

वेदवेद्यः स भगवान् कृपया परयाच्युतः ॥
चतुर्विधमिदं प्राह सर्वेषां हितकारणात् ॥ ४१ ॥

वेदवेद्येति । कृपया परयेत्यनेन विनिग्रहमूलपाशुपतादितंत्रेभ्यो व्यावृत्तिरस्य प्रदर्श्यते । चतुर्विधम् आगमासिद्धांतमंत्रसिद्धांततंत्रासिद्धांततंत्रांतरासिद्धांतभेदेन चतुर्द्धा विभक्तम् ४१॥

परस्य ब्रह्मणस्तस्य विद्याद्व्यूहादिसंस्थितीः ॥
ज्ञानं क्रियाः समस्ताश्च योगं चात्र फलानि च॥४२॥

परस्येति । परस्य ब्रह्मणः तस्य अच्युतस्य व्यूहादिक्रमं ज्ञानं ज्ञानस्वरूपं समस्ताः क्रियाः कर्षणादिप्रतिष्ठांताः प्रतिष्ठाद्युत्सवान्ताः, उत्सवादिप्रायश्चित्तान्ताः, सर्वाः क्रियाः योगं योगस्वरूपं ज्ञानक्रियायोगस्वरूपग्रहणं चर्याया उपलक्षणार्थम् अत्र ज्ञानयोगक्रियाचर्यासु फलानि च विद्यात् ज्ञानयोगक्रियाचर्याफलानि च । अत्र पञ्चरात्रशास्त्रे विद्यादितिवान्वयः । प्रायेण संहितादिषु हि ज्ञानयोगक्रियाचर्यास्तदाख्यया समाख्यातैश्चतुर्भिः पादैः प्रतिपादिताः ।अतः तत् ज्ञानं सम्पादयेदित्यर्थः ॥ ४२ ॥

पुराणान्यवगाहेत सेतिहासानि यत्र च ॥
केशवस्य जगत्सर्गस्थितिभङ्गादि कीर्त्यते ॥ ४३ ॥

पुराणानीति । यत्र पुराणेषु भगवतः जगत्सृष्टिस्थितिप्रलयादिकं कीर्त्यते, तानि सेतिहासानि इतिहाससहितानि पुराणान्यवगाहेत परिशीलयेत् । जगत्सर्गस्थितिभङ्गादीत्यादि शब्देन दिव्यावतारचेष्टितानि गृह्यन्ते ॥ ४३ ॥

स्तोत्राणि कल्पनामानि कथाश्च विविधा हरेः ।
सद्भिः प्रणिहितांश्चान्यान् प्रबन्धान्परिशीलयेत् ॥४४॥

स्तोत्राणीति । कल्पाः मन्त्रप्रतिपादकभागाः व्रतप्रतिपादकभागा वा । नामानि श्रीसहस्रनामादीनि । सद्भिः भगवज्ज्ञानेन लब्धसत्ताकैः महात्मभिः प्रणिहितान्निर्मितान् अन्यांश्च प्रबन्धान् परिशीलयेत् ॥ ४४ ॥

मूलस्कन्धमया वेदाः पञ्चरात्रं च यत्परम् ।
अन्यच्च तत्परं ग्राह्यं शास्त्रं नान्यादृशं पुनः ॥ ४५ ॥

मूलेति । मूलस्कन्धमयाः वेदाः मूलवेदाः वेदब्राह्मणा यदात्मकाः स्कन्धमया वेदा अनुवाकोपनिषदात्मकाश्च पञ्चरात्रश्च यत्परं यदर्थप्रतिपादकम् अन्यत्सर्वं च ग्राह्यमन्यादृशं मूलस्कन्धमयवेदपञ्चरात्रविरुद्धं चेत् न सङ्ग्राह्यम् ॥ ४५ ॥ इति दृष्टयधिकारः ॥

प्रभुं भक्तपराधीनं नित्यमालोकयेद्धरिम् ।
विमानमथ वा तस्य दूराद्गोपुरमेव वा ॥ ४६ ॥

अथ भक्तिमधिकरोति—प्रभुमिति । प्रभुं सर्वेश्वरं तथापि भक्तपराधीनं हरिं नित्यमालोकयेत् । भगवदालोकनादीनां भक्तिमूलकतया तज्जनकतया वा भक्तित्वोक्तिः । अथ तस्य हरेर्विमानं गोपुरमेव वा नित्यमालोकयेदिति वान्वयः ॥ ४६ ॥

स्वरूपरूपविभवगुणकर्माणि शार्ङ्गिणः ।
व्याचक्षीत निबध्नीयाच्छृणुयाद्विलिखेत्पठेत् ॥ ४७ ॥

स्वरूपमिति । स्वरूपं विग्रात्मस्वरूपं, रूपाणि विग्रहाः, विभवशब्दो विभूतिपरः, गुणाः ज्ञानादयः, कर्माणि गजेन्द्र-रक्षणपार्थसारथ्यादीनि दिव्यचेष्टितानि व्याचक्षीत व्याकुर्वीत; निबध्नीयात् तद्विषयाणि निबन्धनानि कुर्यात्; शृणुयात् शृणुयान्महन्मुखरितान्; विलिखेत् विशेषेण लिखेत पठेत वाचयेत् ॥ ४७ ॥

चतुर्भुजमुदारांगं श्यामं पद्मनिभेक्षणम् ।
श्रीभूमिलीलासहितं चिन्तयेच्च सदा हृदि ॥ ४८ ॥

चतुर्भुजमिति । उदाराङ्गम् उन्नताङ्गम् ॥ ४८ ॥

उपेत्यायतनं विष्णोः प्रणिपत्य ततस्ततः ।
परीत्य देवदेवेशं प्रणम्यात्मानमर्पयेत् ॥ ४९ ॥

उपेत्येति । परीत्य प्रदक्षिणीकृत्य आत्मानमर्पयेत् । आत्म-समर्पणं कुर्यात् ॥ ४९ ॥

प्रीतिसंहृष्टसर्वाङ्गः स्तुत्वा वापि विलोकयेत् ।
कृतप्रसादः सेवेत नियतात्मा यथोचितम् ॥ ५० ॥

प्रीतीति । प्रीत्या भगवत्सेवया हृष्टानि रोमाञ्चकंचुकितानि सर्वाङ्गानि यस्य स तथोक्तः स्तुत्वा स्तोत्रं कृत्वा अपि च पुनश्च विलोकयेत् पश्येत् कृतः भगवत्कृतः प्रसादो यत्र स तथोक्तः । उत्पादितभगवत्प्रसाद इत्यर्थः कृतप्रसादः प्रसन्नात्मेति वार्थः नियतात्मा नियमितविषयान्तरसञ्चारिहृदयः यथोचितं सेवेत स्ववर्णाश्रमावस्थोचितं सेवेत ॥ ५० ॥

यात्रादिषु च सेवेत तद्दाष्टिस्तद्गुणान्वदन् ।
तत्कर्माणि च युक्तस्तज्जनसम्बन्धहर्षितः ॥ ५१ ॥

यात्रादिष्विति । तद्दृष्टिर्भगवन्यस्तदृष्टिः तद्गुणान् वदन् भगवद्गुणप्रतिपादकप्रबन्धान् पठन् तत्कर्म्मणि रथाकर्षणपीठोद्वहनादिभगवत्कर्म्माणि सक्तः तज्जनसम्बन्धहर्षितः भगवद्यात्रावलोकनार्थागतजनसंघर्षेण हृष्टरोमा सेवेत ॥ ५१ ॥

गायेदास्फोटयेन्नृत्येदुत्पतेन्निपतेत्स्खलेत् ।
क्रोशेद्विषीदेद्धृष्येच्च विष्णोः प्रेमवशानुगः ॥ ५२ ॥

गायेदिति । आस्फोटनं भुजास्फोटनं करतालप्रवर्त्तनं वा प्रेमवशानुगः प्रेमपरतन्त्रः ॥ ५२ ॥

कुर्वाणश्च सदावृत्तिं विष्णोरायतने वसेत् ।
दद्याच्च विविधान् भोगाननुरूपान्मनोरमान् ॥ ५३ ॥

कुर्वाणेति । विष्णोरायतने भगवन्मन्दिरे वृत्तिं संमार्जनानुलेपनादि कुर्वाणः सदा वर्त्तेत विविधान् चन्दनागुरुकस्तूरीप्रभृतिकान् अनुरूपान् देशकालानुरूपान् शास्त्रानुरूपान्वा मनोरमान् भोगान् भोगहेतून् भगवते दद्यात् ॥ ५३ ॥

परीवारांश्च सेवेत भक्त्या परमया हरेः ।
तत्तदर्चागतान् भक्तान् गुर्वादींश्च विशेषतः ॥ ५४ ॥

परीवारानिति । हरेः परीवारान् देवीभूषणायुधपरिजन संवाहनानि; परिच्छदान् गरुडसेनाधिपचण्डादिद्वारपालकुमुदादिगणाधिपरूपान्; तत्तदर्चावतारस्थलेषु प्रतिष्ठापितान् परमभक्तान् विशेषतो गुर्वादींश्च सेवेत ॥ ५४ ॥

हरेराश्रितवात्सल्यात्तत्तत्स्थानाभिनन्दिनः ।
असाधारणभावेन तत्र तत्रैव वा वसेत् ॥ ५५ ॥

हरेरिति । आश्रितवात्सल्यात् तत्तत्स्थानाभिनन्दिनः श्रीरङ्गकरिगिरियदुगिरिप्रभृतिदिव्याभिव्यक्तिदेशेषु हर्षेण

वसतो हरेः असाधारणभावेन तदसाधारणत्वेन तत्र श्रीरङ्गादिषु स्थलेष्वेव वा वसेत् ॥ ५५ ॥

ये च भुक्तोज्झिता भोगाः श्रीपतेः शिरसा नतः ।
अभ्येत्य प्रतिपद्येत भक्त्या परमया स्वयम् ॥ ५६ ॥

ये चेति । श्रीपतेर्ये भुक्तोज्झिताः अनुभूय परित्यक्ता भोगा माल्यादिकाः तान् अभ्येत्य आभिमुख्येनागत्य नतः प्रणतः शिरसा प्रतिपद्येत स्वीकुर्यात् ॥ ५६ ॥

पादोदकं भगवतो लब्ध्वा भागवतस्य वा ।
तिष्ठन्नेवाथवासीनः पिबेच्छुद्धिश्च नापरा ॥ ५७ ॥

पादोदकमिति । भगवतो भागवतस्य वा पादोदकं लब्ध्वा तिष्ठन्नेवाथवा आसीनो वा पिबेत् यथास्थितो लभेत तथा स्थित एव पिबेदित्यर्थः । अपरा अन्या शुद्धिर्न आचमनहस्तक्षालनादिरूपा शुद्धिर्नास्तीत्यर्थः । अथ केषुचित्कोशेष्वेतदनन्तरम् 'अपीत्वा विष्णुपादस्य सलिलं मूर्ध्नि निक्षिपेत् । पातयन्वा क्षितौ मोहात् पतत्येव न संशयः' इति श्लोको दृश्यते बहुकोशसंवादे सति सोऽपि ग्राह्यः । स्पष्टार्थः ॥ ५७ ॥

पुरराष्ट्राभिवृद्ध्यर्थमर्चितस्य जगत्पतेः ।
शेषभाजोऽर्थिनः सर्वे सन्त एव सतां गृहे ॥ ५८ ॥

पुरेति । पुरवृद्ध्यर्थं राष्ट्राभिवृद्ध्यर्थं पुरराष्ट्रादावर्चितस्य च जगद्गुरोर्नारायणस्य शेषभाजः । प्रसादार्हा अर्थिनः सर्वेऽपि तत्प्रसादापेक्षिणः सर्वेऽपि सतां गृहे अर्चितस्य जगद्गुरोः शेषभाजस्तु सन्त एव परमैकान्तिन एव अन्ये तु प्रसादार्हा न भवन्तीत्यर्थः ॥ ५८ ॥ इति भक्त्यधिकारः ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ।
चक्राद्यैरङ्कयेद्गात्रमात्मीयस्याखिलस्य च ॥ ५९ ॥

अथ लक्ष्माधिकारमाह-ब्राह्मण इति। इतरःअनुलोमप्रतिलोमजातः चक्राद्यैः पञ्चभिरायुधैर्गात्रं स्वशरीरम् आत्मीयस्य स्वकीयस्य च गात्रमङ्कयेत् चिह्नितं कुर्यात् ॥ ५९ ॥

अनिष्टानां निवृत्त्यर्थमैकान्त्याय जगत्पतेः ।
सिद्ध्यर्थं कर्मणां चैव धार्यं चक्रादिलाञ्छनम् ॥६०॥

अनिष्टानामिति। अनिष्टानाम् अमङ्गलादीनां निवृत्त्यर्थं भगवति परमैकान्त्यज्ञापनाय भगवत्कर्मणां सिद्ध्यर्थं च अधिकारलाभार्थं चक्रादिलाञ्छनं धार्यम् ॥ ६० ॥

बाह्वोर्ललाटे शिरसि हृदये चाग्रजन्मनाम् ।
शङ्खचक्रगदाशार्ङ्गखड्गैर्मन्त्रेण दाहयेत् ॥ ६१ ॥

बाह्वोरिति। बाह्वोः शंखचक्राभ्यां तत्रापि दक्षिणे चक्रेण सव्ये शंखेन ललाटे गदया शिरसि शार्ङ्गेण हृदये खड्गेन च तत्तन्मन्त्रेण दाहयेदित्यर्थः ॥ ६१ ॥

विष्णोरायतनाग्नौ वा गुरोरात्मन एव वा ।
हुते हेमादिभिस्तप्तैः सुरूपैरर्चितैः क्रमात् ॥ ६२ ॥

विष्णोरिति । विष्णोरायतनाग्नौ वा गुरुपाकार्थमुत्पादिते भगवत्पाकशालास्थिते अग्नौ वा इज्याङ्गभूतहोमार्थकल्पिताग्नौ वा इति आयतनाग्निशब्दार्थः। हुते गुरोराचार्यस्य अग्नावौपासनाग्नौ आत्मनः शिष्यस्यौपासनाग्नौ वा तप्तैः सुरूपैः शोभनाकारैः अर्चितैर्गन्धपुष्पादिभिरर्चितैः हेमादिभिः सुवर्णरजतादिभिः ताम्रादिभिर्वा निर्मितैः शङ्खचक्रगदाशार्ङ्गखड्गैः अग्रजन्मनां त्रैवर्णिकानां बाह्वोर्ललाटे शिरसि हृदये च क्रमान्मन्त्रेण दाहयेदिति श्लोकद्वयस्यैकवाक्यतयान्वयः ६२

दासभूतं यदात्मानं बुद्ध्येत परमात्मनः ।
तदैव गात्रं कुर्वीत शङ्खचक्रादिलाञ्छितम् ॥ ६३ ॥

दास्यचिह्नत्वादवश्यं चक्रादिधारणं कुर्यादित्याशयवानाह–दासभूतमिति। आत्मानं स्वं यदा परमात्मनो दासभूतं मन्यते तदैव तस्मिन्नेव काले गात्रं स्वदेहं शंखचक्रादिलाञ्छितं कुर्वीत चक्रादिधारणे भगवच्छेषत्वज्ञानमेवाधिकारः इति भावः ॥ ६३ ॥

आङ्कितं क्वचिदप्येवं चक्रेणैकेन केवलम्।
अनिष्टानां तु भूतानां न तावद्वशगो भवेत् ॥ ६४ ॥

सुदर्शनधारणमात्रेणापि भागवतत्वसिद्धिरस्तीत्याह–अङ्कितमिति। क्वचिदङ्गे दक्षिणे बाहौ एकेन केवलं शंखाद्यसमवाहितेन चक्रेण अङ्कितेऽपि जन्मी अनिष्टानां भूतानां यमकिङ्कराणां पिशाचादीनां वा तावद्वशगो न भवेत् ॥ ६४ ॥

अग्नीषोमौ हि चक्राब्जौ सर्वे एव तदात्मकाः।
यदि वा मानयन्नेकं पूर्णो हि परमश्नुते ॥ ६५ ॥

शंखचक्रयोर्न द्वयधारणं मुख्यं तदुभयाधारणे हि द्वयोरन्यतरद्वा बिभ्रद्वैष्णव एव भवतीत्याह–अग्नीति। चक्राब्जौ अग्नीषोमौ चक्रमग्निः अब्जः शंखः सोमः सर्वा एव देवतास्तदात्मकाः अग्निसोमात्मकाःअतश्चक्राब्जधारणं मुख्यमिति शेषः। यदि वा तदुभयधारणरहितो वा एकन्तयोरन्यतरमानयन् दधानः पूर्णः पूर्ण एव सन् परमश्नुते हिशब्द एवकारार्थः प्रसिद्धिपरो वा ॥ ६५ ॥

शङ्खचक्रप्रधानं हि सर्वमन्यद्गदादिकम्।
अंकितः शङ्खचक्राभ्यां सर्वैरङ्कित एव वा ॥ ६६ ॥

ननूक्तं शंखचक्रद्वयधारणं मुख्यमिति तत्कथं युज्यते ? पञ्चायुधधारणस्यापि विहितत्वादित्याशंक्य शंखचक्रयोः प्रधान

तया तदन्येषां तदन्तर्भूतत्वेन तद्धारणं विनापि मुख्यमेवे-त्याह–शंखेति। अन्यत् शंखचक्रव्यतिरिक्तं गदादि सर्वं शंखचक्र-प्रधानम्। अतः शंखचक्राभ्याम् अङ्कितः सर्वैरेव पञ्चभिरा-युधैरप्यङ्कितो भवेत्। पंचायुधधारणं वैकल्पिकमिति भावः। यद्वा अग्नीषोमावित्यादि श्लोकद्वयस्यैवं योजना। अग्नीषोमा-विति यद्वेत्यत्र वाशब्दः मतान्तरद्योतनार्थः। अथवे-त्यर्थः। अग्निसोमरूपयोः चक्राब्जयोर्मध्ये एकमन्यतरं मान-यन् दधानः यदि न अपूर्णः। अस्तु तत ततः किमित्यत आह पूर्णो हि परमश्नुत इति अन्यतमानि फलानीति भावः।पञ्चायुधा-नां प्रधानत्वात् चक्राब्जयोस्ताभ्यामेवाङ्कितो भवेत्सर्वैर्वाङ्कितो भवेत् विकल्पोऽविशिष्टफलत्वात्। अधारिणस्त्वपूर्णत्वान्नपर-प्राप्तिः। किन्त्वर्वाचीनता तत्र पक्षे अब्जशब्दः शंखपरः औचि-त्यात्। इत्यभिप्रायेणाह। शंखचक्रेति यतः सर्वात्मकत्वं शंखचक्रयोस्ताभ्यामङ्कितः स्यात् सर्वैरङ्कितो वा स्यात्।अङ्कित इत्यत्र स्यादिति शेषः। 'अन्ये पुराणां लिङ्गान्यन्ये तावका-न्यर्पयन्ती' ति बहुवचनश्रुत्या पञ्चायुधधारणं विधाय अन्ये इत्यनेन तस्याधिकारिविशेषनियतत्वकथनाद्व्यवस्थितो विक-ल्पः॥ ६६॥

धारयेदूर्ध्वपुण्ड्रांश्च विष्णोः प्रीतिकरान्सदा।
जपहोमार्चनध्यानदानादिषु विशेषतः॥ ६७॥

धारयेदिति। भगवन्मुखोल्लासहेतुत्वाज्जपादिभगवत्कैङ्कर्य-योग्यतापादकत्वाच्च ऊर्द्ध्वपुण्ड्रधारणं विशेषतः कर्त्तव्यमि-त्यर्थः॥ ६७॥

नश्यन्ति सकलाः क्लेशा नराणां पापसम्भवाः।
अभीष्टान्यखिलानि स्युरूर्द्ध्वपुण्ड्रस्य धारणात्॥ ६८॥

ऊर्द्धपुण्ड्रधारणस्य फलान्तराण्यप्याह–नश्यन्तीति। पापसम्भवाः क्लेशा नश्यन्ति क्लेशहेतुभूतानि पापानि नश्यन्तीत्यर्थः ॥ ६८ ॥

त्रयोदश द्वादश वाप्यूर्द्धपुण्ड्राणि धारयेत्।
एकं चत्वारि षट् चाष्टावपि वाञ्छन्ति केचन ॥ ६९ ॥

ऊर्द्धपुण्ड्रधारणे मतभेदेन संख्याविकल्पमाह–त्रयोदशेति। त्रयोदश, द्वादश वेति स्वमतम्। अन्यत्तु अवमतं परमतम् ६९

ऋजूनि स्फुटपार्श्वानि सान्तरालानि विन्यसेत्।
ऊर्द्ध्वपुण्ड्राणि दण्डाब्जमत्स्यदीपनिभानि च ॥ ७० ॥

ऋजूनीति। ऋजूनि स्फुटपार्श्वानि सुव्यक्तपार्श्वानि यथा स्वेदोद्गमे पार्श्वयोरभास्वरता न भवति यथा वा ललाटचर्मणः प्रत्यक्षाविषयता न भवति तथा पार्श्वयोर्नैबिडयं सम्पादनीयमित्यर्थः। सान्तरालानि सच्छिद्राणि न्यसेत्। ललाटादिस्थानेष्विति शेषः। कथंरूपाणि न्यसेदित्यपेक्षायामाह। दण्डाब्जमत्स्यदीपनिभानि चेति द्वन्द्वान्ते श्रूयमाणस्य निभशब्दस्य दण्डादिना प्रत्येकं सम्बन्धश्चकारात् हरिपादाकृत्यूर्ध्वपुण्ड्रसङ्ग्रहः। अत्र दण्डाकारोर्द्धपुण्ड्रधारणं मुख्यं विष्णुपादाकृत्यूर्द्धपुण्ड्रधारणं मुख्यमिति जानीध्वम्। 'हरेः पादाकृतिमात्मनो हिताय मध्ये छिद्रमूर्द्धपुण्ड्रं यो धारयेत् स परस्य प्रियो भवति स पुण्यभाग् भवति' इत्याथर्वणे श्रुतत्वात् चक्राब्जमत्स्यदीपनिभानि चेत्यपरः पाठः ॥ ७० ॥

विष्णोरूर्द्ध्वतया क्षेत्रे पर्वतादौ प्रशस्तया।
मृदोर्द्धपुण्ड्रं देवनामन्यैर्वा छिद्रमेव वा ॥ ७१ ॥

केन द्रव्येणेत्यपेक्षायामाह–विष्णोरिति। विष्णोः क्षेत्रे पर्वपादौ प्रशस्तया मृदोर्ध्वपुण्ड्रं भवति धारयेदिति वा शेषः।

देवानामर्चाबिम्बानामन्यैर्मृद्व्यतिरिक्तैः कस्तूर्यादिभिर्द्रव्यैर्वा ऊर्ध्वपुण्ड्रं वा भवति तेषामच्छिद्रमेव भवति । मनुष्याणां मृदा सच्छिद्रमेवेत्यर्थः । मृदप्यत्र श्वेतमृत्तिका । "श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ॥ श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते" इति ब्रह्माण्डपुराणोक्तेः ॥ ७१ ॥

निघर्षणादि विधिवत्कृत्वा ध्यायन् जगद्गुरुम् ।
आसीनोऽङ्गुलिभिर्दद्यादूर्ध्वपुण्ड्रान् स्वयं क्रमात् ॥७२॥

धारणप्रकारमाह-निघर्षणेति । विधिवत् यथाशास्त्रं जगद्गुरुं नारायणं ध्यायन् निघर्षणादि सव्यकरेण मृदालोडनब्रह्मतीर्थनिधानादिकं कृत्वा ऊर्द्धपुण्ड्रान् दद्यात् । कथंभूतः सन् जगद्गुरुं ध्यायन् नत्वन्यमनाः । आसीनो न तिष्ठन् गच्छन् धावन् शयानो वा अंगुलिभिर्दद्यात् न तु नखतृणादिना स्वयं दद्यात् नान्यहस्तेन । क्रमात् न व्यतिक्रमेण । अंगुलिभिरिति बहुवचनं मुमुक्षुव्यतिरिक्ताधिकारिणां मध्यमांगुष्ठादिभिरपि धारणानुज्ञानात् । मुमुक्षोस्तु तर्जन्यैव धारणम् । तदुक्तं ब्रह्माण्डपुराणे ब्रह्माणं प्रति भगवता । "अंगुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् । अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी । एतैरंगुलिभेदैस्तु कारयेन्न नखैः क्वचित" इति ॥ ७२॥

ऊर्ध्वपुण्ड्रंललाटे तु कुर्वीत चतुरङ्गुलम् ।
उदरे हृदि कण्ठे च दशाष्टचतुरङ्गुलान् ॥ ७३ ॥

ऊर्द्धपुण्ड्राणामौन्नत्ये प्रमाणमाह-ऊर्द्धपुण्ड्रमिति । ललाटे चतुरंगुलं चतुरंगुलोन्नतं कुर्वीत उदरे हृदि वक्षसि कण्ठे च क्रमेण दशाष्टचतुरंगुलानुच्चं कुर्वीत । उदरे दशांगुलपरिमितोच्छ्रायं वक्षस्यष्टांगुलपरिमितोच्छ्रायं कण्ठे चतुरंगुलोच्छ्रायम् ऊर्द्धपुण्ड्रं कुर्वीत ॥ ७३ ॥

दक्षिणोदरबाह्वंसेष्वेवं त्रीणीतरस्य च ।
आद्यवत्पृष्ठतो द्वे च मूर्ध्नि चैवं त्रयोदश ॥ ७४ ॥

दक्षिणेति । दक्षिणोदरबाह्वंसेषु दक्षिणोदरे उदरस्य दक्षिण पार्श्वे दक्षिणबाहौ दक्षिणांसे च इतरत्र उदरस्य वामपार्श्वे वामबाहौ वामांसे च एवं पूर्वोक्तक्रमेणैव दशाष्टचतुरंगुलान् कुर्वीत उदरस्य दक्षिणोत्तरबाह्वोरष्टांगुलौ तदंसयोश्चतुरंगुलौ कुर्वीतेत्यर्थः आद्यवल्ललाटोर्द्ध्वपुण्ड्रवत् ॥ ७४ ॥

त्रिधा सर्वत्र विस्तारश्चतुस्त्रिद्व्यङ्गुलं क्रमात् ।
उत्तमो मध्यमो हीनः पार्श्वावङ्गुलिकौ स्मृतौ ॥ ७५ ॥

त्रिधेति । सर्वत्र सर्वेषूर्द्धपुण्ड्रेषु चतुस्त्रिद्व्यंगुलान् क्रमात् विस्तारस्त्रिधा भवति तेषु मध्ये एक उत्तमस्तवपरो मध्यमः अन्यो हीनः चतुरंगुलविस्तार उत्तमः । अत इतरौ यथाक्रमं मध्यमहीनौ पार्श्वौ छिद्रोर्द्ध्वपुण्ड्रपार्श्वौ अंगुलिमात्रविस्तारौ स्मृतौ यत्तु "दशांगुलप्रमाणन्तु उत्तमोत्तममुच्यते ॥ नवांगुलं मध्यमं स्यादष्टांगुलमतः परम ॥ सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं भवेत्" इति ब्रह्माण्डपुराणवचनं तदतिविशालभालवद्विषयं वेदितव्यम् ॥ ७५ ॥

तत्र तत्र स्मरन्मन्त्रैः केशवादीन्न्यसेत्क्रमात् ।
पाणिना दक्षिणेनैव वासुदेवं त्रयोदशे ॥ ७६ ॥

तत्रतत्रेति । ऊर्द्धपुण्ड्रधारणानन्तरं तत्र तत्र ललाटाद्यूर्द्ध्वपुण्ड्रेषु स्मरन् केशवादीन् ध्यायन् मंत्रैः केशवादिमन्त्रैः क्रमात् केशवादीन् न्यसेत् केन पाणिना दक्षिणेनैव न तु वमकरेण । त्रयोदशेति शिरोधृतत्रयोदशोर्द्धपुण्ड्रे वासुदेवमन्त्रेण वासुदेवं न्यसेत् ॥ ७६ ॥

प्रणवेन तथा व्यूहैः षडष्टद्वादशाक्षरैः ।
मन्त्रैरन्यैश्च तांस्तान्वै धारयेदूर्द्ध्वपुण्ड्रकान् ॥ ७७ ॥

ऊर्द्ध्वपुण्ड्रधारणमन्त्रमाह-प्रणवेनेति। व्यूहाः केशवादि दामोदरान्तव्यूहचतुष्टयस्यापि प्रत्येकं केशवादिरूपेण त्रिविधत्वात् अत्र व्यूहशब्दस्तत्तन्मन्त्रपरः केशवादिद्वादशव्यूहमन्त्रैरित्यर्थः । प्रणवेन केशवमन्त्रेण षडष्टद्वादशाक्षरैरन्यैश्च उपदिष्टैर्भगवन्मन्त्रैः केशवपुण्ड्रधारणम् । एवं प्रणवषडष्टद्वादशाक्षरतद्तिरिक्तोपदिष्टभगवन्मन्त्रसहितैस्तत्तन्मन्त्रैर्नारायणादिपुण्ड्रधारणमिति विवेकः ॥ ७७ ॥

ततो दिव्यं च हारिद्रं सहेमतुलसीदलम् ।
मन्त्रेण धारयेच्चूर्णं ललाटे मस्तके तथा ॥ ७८ ॥

तत इति । दिव्यं देहं भगवदर्पितमिति यावत् । सहेमतुलसीदलं सुवर्णतुलसीदलचूर्णैर्मिश्रितं हरिद्रासम्बन्धि चूर्णं ललाटे मस्तके मन्त्रेण च 'श्रियोजात' इत्यादिना धारयेत् । 'ललाटे मस्तके तथे'त्याद्यङ्गग्रहणमुपलक्षणार्थम् ॥ ७८ ॥

पवित्राण्यब्जबीजानि शंखचक्राङ्कभूषणम् ।
धारयेद्वैष्णवं नाम वैष्णवाश्रयमेव वा ॥ ७९ ॥

पवित्रेति । पवित्राणि पवित्रारोपणोत्सवे भगवता धृतानि तन्तुमयानि अब्जबीजानि पद्माक्षबीजवलयानि इदं च तुलसीकाष्ठनिर्मिताक्षवलयानामप्युपलक्षणम् । शंखचक्राङ्कभूषणं शंखचक्राङ्कचिह्नितं मुद्रिकादि भूषणं वैष्णवं निजसम्बन्धिनामवैष्णवाश्रयं नित्यमुमुक्षुभेदाभिन्नवैष्णवगतं नाम भागवतं वा धारयेदित्यर्थः ॥ ७९ ॥

अयुक्सूत्रैर्व्यतिस्यूतं धारयेत्कटिबन्धनम् ।
कौपीनंवस्त्रयुग्मं च यथार्हमितराणि च ॥ ८० ॥

अयुगिति । अयुक्सूत्रैः अयुग्मसूत्रैः व्यतिस्यूतं व्यत्यासेन स्यूतं कटिबन्धनं कटिसूत्रं धारयेत् कौपीनं वस्त्रयुग्मं यथार्हं यथायोग्यमितराणि उष्णीषादीनि च धारयेत् ॥ ८० ॥

लक्षणानि स्फुटान्येव क्रियासिद्धिकराणि तु ।
धारयेन्नोपहन्येत कदाचित्किङ्करादिभिः ॥ ८१ ॥

लक्षणानीति । लक्षणानि शंखचक्रोर्द्ध्वपुण्ड्रादिचिह्नानि स्फुटान्येव नत्वस्फुटानि क्रियासिद्धिकराणि भगवत्कैङ्कर्ययोग्यतापादकानीति यावत् किङ्करादिभिर्यमभटादिभिः ॥ ८१ ॥ इति लक्ष्माधिकारः ॥

दण्डवत्प्रणमेद्भूमावुपेत्य गुरुमन्वहम् ।
दिशे वापि नमस्कुर्याद्यत्रासौ वसति स्वयम् ॥ ८२ ॥

अथ सत्सेवामधिकरोति—दण्डवदिति । दण्डवदित्यनेन अहङ्कारनिवृत्तिराभिप्रेता अस्याहमिति कादाचित्कत्वव्यावृत्तिः यत्र देशे असावाचार्यो वसति तस्यै दिशे नमस्कुर्यादित्यर्थः । स्वमित्यनेन अग्निहोत्रादिवद ऋत्विगादिभिर्न कारयेदित्यर्थः ॥ ८२ ॥

आचार्यायाहरेदर्थानात्मानं च निवेदयेत् ।
तदधीनश्च वर्तेत साक्षान्नारायणो हि सः ॥ ८३ ॥

आचार्ययेति । आचार्याय आचार्यार्थं धनान्याहरेत् आनयेत् आत्मानञ्च निवेदयेत् तवाहमस्मीत्यात्मनिवेदनं कुर्यात् तदधीनश्च वर्तेत आचार्याधीनस्तिष्ठेत् । नान्वियं वृत्तिर्भगवद्विषये कार्या कथमाचार्यविषयेऽपीत्याह 'साक्षान्नारायणो हि स' इति । साक्षान्नारायण इत्यनेन "साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना" इति वचनं सूच्यते । आचार्यस्य भगवद्रूपत्वात् तद्विषये कर्त्तव्या वृत्तिः सर्वाप्येतद्विषये कर्त्तव्येति भावः ॥ ८३ ॥

कुर्वीत परमां भक्तिं गुरौ तत्प्रियवत्सलः ।
तदनिष्टापवादी च तन्नामगुणहर्षितः ॥ ८४ ॥

कुर्वीतेति । परमां निरतिशयाम् । तत्प्रियवत्सलः आचार्यभक्तवत्सलः । तदनिष्टापवादी च आचार्यानिष्टविषयापवादशीलः । तन्नामगुणहर्षितः आचार्यगुणस्मरणवचनश्रवणादिभिर्हर्षितः ॥ ८४ ॥

नित्यं गुरुमुपासीत तद्वचःश्रवणोत्सुकः ।
विग्रहालोकनपरस्तस्यैवाज्ञाप्रतीक्षकः ॥ ८५ ॥

नित्यमिति । तद्वचःश्रवणोत्सुकः आचार्यवचनश्रवणकुतूहली । विग्रहालोकनपरः आचार्यविग्रहसेवाभिरतः । तस्यैव आचार्यस्यैव आज्ञाप्रतीक्षकः नियोगं प्रतीक्षमाणः ॥ ८५ ॥

प्रक्षाल्य चरणौ पात्रे प्रणिपत्योपयुज्य च ।
नित्यं विधिवदर्घ्याद्यैराहृतोऽभ्यर्चयेद्गुरुम् ॥ ८६ ॥

प्रक्षाल्येति । चरणौ आचार्यचरणौ पात्रे प्रक्षाल्य प्रणिपत्य दण्डवत्प्रणम्य । उपयुज्य पादप्रक्षालनजलं पीत्वा नित्यं प्रत्यहं विधिवत् यथाशास्त्रम् आहृतः आदरवान् कर्त्तरिक्तः । आचार्यादरविषयीभूतो वा गुरुमभ्यर्चयेत् ॥ ८६ ॥

इच्छाप्रकृत्यनुगुणैरुपचारैः सदोचितैः ।
भजन्नवहितश्चात्र हितमावेदयेद्रहः ॥ ८७ ॥

इच्छेति । इच्छाप्रकृत्यनुगुणैरातुरत्वावस्थायामिच्छागुणानामवद्यत्वात् देहपीडायामपर्य्यवासितैः आचार्ये गुणैर्नकेवलमिच्छागुणेभ्योनुगुणैरुचितैः शास्त्राविरुद्धैरुपचारैरवहितः सावधानो भजन् अस्य आचार्यस्य हितं रहः रहस्यावेदयेत नयमातिक्रमे सति हितं रहो निवेदयेदित्यर्थः ॥ ८७॥

यथानुजीवी नृपतिं यथा भक्तस्तु दैवतम्।
तथैव देशिकं शिष्यः सेवेत विनयान्वितः ॥ ८८ ॥

यथेति। यथानुजीवी भृत्यः नृपतिं राजानं सेवते, भक्तः दैवतं यथा सेवते, शिष्योऽपि देशिकं तथा सेवेत तथेत्यस्यार्थं विशदयति विनयान्वित इति ॥ ८८ ॥

स्नातं च गुरुणा यत्र तीर्थं नान्यत्ततोऽधिकम्।
यच्च कर्म तदर्थं तद्विष्णोराराधनात्परम् ॥ ८९॥

स्नातमिति। गुरुणा यत्र स्नातं स्नानं कृतं ततः तज्जलात् अधिकमुत्कृष्टं तीर्थं नास्ति तदेव सर्वतीर्थाधिकमिति भावः तदुक्तं भागवते विदुरं प्रति धर्मराजेन "भवद्विधा भागवतास्तीर्थभूताः स्वयं विभो। तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता" इति यच्च तदर्थं कर्म तदाचार्यकैङ्कर्यरूपं कर्म विष्णोराराधनात्परं भगवदाराधनादप्युत्कृष्टम् ॥ ८९ ॥

अपदिश्य पितॄन्देवान्गुरौ यत्प्रतिपाद्यते।
देशकालक्रियामन्त्रनिरपेक्षं तदक्षयम् ॥ ९० ॥

अपदिश्येति। पितॄन्देवानप्यपदिश्य गुरौ आचार्ये यत्प्रतिपाद्यते यत्कव्यं हव्यं वा समर्प्यते तद्धव्यं कव्यं वा देशकालक्रियामन्त्रनिरपेक्षम् अदेशे अकाले वा दत्तं मन्त्रहीनं क्रियाहीनं वा अक्षयं भवति ॥ ९० ॥

आत्मनो ह्यतिनीचस्य योगिध्येयपदार्हताम्।
कृपयैवोपकर्त्तारमाचार्यं संस्मरेत्सदा ॥ ९१ ॥

आत्मन इति। अतिनीचस्यात्मनः योगिध्येयपदार्हतां विधिशिवसनकाद्यैरपि ध्येयं न प्राप्तुं शक्यं यत्पदं तदर्हताम् यद्वा योगिध्येयस्य श्रीमतो नारायणस्य पदयोरर्हतां परि-

चरणाधिकारं कृपयैवोपकर्तारं योग्यतामविचार्य दत्तवन्तम् । आचार्यं सदा संस्मरेत् । अर्हतामुपकर्त्तारमिति तृन्नंतत्वान्नलोकाव्ययेत्यादिना षष्ठीनिषेधात् द्वितीया ॥ ९१ ॥

स्वयं देहानुकूलानि धर्मार्थौपयिकानि च ।
कुर्यादप्रतिषिद्धानि गुरोः कर्माण्यशेषतः ॥ ९२ ॥

स्वयमिति । आचार्यदेहानुकूलानि पादसंवाहनादीनि धर्मार्थौपयिकानि आचार्यार्थं तदग्निपरिचर्यादीनि अप्रतिषिद्धानि शास्त्राविरुद्धानि गुरोः कर्माण्यशेषतः कार्त्स्न्येन स्वयं कुर्यात् ॥ ९२ ॥

योऽसौ मन्त्रवरं प्रादात्संसारोच्छेदसाधनम् ।
प्रतीच्छेद्गुरुवर्यस्य तस्योच्छिष्टं सुपावनम् ॥ ९३ ॥

योसाविति । योऽसावाचार्यः संसारोच्छेदसाधनं मोक्षहेतुभूतं मन्त्रवरं मन्त्ररत्नं प्रादात् दत्तवान् तस्य गुरुवर्यस्य आचार्यश्रेष्ठस्य सुपावनमुच्छिष्टं प्रतीच्छेत् स्वीकुर्य्यान्नत्वन्यस्य सुपावनमित्यनेन भगवद्भुक्तत्वात्पावनन्तदेवाचार्यदिव्यवदनसंस्पर्शात् सुपावनमभिप्रेतं मन्तव्यम् ॥ ९३ ॥

ये चोपकुर्वते ज्ञानं किमप्यच्युतसंश्रयम् ।
विनोच्छिष्टाशनं कुर्याद्वृत्तिं तेष्वपि गौरवात् ॥ ९४ ॥

उच्छिष्टाशनं साक्षान्मोक्षसाधनविद्योपदेष्टृविषये । अन्यविषये तु उच्छिष्टाशनवर्जं गुरुवृत्तिमाचरेदित्याह-येचेति । अच्युतसंश्रयं भगवद्विषयं किमपि साक्षान्मोक्षसाधनविषयकतया यत्किञ्चिदपि प्रमाधानं ज्ञानं ये चोपकुर्वते प्रयच्छन्ति उच्छिष्टाशनवर्जितां तेष्वपि गौरवाद्वृत्तिं कुर्यात् गुरुवद्वृत्तिमाचरेदित्यभिप्रायः ॥ ९४ ॥

गुरोश्च पत्नीपुत्रादिष्वन्येष्वप्यमलात्मसु ।
कुर्यादाचार्यवद्वृत्तिं तत्र तत्र व्यवस्थया ॥ ९५ ॥

गुरोश्चेति । पत्नीपुत्रादिष्वित्यादिशब्देन भ्रात्रादयो गृह्यन्ते। 'आचार्यपत्नीं पुत्रं वा मातापितरौ च सोदारम् ॥ आचार्यमेव मन्येत अन्यथा नाशमाप्नुयात्' इति विहगेन्द्रसंहितोक्तेः । अन्येषु तदन्तरङ्गेषु शिष्टेषु सब्रह्मचारिषु वा तत्र व्यवस्थया वा गुरुपुत्रादौ उच्छिष्टाशनादिवर्जं गुरुदारेषु पादोपसंग्रहणादिवर्जं वृत्तिं कुर्यात् ॥ ९५ ॥

आचार्योऽपि तथा शिष्यं स्निग्धो हितपरः सदा ।
प्रबोध्य बोधनीयानि वृत्तिमाचारयेत्स्वयम् ॥ ९६ ॥

आचार्येति । यथा गुरौ शिष्यः स्नेहयुक्तो भवति तथा आचार्योऽपि शिष्ये स्निग्धो भूत्वा सदा शिष्यहितपरः सन् बोधनीयानि ज्ञापनीयानि प्रबोध्य ज्ञापयित्वा वृत्तिं विहिताचाराद्यात्मिकां षड्विधां वृत्तिमाचरेत ॥ ९६ ॥

निजधर्मानुरोधेन वैष्णवैरेव वैष्णवः ।
कुर्यात्सर्वाणि कार्याणि न कदाचिदवैष्णवैः ॥ ९७ ॥

निजेति । निजधर्मानुरोधेन स्ववर्णाश्रमावस्थानियतधर्माविरोधेन वैष्णवो वैष्णवैरेव ऋत्विगादिभिः समं सर्वाणि कार्याणि कर्त्तव्यानि कुर्यात् । अवैष्णवैः सह न कदाचित्कुर्यात् ॥ ९७ ॥

अधिकैः सदृशैर्वापि कुर्यादेव तु सङ्गमम् ।
हीनांश्च नावमन्येत न च दोषं विभावयेत ॥ ९८ ॥

अधिकैरिति । अधिकैः सदृशैर्वापि स्वस्मादुत्कृष्टैः स्वसमानैर्वा हीनान् विकलवृत्तीन्न च दोषं विभावयेद्धीनेषु दोषचिन्तामपि न कुर्यात् ॥ ९८ ॥

वृद्धानाचारसम्पन्नान्विष्णुभक्तान्दृढव्रतान् ।
सतः सत्सेवनपरान्नित्यं सेवेत संनतः ॥ ९९ ॥

वृद्धानिति । दृढव्रतान्बृहस्पतिनाप्यक्षोभ्याध्यवसायान्सतः ब्रह्मज्ञानेन लब्धसत्ताकान् । 'अस्तिब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इति श्रुतेः सन्नतः प्रह्वीभूतः ॥ ९९ ॥

एवं स्वकर्मणि ज्ञाने भक्तौ च परिनिष्ठितः ।
वैराग्येण च संयुक्तो न चेहाजायते पुनः ॥ १०० ॥

इति श्रीभारद्वाजसंहितायां न्यासोपदेशे तृतीयोध्यायः ॥३॥

---

उक्तमर्थं निगमयति-एवमिति । स्वकर्म्मणि विहिताचारे ज्ञाने दृष्टौ भक्तौ चेति चकारेण लक्ष्मसत्सेवे समुच्चीयेते । वैराग्येण च संयुक्तः उक्तवृत्तिविरोधिपरिहारनिरतः । इहलोके पुनर्न आजायते नोत्पद्यते ॥ १०० ॥ इति सत्सेवनाधिकारः ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहिताटीकायां न्यासोपदेशे तृतीयोऽध्यायः ॥ ३ ॥

---

प्रीतिरूपांस्तथा विष्णोः स्वधर्मानाचरेद्यथा ।
तथैवाप्रीतिरूपाणि प्रतिषिद्धानि वर्जयेत् ॥ १ ॥

अथ 'वैराग्येण संयुक्त' इत्यमुमर्थं विशदयितुं तद्विरुद्धवर्जनमधिकरोति-प्रीतिरिति । भगवत्प्रीतिहेतुतयोक्तानि शरणं प्रपन्नस्य प्रतिषिद्धानां भगवदप्रीतिहेतुतयोक्तानि वर्जनीयानीत्यर्थः ॥ १ ॥

विष्णोर्ध्यानप्रणामार्चास्तुतिचिह्नादिवर्जितम् ।
समारब्धं तु यत्कर्म तत्कर्म विफलं भवेत् ॥ २ ॥

प्रपन्नस्य देवतान्तरस्पर्शस्य निषिद्धत्वात्कर्मारम्भेऽपि कर्मसमृद्ध्यर्थं न देवतान्तरस्तुतिनमस्कारादि कुर्यादित्याशयवा-

नाह-विष्णोरिति। चिह्नशब्देन ऊर्द्ध्वपुण्ड्रादि भगवच्चिह्न-मुच्यते ॥ २ ॥

विष्वक्सेनः स्मृतो नेता भगवाँच्छुद्धकर्मणाम्।
तस्मान्नान्यमुपासीत कर्मणां विघ्नशान्तये ॥ ३ ॥

विघ्नोत्तरणार्थमपि न देवतान्तरमुपासीतेत्याह-विष्वक्सेनेति। भगवान्विष्वक्सेनः सर्वकर्मणां नेता प्रभुः। शुद्धकर्मणामिति क्वचित्पाठः। तस्माद्विष्वक्सेनादन्यं विघ्नशान्तये नोपासीत। तस्मादिति पदं हेतुपरम् ॥ ३ ॥

ब्रह्मरुद्रादिगीशार्कतच्छक्तिप्रसवादयः।
नित्यमभ्यर्चने वर्ज्याः कामोऽपि स्यान्न तन्मुखः ॥ ४॥

ब्रह्मेति। दिगीशा दिक्पालाः ॥ अर्कः सूर्यः तच्छक्तिप्रसवादयः तच्छक्तयः ब्रह्मादीनां शक्तयः शक्तिशब्दो भार्यापरः। तत्प्रसवाः ब्रह्मादीनामपत्यानि तदवतारपरत्वे तद्भार्या विवक्षणीयाः। नित्यमभ्यर्चने वर्ज्याः नित्यार्चने परिहरणीयाः क्वचित्कर्मविशेषे भगवच्छरीरत्वेन तेषामन्वयेऽपि नित्यार्चने तु शरीरत्वेनापि न तेषामन्वयः कार्य इतिभावः। कामोऽपि स्यान्न तन्मुखः। कामानभिलष्यापि न तेषामुपास्तिं कुर्यादित्यर्थः कामेषु सर्वत्र नित्येष्वपि देवतार्चायां ब्रह्मादीनां शरीरत्वेनापि नान्वयः सम्पादनीय इति श्लोकाभिप्रायः ॥ ४ ॥

न जातु परमां वृत्तिं कुर्वीत विरसाशयः।
प्रमादालस्यनास्तिक्यकामाद्यैर्न च हापयेत् ॥ ५ ॥

नजात्विति। वृत्तिं विहिताचारलक्षणां प्रमादेन आलस्येन नास्तिक्येन कामेन आदिशब्देन क्रोधादिना वा जातु कदाचिदपि न हापयेत् न परित्यजेत्। विरसाशयः विहितत्वधिया

भक्तिहीनो वा न कुर्वीत भगवदाराधनत्वप्रतिपत्त्या अत्यन्तभक्तियुक्तः कुर्यादिति भावः ॥ ५ ॥

देशकालकुलादीनां विना पापेन संविदः ।
आस्त्रीभ्यश्चाखिलाचारान्नातिक्रमेत्कदाचन ॥ ६ ॥

देशेति । देशसंविदः एतद्देशे अयं धर्मः कर्त्तव्य इत्येवमात्मकः । एवं कालजातिसंविदश्च देशजातिकुलादीनामित्यपरः पाठः । तदा जातिशब्दो ब्राह्मणत्वादिजातिपरः । कुलशब्दोऽपि वंशादिपरः । तेषां पापेन विना संविदः अनिषिद्धान् समयान् । आस्त्रीभ्यः स्त्रीपर्य्यन्तमखिलाचारांश्च नातिक्रमेत ॥ ६ ॥

न वृत्तेरधिकामृद्धिं न मृत्युं न च जीवितम् ।
न चाप्रशस्तान्विषयानिच्छेदिह परत्र वा ॥ ७ ॥

न वृत्तेति । वृत्तिर्देहयात्रा । मृत्युर्मरणम् । जीवितम् आयुः । अप्रशस्ता विषयास्त्र्यादिनिषिद्धाः । परत्र परलोके ॥ ७ ॥

न पापेन न पुण्येन नात्यायासेन कर्मणा ।
सम्पदां संग्रहं कुर्याद्विपदां च प्रतिक्रियाम् ॥ ८ ॥

नपापेनेति। पापेन चौर्यादिना हिंसादिना वा क्रमेण सम्पदां संग्रहं विपदां प्रतिक्रियां च न कुर्यात् । पुण्येन सम्पत्त्याप्तिहेतुभूतेन लक्ष्मीव्रतादिना विपन्निवृत्तिहेतुभूतेन स्तुतिपाठमन्त्रजपादिना वा क्रमेण सम्पत्संग्रहविपत्प्रतीकारौ वा न कुर्यात् । अत्यायासेन अविहिता प्रतिषिद्धेनापि बह्वायाससाध्येन कर्मणा न कुर्यात् किन्तु विहिताप्रतिषिद्धेनाल्पायासेन कर्मणा सम्पत्संग्रहविपत्प्रतीकारौ कुर्यादिति भावः ॥ ८ ॥

विनैव प्रतिषिद्धेन सर्वार्थान्साधयेत्सुधीः ।
नोपेक्षेत च भूतानां व्यसनं शक्यवारणम् ॥ ९ ॥

विनैवेति । उक्तपुण्यपापभिन्नेन कर्मणाल्पायासेन यत्सङ्ग्रह-विपत्प्रतीकारौ कुर्यादित्ययन्तु नियमः स्वसम्पत्संग्रहविपत्प्रती-कारयोरेव । आचार्यस्तद्विषये तु पापमपहाय पुण्येनाल्पाया-सेन कर्मणा वा सम्पत्संग्रहं विपत्प्रतिक्रियां च कुर्यादित्याह । एवकारो भिन्नक्रमः । प्रतिषिद्धेनैव विना आचार्यतदीयानां सर्वार्थान्साधयेत् । इदं च विपत्प्रतीकारस्याप्युपलक्षणार्थम् । भूतानां च सद्व्यतिरिक्तानां ह्यसतामपि चेतनानां शक्यवारणं स्वेन वारयितुं शक्यं व्यसनं नोपेक्षेत शक्यश्चेन्निवर्त्तनीयमेवे-त्यर्थः । सतां व्यसनन्तु अशक्यवारणमपि अतिप्रयासेनापि वारणीयमिति भावः ॥ ९ ॥

न विषज्वरभूतादिहरणं स्तम्भनादि च ।
नाद्भुतानि तथान्यानि साधयेत्सत्त्वसंश्रयः ॥ १० ॥

नेति । विषं सर्पादीनाम् । ज्वरः प्रसिद्धः । भूतादीत्यादिश-ब्देन ब्रह्मराक्षसादयो गृह्यन्ते । एतेषां हरणं मन्त्रैर्निवारणं न कुर्यात् । स्तम्भनादि अग्निस्तम्भनादिकम् । उच्चाटनादि आदि शब्दार्थः । तथा अन्यान्यद्भुतानि पाषणप्रविकरणजलवृद्धि-करणादीनि न साधयेत् ॥ १० ॥

न विपत्तिषु वैक्लव्यं नोदयेषु समुन्नतिम् ।
न कामेषु प्रसक्तिश्च भजेदच्युतमानसः ॥ ११ ॥

नविपत्तिष्विति । विपत्तिषु आपत्सु वैक्लव्यं विक्लवताम् अव-सादन्न गच्छेत् उदयेषु समुन्नतिं समुद्धर्षणं न गच्छेत् । कामेषु भोगेषु प्रसक्तिम् अतिसङ्गं न गच्छेत न यायात् । भजेदच्युत-मानस इत्यपरः पाठः । अच्युतमानस इत्यस्यायं भावः ।

पुण्यपापरूपमभ्युपगतप्रारब्धमनेन प्रकारेण नाशयन् भगवान्मम हितमाचरन् न माऽच्यावयतीति विपत्त्यादिषु नावसादं भजेतेति ॥ ११ ॥

विनिन्दितः प्रशस्तो वा विमतः संमतोऽपि वा ।
विलुप्तोऽभ्यर्चितो वापि विक्रियेत न तत्त्ववित् ॥ १२ ॥

विनिन्दितइति। विनिन्दितः दुर्गुणारोपेण गर्हितः । प्रशस्तः सद्गुणारोपेण स्तुतः । विमतः अविश्वासाविषयीकृतः । सम्मतः विश्वासविषयीकृतः । विलुप्तः तिरस्कृतः । अभ्यर्चितः पूजां प्रापितो वा तत्त्वविन्न विक्रियेत हर्षशोकादिविकारं न प्राप्नुयात् ॥ १२ ॥

न च क्रियान्तरङ्गाणां नायस्येदप्यसम्भवे ।
हानिं निवेद्य देवाय मनसैव प्रपूरयेत् ॥ १३ ॥

न चेति । क्रिया भगवत्कैङ्कर्यमित्यादिरूपं तदन्तरङ्गाणां तदावश्यकानां द्रव्याणामसम्भवे अलाभेऽपि नायस्येत् आयस्तो न भवेत् । तत्सम्पिपादयिषया दुष्करायासं न कुर्यादित्यर्थः । तादृशायासेन योगाभावप्रसङ्गादिति भावः । किन्तु देवाय भगवते हानिं क्रियान्तरङ्गद्रव्यालाभं निवेद्य विज्ञाप्य मनसैव प्रपूरयेत । अलब्ध्वा क्रियान्तरङ्गाणि मनसा प्रकल्प्य समर्पयेदित्यर्थः ॥ १३ ॥

वर्जयेत्प्रतिषिद्धानि सर्वाण्यस्खलितः शुचिः ।
प्रवृत्ते कारणं चात्र कामक्रोधादिकं त्यजेत् ॥ १४ ॥

वर्जयेदिति । शुचिः सम्यगध्यवसायवान् अस्खलितः वृत्तौ स्खालित्यरहितः सर्वाणि प्रतिषिद्धानि वर्जयेत् । अत्र प्रतिषिद्धेषु प्रवृत्तेः कारणं कामक्रोधादिकं त्यजेत् । निषिद्धानां कामक्रोधादिमूलत्वात्त्यजेदित्यर्थः ॥ १४ ॥

अगम्यागमनं हिंसामभक्ष्याणां च भक्षणम्।
असत्यवचनं स्तेयं तद्वत्सङ्गांश्च वर्जयेत्॥ १५॥

अगम्येति। अगम्याः पारदारादिकाः तद्वत्सङ्गान् अगम्यागमनादिमत्सङ्गान्। यद्वा अगम्यागमनमित्यनेन गुरुतल्पस्पर्शादिकमुच्यते। हिंसा ब्रह्मवधादिका। अभक्ष्याणाञ्च भक्षणमसत्यवचनमित्यनेन निषिद्धभक्षणं जैह्ममुत्कर्षे च वचोऽनृतमित्याद्युक्तं सुरापानसमं तदुपलक्षितं सुरापानं च विवक्षितम्। स्तेयं ब्राह्मणस्वर्णहरणम्॥ १५॥

पातकानि समस्तानि गुरूणि च लघूनि च।
विभोः कालुष्यकारीणि मनसापि न चिन्तयेत्॥ १६॥

पातकानीति। विभोः कालुष्यकारीणि भगवन्मनःकालुष्यजनकानि॥ १६॥ इति विहिताचारविरुद्धवर्जनम्॥

ज्ञानं तु स्वपरोपायफलान्वयविरोधिनाम्।
अन्यथा विपरीतं वा ज्ञानं हानिकरं परम्॥ १७॥

एवं विहिताचारविरुद्धवर्जनमुक्त्वा दृष्टिविरुद्धकर्मवर्जनमाह—ज्ञानमिति। स्वं प्राप्ता प्रत्यगात्मा। परं प्राप्यं ब्रह्म। उपायः प्राप्त्युपायः। फलं प्राप्तिः फलम्। अन्वयः सम्बन्धः। विरोधि प्राप्तिविरोधि। एषामन्यथा ज्ञानं ज्ञानाभावः अन्यथाधर्मिणि स्वस्वरूपादौ स्वासाधारणभासमाने प्रकारे विपर्ययरूपं यथा 'शंखः पीत' इत्यादि ज्ञानां तु धर्मिणि धर्मान्तरारोपरूपस्वस्वरूपादीनां देहादिरूपेण ज्ञानम्। यथा इदं रजतमित्यादि ज्ञानम्। जीवपरमात्मसम्बन्धसहितस्यार्थपंचकस्य ज्ञानाभावोऽन्यथाज्ञानं विपरीतज्ञानं वा परमुत्कृष्टं हानिकरमित्यर्थः॥ १७॥

छन्दांसि सरहस्यानि दिव्यशास्त्रान्विताः स्मृतीः।
न जातु विचिकित्सीत पुराणादि च सात्त्विकम्॥ १८॥

छंदांसीति । सरहस्यानि सोपनिषत्कानि छन्दांसि वेदान्दिव्यशास्त्रं श्रीपञ्चरात्रं तदन्विताः तदविरुद्धा इति वा स्मृतीः मन्वादिधर्मशास्त्राणि सात्त्विकं सत्त्वगुणप्रचुरेषु कल्पेषु तद्गुणप्रचुरेषु ब्रह्मणा निर्मितपुराणादिषु श्रीविष्णुपुराणश्रीभागवतादिकं प्रति जातु कदाचिदपि न विचिकित्सीत संशयीत तदुक्तार्थे संशयवान्न भवेदित्यर्थः ॥ १८ ॥

शरण्यमिज्यं लक्ष्मीशं सदा सेव्यमनिच्छताम् ।
नेच्छेद्दृष्टिं कुदृष्टीनां सुधीः श्रुत्यर्थनिर्णयात् ॥ १९ ॥

वेदार्थनिर्णयाय कुदृष्टिकल्पितानि शास्त्राणि नाद्रियेतेत्याह-शरण्यमिति । शरण्यत्वेन इज्यत्वेन लक्ष्मीपतित्वेन सदा सेव्यत्वेन ये भगवन्तं नेच्छन्ति तेषां कुदृष्टीनां दृष्टिलक्षणया शास्त्रम्, श्रुत्यर्थनिर्णयात् प्रयोजनहेतुत्वात् पञ्चमी, श्रुत्यर्थनिर्णयात् सात्त्विकपुराणेतिहासधर्मशास्त्रश्रीपंचरात्रादिना श्रुत्यर्थस्य निर्णीतत्वात्तद्विरुद्धशास्त्रं नेच्छेत् न परिगृह्णीयादित्यर्थः ॥ १९ ॥

ज्ञानं ज्ञेयं च तत्त्वेन कारणं चाच्युतं परम् ।
अजानद्भिर्वृथानीतान्नाश्रयेन्न्यायविस्तरान् ॥ २० ॥

ज्ञानमिति । ज्ञायतेऽनेनेति ज्ञानं शास्त्रम् अच्युतस्य शास्त्रसामानाधिकरण्यं तत्प्रवर्त्तकत्वनिबन्धनम् । शास्त्रप्रवर्त्तकमित्यर्थः ज्ञेयं शास्त्रं प्रवर्त्तितं शास्त्रं वेष्टम् । तत्त्वेन अञ्जसा कारणं जगत्कारणभूतं परं सर्वस्मात्परम् अच्युतं नारायणमजानद्भिरजानानैर्वृथा व्यर्थमेव च नीतान्न्यायविस्तरान्नाश्रयेन्न पश्येदित्यर्थः । यद्यपि न्यायविस्तारोऽप्यष्टादशस्थानेष्वभ्यर्हितः अथापि कुदृष्टिरचितमपहाय न्यायतत्त्वे न्यायपरिशुद्ध्यादिवत्सुधीरचितमुपाददीतेति भावः ॥ २० ॥

प्रकृतिं पुरुषं योगं परं प्राप्यश्च माधवम्।
अन्यथा मन्यमानानां स्मृतीश्च परिवर्जयेत्॥ २१॥

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इत्यादिमनूक्तप्रक्रियया रजस्तमोमूलाः स्मृतयोऽप्यनादेया इत्याह—प्रकृतिमिति। प्रकृतिं त्रिगुणात्मिकाश्चिद्विशेषं पुरुषं जीवं योगं प्रकृतिपुरुषसम्बन्धं जीवात्मपरमात्मसम्बन्धं वा मुक्त्युपायं व्यापारमुत्कृष्टं प्राप्यं माधवं श्रियःपतिश्च अन्यथा मन्यमानानां स्मृतीश्च 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' 'अत एव योगः प्रयुक्तः' इत्यादिना भगवता बादरायणेन निरस्ताः कापिलादिकाः परिवर्जयेत् अन्यथा मन्यमानानामित्येतद्विपरीतं मन्यमानानामप्युपलक्षणार्थम्। यद्वा 'शरण्यमित्यादिश्लोकद्वयेन अज्ञानवतां वचनमनादेयमित्युक्तम्।' प्रकृतिं पुरुषमित्यादिना अन्यथा ज्ञानवतां च वचनमनादेयमित्युक्तम्। 'तामसांस्तथा। अनीशानां परेशत्व'मित्यादिना विपरीज्ञानवतां वचनमनादेयमित्युक्तमिति विवेकः। यद्वा शरण्य इत्यादिना वेदविरुद्धमहर्षिवचनं त्याज्यमित्युक्तम्। ऋषिवचनेष्वपि वेदविरुद्धाः स्मृतयः त्याज्या इत्युक्तम् 'प्रकृतिं पुरुष' मित्यनेन। 'नाद्रियेते' त्यादिना वेदविरुद्धं पुराणं त्याज्यमित्युक्तम्। तथा रुद्रेणेत्यनेन ऋषिभ्योऽप्यधिकेन रुद्रेणापि प्रणीतं तच्च तमोमूलत्वात्त्याज्यमिति विवेको द्रष्टव्यः प्रकृत्यादीनामन्यथा मन्यमानत्वात्तासु स्मृतिषु स्फुटम्।तथा हि गुणाधिकरणप्रकृतिः त्रिगुणस्वरूपा क्रियते। भगवत्परतंत्रः पुरुषस्वतन्त्रत्वेन उपायो-जीवात्ममात्रज्ञानत्वेन। ईश्वरसांख्यैरीश्वराभ्युपगमेऽपि अपरत्वेन अप्राप्यत्वेन अलक्ष्मीपतित्वेन सोऽभ्युपगम्यत इति॥२१॥

नाद्रियेत पुराणादीन् राजसांस्तामसांस्तथा ।
अनीशानां परेशत्वं वृथा यत्रोपवर्ण्यते ॥ २२ ॥

नाद्रियेतेति । अनीशानां रुद्रादीनाम् ॥ २२ ॥

तथा रुद्रेण कथितं मोहनं क्षुद्रकामदम् ।
तन्त्रं बहुविरुद्धञ्च तामसं परिवर्जयेत् ॥ २३ ॥

तथेति । तन्त्रं पाशुपताख्यं बहुविरुद्धं बहुप्रमाणविरुद्धं पूर्वोत्तरविरुद्धमिति वा तामसं तमोमूलं पत्युरसामञ्जस्यादित्यधिकरणार्थोऽभिप्रेतः ॥ २३ ॥

अन्येषां त्रिदशादीनां स्तुतीर्मन्त्रांश्च वर्जयेत् ।
निबन्धनं गुणादीनां निबन्धांश्चान्यचेतसाम् ॥ २४ ॥

यद्यप्ययं श्लोको भक्तिविरुद्धाधिकारे पूर्वोत्तरश्लोकेषु स्मृतिपादप्रक्रियया वेदविरुद्धतन्त्राणामनादेयत्वकथनान्नान्यश्लोकस्यात्र सङ्गतिरस्ति; तथापि कोशान्तरेऽप्यत्रैव लिखितत्वादत्र व्याख्यायते–अन्येषामिति। अन्येषां भगवदेकान्त्यरहितानां त्रिदशादीनां देवादीनां स्तुतीः स्तोत्राणि मन्त्रांश्च वर्जयेत् देवतान्तरस्तोत्राणि आपन्निवारकतया सम्पत्करतया वा पुराणादिषु प्रसिद्धानि देवतान्तरमन्त्रांश्च वर्जयेत् । गुणादीनां देवतान्तरगुणकर्मणां निबन्धनं तद्विषयकगद्यपद्यादिनिर्माणं च वर्जयेत् न कुर्यात् । अन्यचेतसां अन्यचेतनानां निबन्धाँश्च वर्जयेत् प्रयोजनान्तरमनस्कैर्देवतान्तरनिष्ठहृदयैर्वा कृतान् भगवद्विषयान्प्रबन्धान्वर्जयेदित्यर्थः ॥ २४ ॥

बाह्यं दुष्टं तमोनिष्ठं विपरीतमनर्थकम् ।
मतं न सौगतादीनां मनसापि विचिन्तयेत् ॥ २५ ॥

बाह्यमिति । बाह्यं वेदबाह्यं दुष्टं कुतर्कमूलत्वात् व्याघातादिदोषदुष्टम् । अत एव तमोनिष्ठं तमोगुणे स्थितं तमोमूल

मित्यर्थः। तमोनिष्ठमित्यनेन 'या वेदबाह्याः स्मृतय' इत्यादिमनुवचनं स्मारितम्। विपरीतं विपरीतार्थप्रतिपादकम्। अनर्थक दृष्टादृष्टप्रयोजनशून्यम्। तथा सौगतादीनां बौद्धादीनां मतं मनसापि न चिन्तयेत्। किमुत न वचसोच्चारयेदिति भावः २५

कामं मतानि चान्येषां पश्येत्प्राज्ञोऽपनुत्तये।
न च तेषु प्रसज्जेत नानुमन्येत नाभ्यसेत्॥ २६॥

बाह्यकुदृष्टिमतानामपि दूषणार्थमवलोकनमनुजानाति—कामिमिति। अन्येषां बाह्यदृष्टानां मतानि अपनुत्तये निराकरणाय कामं पश्येत्। तेषु मतेषु न च प्रसज्जेत प्रकर्षेण सङ्गं न भजेत आदरवान्न भवेदित्यर्थः। नानुमोदेत अत्र युक्तिः सम्यक्कथितेत्यादिरूपेणानुमोदनं न कुर्यात्। नाभ्यसेत् धारणार्थं पुनर्निरीक्षणादिकं न कुर्यात् ॥ २६ ॥ इति दृष्टिविरुद्धाधिकारः॥

अपचारांश्च विविधान्हरेर्यत्नेन वर्जयेत्।
महानपायो माध्यस्थ्यं किं पुनर्विपरीतता॥ २७॥

अथ भक्तिविरुद्धवर्जनमाह—अपचारानिति। माध्यस्थ्यं महापायः। उपचारापचारयोरप्यनन्वयो माध्यस्थ्यम्। स एव महाननर्थः। विपरीतान्वयः अपचारान्वयस्तु किं पुनर्महानपाय इति। किमुत वक्तव्यमिति भावः। यद्वा, माध्यस्थ्यम्। अन्येषु भगवदपचारेषु प्रवर्त्तमानेषु सत्सु स्वयं तेषामनिवारणं स एव महानपायः विपरीतान्वयस्त्वपचारान्वयस्तु किं पुनरिति॥ २७॥

विष्णवर्चारहिते ग्रामे विष्णवर्चारहिते गृहे।
न कुर्यादन्नपानादि न तत्र दिवसं वसेत्॥ २८॥

विष्णवर्चेति। दिवसमित्यत्यन्तसंयोगे द्वितीया। प्रयोजनवशात्किञ्चित्कालावस्थानेपि सर्वोऽपि दिवसस्तत्र न नेतव्य इति भावः ॥ २८ ॥

न च मन्त्रोपजीवी स्यान्नचाप्यर्चोपजीविकः ।
नानिवेदितभोगश्च न च निन्द्यनिवेदकः ॥ २९ ॥

न चेति। दृष्टार्थतया परपीडानिवृत्त्यर्थं मन्त्रजपशीलो न स्यात्। न चाप्यर्चोपजीविकः वृत्त्यर्थं भगवदर्चां न कुर्यात्। अनिवेदितभोगः अनिवेदितं भुञ्जानो न स्यात्। निन्द्यनिवेदकः भगवते शास्त्रनिषिद्धलशुनादिनिवेदको न स्यात् ॥२९॥

वर्ज्याः पाखण्डशैवाद्यैः स्थापिताश्च तथार्चिताः ।
अन्यत्र च स्वतो बद्धा नियमात्सर्वदेवताः ॥ ३० ॥

वर्ज्या इति। पाखण्डशैवाद्यैः पाखण्डाश्च ते शैवाश्चेति कर्मधारयः गोबलीवर्दन्यायात् पाखण्डशब्दो वेदबाह्यपरो वा तदाख्यैः स्थापिता अर्चिताश्च भगवद्विग्रहा वर्ज्याः। नियमादन्यत्र नीतेरन्यत्र बद्धाः कर्मवश्याः सर्वदेवता वर्ज्याः नित्या अपि स्वतश्च भगवच्छरीरभावमन्तरेण च वर्ज्या नोपास्याः ॥ ३० ॥

गृहे यस्यान्यदेवार्चा व्यक्तो न च जनार्दनः ।
न तस्य किञ्चिदश्नीयादपि वेदान्तवेदिनः ॥ ३१ ॥

गृहे इति। किञ्चिदपक्कमपीत्यर्थः। अपि वेदान्तवेदिनः। किं पुनरन्यस्येति भावः। अपि क्रतुसहस्रिण इत्यपरः पाठः ॥ ३१ ॥

वर्जयेदन्यदेवानामालयाद्युपसर्पणम् ।
तथा गोपुरहर्म्यार्चायानास्त्राद्यवलोकनम् ॥ ३२ ॥

वर्जयेदिति । आर्चा पूजा । यानं रथोत्सवादि अस्त्रं त्रिशूलादि ॥ ३२ ॥

गीतवादित्रघण्टादिशब्दानां श्रवणं तथा ।
कर्माणि च समस्तानि बाह्यान्याभ्यन्तराणि च ॥३३॥

गीतेति । बाह्यानि आलयाद्बहिः क्रियमाणानि । आभ्यन्तराणि आलये क्रियमाणानि। देवतान्तरसम्बन्धीनि कर्माणि वर्जयेदिति पूर्वश्लोकक्रिययान्वयः ॥ ३३ ॥

द्रव्याणां भुक्तभोगानां स्वीकारं स्पर्शनं तथा ।
भोगादीनां तदर्थं चाप्यर्थानां प्रतिपादनम् ॥ ३४ ॥

द्रव्याणामिति । भुक्तभोगानां देवतान्तरोपभुक्तानां द्रव्याणां स्वीकारम् आदानम्। तथा स्पर्शनं भूस्पर्शनं हस्तादिना तथा तद्वद्भोग्यपेयादीनामर्थानां पदार्थानां तदर्थं रुद्राद्यर्थं प्रतिपादनं दानं च वर्जयेत् ॥ ३४ ॥

प्रणामं स्पर्शनं सेवां स्मरणं कीर्तनं तथा ।
निन्दाञ्च तद्भक्तिपराण्यप्येतानि विवर्जयेत् ॥ ३५ ॥

प्रणाममिति । प्रणामो नमस्कारः । स्पर्शनं तद्बिम्बस्पर्शनम्। सेवां सम्मार्जनोपलेपादिरूपाम्। स्मरणं विग्रहगुणादिविषयकं ध्यानम । कीर्त्तनं नामोच्चारणाद्यात्मकम् । निंदां देवतान्तरनिन्दान्निन्दायामपि तत्स्मरणादिति भावः । तद्भक्तिपराणि देवतान्तरभक्तिमूलानि एतानि प्रणामादीनि निन्दां च वर्जयेदित्यन्वयः ॥ ३५ ॥ इतिभक्तिविरुद्धाधिकारः॥

शंखचक्रोर्द्ध्वपुण्ड्राद्यैश्चिह्नैः प्रियतमैर्हरेः ।
रहितः सर्वधर्मेभ्यः प्रच्युतो नैनमाप्नुयात् ॥ ३६ ॥

अथ लक्ष्मविरुद्धवर्जनमाह—शंखेति । सर्वधर्मेभ्यः प्रच्युतः सर्वेषु धर्मेष्वधिकाररहितः एवं भगवन्तं नाप्नुयाद् उपायेऽप्यनधिकारप्रसंगे भगवन्तं नाप्नुयादित्यर्थः ॥ ३६ ॥

चक्राम्बुजगदाशार्ङ्गखड्गेभ्योऽन्यैर्हरेरपि ।
न लक्षणैर्देहञ्चाङ्गान्नान्यदग्धोऽर्हति क्रियाम् ॥ ३७ ॥

चक्रेति । अम्बुजशब्दः शंखवाची भगवदायुधैरपि शंखचक्रगदाशार्ङ्गखड्गव्यतिरिक्तैराङ्कितोन्यदग्धश्चक्रादिपंचव्यातिरिक्तान्यलक्षणदग्धः क्रियां भगवत्कैङ्कर्यं नार्हति ॥ ३७ ॥

धारयेन्नान्यचिह्नानि विशेषेणाङ्कनं क्वचित् ।
धारणादन्यचिह्नानां महदाप्नोति किल्बिषम् ॥ ३८ ॥

धारयेदिति । अन्यचिह्नानि देवतान्तरचिह्नानि न धारयेत् क्वचिदप्यङ्गे तैरङ्कनं दाहं विशेषतो दाहं न धारयेत् । अन्यचिह्नानां देवतान्तरचिह्नानां धारणेन महत्किल्बिषं पारमैकान्त्यभङ्गरूपं प्राप्नोतीत्यर्थः । चक्रादिव्यतिरिक्तभगवच्चिह्नधारणेन विशेषतो नान्यदग्धोऽर्हति क्रियामिति प्रागेव निषिद्धत्वात् । भगवच्चिह्नव्यतिरिक्तानां धारणमपि निषिद्धमिति बोध्यम् ॥ ३८ ॥

अन्यचिह्नाङ्कितान्मर्त्यान् दूरतः परिवर्जयेत् ।
पयोऽस्थिचर्ममांसादि पशूनां चातिगर्हितम् ॥ ३९ ॥

अन्येति । अन्यचिह्नांकितानां मर्त्यानां छायास्पर्शोऽपि न कार्य इति भावः । पशूनाम् अन्यचिह्नाङ्कितानामिति वचनव्यत्ययेनानुषङ्गः । तेषां पयः क्षीरं वर्जयेत्, "रुद्रादिव्यपदेशिन्यो याश्च गावस्तदङ्किताः । तासां क्षीरमकर्मण्यं प्रयत्नेन विवर्जयेत्" इति स्मृत्यन्तरोक्तेः । अत्र पयःशब्दस्तद्विकाराणामप्युपलक्षणम् । यासां क्षीरमकर्मण्यं तद्विकारांश्चर्जयेदिति स्मृतेः । अजखड्गादीनां चर्म कृष्णादीनां मांसमपि तादृशमेव अतिगर्हितमेवेति निन्दितमित्यर्थः ॥ ३९ ॥

वृक्षादीनां च सर्वेषामकर्मण्यं फलादिकम्।
अन्यचिह्नाङ्कितं चैव गृहक्षेत्रादिकं त्यजेत्॥ ४० ॥

वृक्षेति। अत्रादिशब्दो लतादिपरः। द्वितीय आदिशब्दोऽत्र पत्रादिपरः। अन्यचिह्नाङ्कितानां वृक्षादीनां पत्रपुष्पफलादिकं त्याज्यमित्यर्थः। अन्यचिह्नाङ्कितत्वमन्यार्थकल्पितानामप्युपलक्षणम्। क्षेत्रादीनामन्यचिह्नाङ्कितशिलादिमत्त्वम्॥ ४० ॥

वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घन्ततं तनुम्।
वक्रं स्वरूपं बद्धाग्रं छिन्नमूलं पदच्युतम्॥ ४१ ॥

वर्तुलमिति। वर्तुलं मण्डलीकृतम्। तिर्यक् तिरश्चीनं पुण्ड्रमछिद्रं छिद्ररहितं ह्रस्वम् 'ऊर्द्ध्वपुण्ड्रं ललाटे न कुर्वीत चतुरंगुलम्।उदरे हृदि कण्ठे च दशाष्टचतुरंगुलान्' इत्याद्युक्तदीर्घपरिमाणात् न्यूनपरिमाणं दीर्घमतिरिक्तपरिमाणं ततः 'त्रिधा सर्वत्र विस्तारश्चतुस्त्रिद्व्यंगुलं क्रमादि' त्याद्युक्तविस्तारादधिकविस्तारं तनुन्ततोऽल्पविस्तारं वक्रमनृजुं विरूपमत्यसुन्दरम्बद्धाग्रं मिश्रिताग्रं छिन्नमूलं भ्रुवोर्मूले मेलनरहितं पदच्युतं पदं विहितस्थानं तस्मात्प्रच्युतम्॥ ४१ ॥

अशुभ्रं रूक्षमासक्तं तथानङ्गुलिकल्पितम्।
विगन्धमपसंख्यञ्च पुण्ड्रमाहुरनर्थकम्॥ ४२ ॥

अशुभ्रमिति। अशुभ्रमधवलम्। यस्यां हृदि धार्यमाणायां तत्र स्फोटाद्युत्पत्तिर्भवति तत्पुण्ड्रं रूक्षम्। आसक्तं पुण्ड्रान्तरेण मिश्रितम्। अनंगुलिकल्पितम् अंगुलिभिन्नेन साधनेन रचितम्। विगन्धं गंधरहितम्। अपसंख्यं 'त्रयोदश द्वादश वाप्यूर्द्ध्वपुंड्राणि धारयेत्। सूक्ष्मं चत्वारि षट्चाष्टावपि वांछन्ति केचन' इत्याद्युक्तप्रकारेण संख्यारहितं पुंड्रमनर्थकं धृतस्याप्यधृतप्रायत्वात् अप्रयोजकमाहुः॥ ४२ ॥

न चन्दनादिभिर्गन्धैः कर्त्तव्यं न च भस्मना ।
न मृद्भिश्चाप्रशस्ताभिरूर्द्ध्वपुण्ड्रं कदाचन ॥ ४३ ॥

न चन्दनेति।चन्दनादिभिर्गन्धैरिति विशेषणविशेष्यभावेनान्वयः । चन्दनं मलयजन्तदादिभिरादिशब्दादगुर्वादिकं गृह्यते गन्धशब्दो गन्धवदनुलेपनपरः। अप्रशस्ताभिर्मृद्भिर्विष्णोर्विरुद्धतया क्षेत्रे पर्वतादौ प्रशस्तयेत्यादि गुणरहिताभिरिति । न कदाचन आपद्यपीत्यर्थः ॥ ४३ ॥

तमसो भस्म रजसो गन्धः सत्त्वस्य मृत्तिका ।
तस्माद्भस्मादिभिर्नेच्छेदेकान्ती शुद्धिमात्मनः ॥ ४४ ॥

तमस इति । भस्म तमसः कारणमिति शेषः गन्धो रजसः कारणम् । मृत्तिकासत्त्वस्य कारणम् तस्माद्रजस्तमोहेतुत्वात् भस्मादिभिः पुण्ड्रसिद्धिमात्मनो नेच्छेत् किन्तु सत्त्वकारणभूतया मृदोर्द्ध्वपुण्ड्रमिच्छेदिति भावः । शुद्धिमिति पाठे पुण्ड्रजन्यां शुद्धिमित्यर्थः ॥ ४४ ॥

रौद्रव्रतादिनियतैस्तथा मोहनतान्त्रिकैः ।
शवेन्धनकरीषादिभस्मभिः कर्म साध्यते ॥ ४५ ॥

रौद्रेति । रौद्रव्रतादिनियतैः रुद्रादिव्रतनिक्षिप्तैः मोहनतान्त्रिकैरित्यनेन वेदविरुद्धतन्त्रनिष्ठा दूषिता । शवेन्धनकरीषादिभस्मभिः भस्मशब्दस्य शवेन्धनभस्मना करीषादिभस्मना चेत्यन्वयः । कर्म साध्यते कर्माङ्गतया शवेन्धनादिभस्माभिः पुण्ड्राणि बिभ्रतीत्यर्थः ॥ ४५ ॥

मूलजं गन्धसारादि मृगनाभ्यादि जीवजम् ।
मनःशिलादि धातूत्थं त्रयं पुण्ड्रेषु कामिनाम् ॥ ४६ ॥

मूलजमिति । मूलप्रभवं यद्गंधसारादि; जीवजं प्राण्यङ्गोत्थम् । यन्मृगनाभ्यादि कस्तूर्यादि; धातूत्थं धातुजन्यम्;

यन्मनःशिलादिः तदेतत्त्रयं कामिनां पुण्ड्रेषु विहितानीति शेषः ॥ ४६ ॥

कुर्याद्रक्षाविधानञ्च नान्यैः पञ्च विना मृदः ।
गोरजो गोकरीषञ्च चूर्णं हारिद्रमेव च ॥ ४७ ॥

कुर्यादिति । पञ्चमृत्तिकाः पंचविधमृत्तिकाः ताश्च शास्त्रेषु विहिताः पंचविधमृत्तिकाः । तथा च ब्रह्मरात्रे "तस्मात्सर्वप्रयत्नेन संग्राह्याः पञ्चमृत्तिकाः ॥ पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ॥ सिन्धुतीरेऽथ वल्मीके तुलसीमूलमृत्तिकाः ॥ मृद एतास्तु संग्राह्या वर्जयेदन्यमृत्तिकाः" इति गोरजो गोकरीषं हरिद्राचूर्णं पञ्चमृदो वा विना अन्यैर्भस्मादिभिः रक्षाविधानञ्च न कुर्यात् ॥ ४७ ॥

न च भागवतः कुर्यादूर्द्ध्वपुण्ड्रममृत्तिकम् ।
धारणादेव मृत्स्नायाः प्रीयते धरणीधरः ॥ ४८ ॥

न चेति । अमृत्तिकं मृत्तिकारहितम् ऊर्ध्वपुण्ड्रं न कुर्यात् । धरणीधर इति साभिप्रायम् । धारणीधरत्वादेव मृद्धारणात्प्रीयत इति ॥ ४८ ॥

यः प्रपन्नोऽपि लक्ष्मीशं न चक्रादिभिरंकितः ।
न वहत्यूर्द्ध्वपुण्ड्रं वा नैकान्त्यन्तस्य विद्यते ॥ ४९ ॥

य इति । लक्ष्मीशं प्रपन्नोऽपि यश्चक्रादिभिरङ्कितोवा नस्यादूर्द्ध्वपुण्ड्रं वा न वहति न बिभर्त्ति तस्यैकान्त्यं न विद्यते ॥ ४९ ॥

राजसाँस्तामसाँश्चैव व्यपदेशान्विवर्जयेत् ।
ध्रुवं व्यपेति भक्तोऽपि व्यपदेशैरसात्त्विकैः ॥ ५० ॥

राजसानिति । व्यपदेशान्नामानि राजसतामसनामानि न बिभृयादित्यर्थः । असात्त्विकैः सात्विकाभिन्नै राजसतामस-

व्यपदेशैर्भक्तोऽपि व्यपैति विशेषेणापैति प्रच्युतो भवतीति यावत् ॥ ९० ॥

सात्त्विकं नाम शुद्धानामशुद्धानान्तु राजसम् ।
बाह्यादितंत्रसिद्धानां देवादीनान्तु तामसम् ॥ ९१ ॥

सात्त्विकमिति । राजसतामसनामानि वर्जयेदित्युक्तं 'व्यपदेशैरसात्त्विकैः' इति । प्रतियोगितया सात्त्विकान्यर्थादि- हीनानि कानि तानि सात्त्विकानि चिह्नानि तदितराणि राज- सतामसानीत्याकांक्षायामाह । शुद्धानामनन्ययाजिनां नाम सात्विकमशुद्धानामन्यययाजिनां नाम राजसं नाम बाह्यादि तन्त्रसिद्धानामवैदिकानां नाम तामसं नाम ॥ ९१ ॥

दास्यं हि नामकरणमपि तद्वाचकैर्विना ।
गुणकर्मादिभिः स्वैश्च रूढं श्लाघ्यैः सनातनम् ॥ ९२ ॥

नामकरणतन्नामधारणतद्धार्यनियमानाह—दास्यमिति । हि शब्दः 'पद्यमञ्जलिविच्छेद उरोविन्यस्तमक्षरम् । तन्नामकर- णञ्चेति बाह्यमेतच्चतुर्विधम्' इति प्रमाणप्रसिद्धिं द्योतयति। तन्नामधारणस्य तद्दास्यापादकत्वादशुद्धानामवैदिकानाञ्च नामानि न धार्याणीति पूर्वोक्तार्थे हेतुरुक्तः । शुद्धानां नामकर- णस्य तद्दास्यरूपत्वात् तत् श्लाघ्यमिति भावः । तद्वाचकैर्विना शुद्धानां बाधकैर्नामभिर्विनापि स्वीयैः स्वकीयैः श्लाघ्यैर्दास्य- विज्ञापकतया श्लाघनीयैर्गुणकर्मादिभिर्ज्ञानादिभिः गुणैः प्रवच- नादिभिः कर्मभिश्च रूढं सङ्केतितं 'वैष्णवदासः' 'वेदान्ताचार्यः' इत्यादिकमपिनाम सतां मतं धार्यमिति अभिमतं स्यात् ॥९२॥

युग्मैर्विवर्त्तितं रौद्रमयुग्मैर्ब्राह्ममुच्यते ।
उभयैस्तैर्व्यतिस्यूतमयुग्मैर्वैष्णवं गुणैः ॥ ९३ ॥

उपवीतं सदा ब्राह्मं वैष्णवं कटिबन्धनम् ।
उभयं धारयेद्रौद्रं साधयन्कर्म तामसम् ॥ ९४ ॥

युग्मैरिति । उपवीतं ब्राह्मं भवेत् । गुणत्रयरूपत्वादिति भावः । कटिबंधनन्तु वैष्णवं युग्मयुग्ममयैः पञ्चभिर्गुणैः व्यतिस्यूतत्वादिति भावः । उभयं ब्राह्ममुपवीतं वैष्णवव्यतिस्यूतं कटिबन्धनञ्च धारयेद्रौद्रं तर्हि केन धार्यमित्यत आह । तामसं कर्म साधयन्कुर्वन्रौद्रं युग्मं विवर्त्तितं कटिबन्धनं धारयेदिति शेषः । रौद्रस्य तामसकर्माङ्गत्वात्सात्त्विकं कर्माचरता न धार्यमिति भावः ॥ ९३ ॥ ९४ ॥

तामसं नग्नमेकन्तु राजसं वसनद्वयम् ।
कौपीनसहितं तत्तु सात्त्विकं मुनिभिः स्मृतम् ॥ ९५ ॥

तामसमिति । एकं वसनं नग्नं नग्नप्रायं तामसं, वसनद्वयं राजसं, कौपीनसहितं तद्वसनद्वयं मुनिभिः सात्त्विकं स्मृतम् अतः कौपीनसहितं वस्त्रद्वयं धार्यमित्यर्थः ॥ ९५ ॥

दर्भाक्षसूत्रवस्त्राङ्कनामपुण्ड्रविभूषणम् ।
अन्यत्तु तामसं सर्वं विशेषेण विवर्जयेत् ॥ ९६ ॥

मोहनार्थं प्रवृत्ततामसतन्त्रसिद्धं दर्भादिकं त्याज्यमित्याह—दर्भेति । दर्भास्तामसक्षेत्रादुत्पन्नाः । अक्षाणि रुद्राक्षादीनि वस्त्रं धातुविशेषरञ्जितम् अन्यचिह्नाङ्कितं वा सूत्रमयुग्मगुणनिर्मितकटिबन्धनादि अङ्कस्त्रिशूलाद्यङ्कनं नाम च अशुद्धदेवतान्तरसम्बन्धि पुण्ड्रं तिर्यगादि भूषणं त्रिशूलाद्याकारभूषणम् आभरणम् अन्यदितोऽतिरिक्तमपि तामसं सर्वं विशेषेण विवर्जयेत् ॥ ९६ ॥

अन्यतन्त्रैकसिद्धानि काम्यानि विविधानि च ।
द्रव्यनामादिरूपाणि लक्षणानि विवर्जयेत् ॥ ९७ ॥

तामसतन्त्रमात्रविहितानि कर्मादीन्यपि त्याज्यानीत्याह-अन्येति। विविधानि कर्माणि शिवरात्र्युपवासादीनि तथा तन्त्रमात्रव्यवहृतानि द्रव्यनामानि तन्त्रैकसिद्धानि रूपाणि द्रव्याणामाकारविशेषांश्च विशेषेण विवर्जयेत्। इतरतन्त्रमात्रसिद्धैर्नामभिर्द्रव्याणि न व्यवहर्त्तव्यानि तान्यपि तन्त्रमात्रविहिताकारवन्त्यपि वा न कुर्यादित्यर्थः ॥ ५७ ॥ इति लक्ष्मविरुद्धाधिकारः ॥

गुरोरपह्नवात्त्यागात्साम्याद्धिस्मरणादपि।
लोभमोहादिभिश्चान्यैरपचारैर्विनश्यति ॥ ५८ ॥

अथ सत्सेवाविरुद्धपरिहारमाह-गुरोरिति। साम्यात्साम्यानुसन्धानादित्यर्थः। लोभः गुरोर्वृत्तिकर्मस्वस्थद्रव्ये सत्यपि तस्मैतदप्रदानहेतुर्दुर्गुणः। मोहः तद्वैभवाज्ञानादिरूपः। विनश्यति विशेषेण नश्यति ॥ ५८ ॥

विशेषाद्विष्णुभक्तेषु दम्भं लोभं नृशंसताम्।
क्रोधमीर्ष्यां मदं मानं साम्यञ्च परिवर्जयेत ॥ ५९ ॥

विशेषेति। दम्भः अननुष्ठायैव धर्मानुष्ठानख्यापनम्। नृशंसता दयाभावः। ईर्ष्या परातिशयासहिष्णुता। मानोऽहङ्कारः। साम्यं साम्यानुसन्धानम् ॥ ५९ ॥

स एकान्त्यनन्याविमुखो हरिं सर्वेश्वरं प्रभुम्।
यः समाश्रयते किंचित्फलमभ्यर्थयन्नरः ॥ ६० ॥

वैष्णवेषु दम्भादिकं त्यजेदित्युक्तं के नाम वैष्णवा इत्याकांक्षायाम् एकान्तिपरमैकान्तिनौ वैष्णवाविति विवक्षुः क्रमेण एकान्तिपरमैकान्तिनोर्लक्षणमाह-स इति। अन्यविमुखः देवतान्तरविमुखः। किञ्चित्फलं भगवत्पादभक्तिज्ञानकैङ्कर्यतादि-

तरवैराग्यव्यतिरिक्तं यत्किञ्चित्फलमभ्यर्थयन् सर्वेश्वरं हरिं यत्समाश्रयेत्स एकान्तीत्यर्थः ॥ ६० ॥

न्यस्ताशेषभरः श्रीशे यस्तु दास्यैकजीवितः ।
स एष परमैकान्ती द्वावेतौ वैष्णवौ स्मृतौ ॥ ६१ ॥

न्यस्तेति । न्यस्ताशेषभरः न्यस्तात्मात्मीयभरः । दास्यैकजीवितः दास्यातिरिक्तफलविमुखः । अनन्यदैवत्यम् एकान्तिपरमैकान्तिनोर्द्वयोरपि समानम् । अनन्यप्रयोजनत्वं परमैकान्तिनोऽधिकं द्वावेतौ उक्तावेकान्तिपरमैकान्तिनौ द्वौ वैष्णवौ स्मृतौ ॥ ६१ ॥

अन्ये त्ववैष्णवाः सर्वे मनुष्या जिह्मदृष्टयः ।
असतस्तान्वि दुर्देवास्तैः सतां नास्ति सङ्गमः ॥ ६२ ॥

अन्ये इति । अन्ये एकान्तिपरमैकान्तिनोर्व्यतिरिक्ताः जिह्मदृष्टयः कुटिलबुद्धयः ॥ ६२ ॥

अवैष्णवात्स्वधर्मस्थाद्वैष्णवः स्खलितोऽपि सन् ।
श्रेयानेव हि मन्तव्यो मूलात्स न परिच्युतः ॥ ६३ ॥

अवैष्णवादिति । स्वधर्मस्थात्स्ववर्णाश्रमधर्मानिरताद्वैष्णवाद्वैष्णवः स्खलितोऽपि स्ववर्णधर्मात्प्रच्युतोऽपि सन् श्रेयान् श्रेष्ठतमो मन्तव्यः एवकारेण नियम्यते। तत्र हेतुः । मूलात्स न परिच्युत इति । स वैष्णवः मूलात्परिच्युतो न हि यतः ॥ ६३ ॥

स्वेशसम्बन्धविज्ञानं मूलमन्याः क्रियाः पुनः ।
तस्य शाखाः प्रशाखाश्च काश्च ता मूलवर्जिताः ॥६४॥

किं मूलम् का शाखा ? इत्याकांक्षयामाह-स्वेशेति। स्वस्य ईशस्य च सम्बन्धविज्ञानं स्वस्वामिभावलक्षणसम्बन्धज्ञानं मूलमन्याः क्रियाः तस्य शाखाः प्रशाखा उपशाखाश्च मूलवर्जिताः मूलरहितास्ताः शाखाः न काश्चिदपि व्यर्था इत्यर्थः ६४

बाह्यानां जिह्मदृष्टीनामज्ञानां संशयात्मनाम् ।
नालोकमपि कुर्वीत न च तैः किञ्चिदाचरेत् ॥ ६५ ॥

प्रसङ्गादसत्सङ्गवर्जनमाह—बाह्येति । बाह्यानां विपरीतज्ञानानां जिह्मदृष्टीनामन्यथाज्ञानवतामज्ञानां ज्ञानाभाववतां संशयात्मनां संशयचित्तानां तत्त्वहितपुरुषार्थेषु अज्ञानान्यथाज्ञानवतामालोकं दर्शनमपि न कुर्वीत तैर्बाह्यादिभिः किञ्चिल्लौकिकदानादिकपि नाचरेत् शास्त्रीयं यज्ञदानादि किन्तु किमुतेति भावः ॥ ६५ ॥

प्रपन्नैश्चान्यभजनाद्युक्तापायसमन्वितैः ।
वैष्णवो वर्जयेत्सङ्गं प्रच्युतास्ते ह्यवैष्णवाः ॥ ६६ ॥

वैष्णवः स्खलितोऽपि सन् श्रेयानित्युक्तम् । तद्वत्प्रपन्नस्य देवतान्तरभजनादिष्वपि संस्पर्शोऽपि श्रेयानेव स्यादिति प्राप्ते तत्राह—प्रपन्नैरिति । अन्यभजनाद्युक्तापायसमन्वितैर्देवतान्तरभजनप्रभृतिभिः शास्त्रोक्तैरपायैः समन्वितैः संयुक्तैः प्रपन्नैरपि सङ्गं वैष्णवो वर्जयेत् । तत्र हेतुमाह । प्रच्युतास्ते ह्यवैष्णवाः इति । प्रच्युताः स्वधर्मात् च्युतास्ते अन्यभजनान्विताः अवैष्णवाः ऐकान्त्यरहिता यतः ॥ ६६ ॥

दैवेषु पित्र्येषु तथाधर्मार्थेष्वितरेषु च ।
अवैष्णवं न गृह्णीयात्पात्रं दानेषु कर्हिचित् ॥ ६७ ॥

न च तैः किञ्चिदाचरेदित्युक्तं विवृणोति—दैवेष्विति । दैवेषु चार्थेषु पित्र्येषु पित्रर्थेषु धर्मार्थेषु धर्मप्रयोजनकेषु इतरेषु अर्थाद्यर्थेषु लौकिककर्मसु अवैष्णवम् । अनैकान्तिनं न गृह्णीयाद्याजकत्वेन भोक्तृत्वेन सहायत्वेन वा न गृह्णीयात । कर्हिचित् क्वचिदपि दानेषु पात्रं न गृह्णीयात् पात्रत्वेन न गृह्णीयात् । यद्वा देवार्थेषु न गृह्णीयात् ॥ ६७ ॥

न कश्चित्प्रतिगृह्णीयाद्विष्णुभक्तिविवर्जितात् ।
पानीयं पक्वमन्नञ्च विशेषण विवर्जयेत् ॥ ६८ ॥

नेति । पानीयं पक्वान्नं च विशेषेण विवर्जयेत् । पापाधिक्यादिति भावः ॥ ६८ ॥

विद्यार्थसंप्रयोगोऽपि प्राकृतैर्न कथंचन ।
विवादोऽपि न कर्त्तव्यः क्रीडासंकथनानि च ॥ ६९ ॥

विद्येति । विद्यार्थसंप्रयोगोऽध्ययनाध्यापनलक्षणः । विवादः तत्त्वनिश्चयात्मको वादः । तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डेबीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदित्यनेन अक्षपादे न जल्पवितण्डयोरनुज्ञानाद्यद्वा विवादो व्यर्थकलहः क्रीडासंकथनसाहचर्यात् । क्रीडासंकथनानि इष्टालापाः ॥ ६९ ॥

न चैकस्मिन्भजेत्साम्यं कर्मण्यैकान्त्यवर्जितैः ।
न चैषां कर्मकुर्वीत न स्वकर्म च कारयेत् ॥ ७० ॥

न चेति । एकस्मिन् लौकिके वैदिकेऽपि कर्मणि ऐकान्त्यवर्जितैः साम्यं न भजेत् । अनेनेदं कृतम् अहप्येष इव एतदनुतिष्ठामीत्यनुसन्धानेन न तदनुतिष्ठेदित्यर्थः । तेषामैकान्त्यवार्जितानां कर्म लौकिकमलौकिकं वा स्वयं न कुर्वीत । तैरैकान्त्यवर्जितैः स्वकर्म वैदिकं लौकिकं वा न कारयेत् यद्वा, उत्तरार्धस्य अवैष्णवस्य आर्त्विज्यं स्वयं न कुर्यात् तेनापि स्वार्त्विज्यं न कारयेदित्यर्थः ॥ ७० ॥

पंक्तौ समाजे ग्रामादौ न त्वभागवतोत्तरे ।
वसेदेकत्र भवने नैकेनाप्यसता सह ॥ ७१ ॥

पंक्ताविति । अभागवतोत्तरे समाजे । इदं विशेषणं ग्रामस्य लिङ्गव्यत्ययेन पंक्तेरपि यस्यां पंक्तौ समाजे ग्रामे वा

अभागवता अधिका विरला वा भागवतास्तस्यां पङ्क्तौ समाजे ग्रामे वा न वसेत्। भागवतानां समसंख्याकत्वे अधिकसंख्याकत्वे वा पङ्क्तिसमाजग्रामेषु वासो न दोषावह इति भावः। भवने गृहे तु भागवताधिक्येऽपीति भावः असता एकेनापि समं न वसेत् न तिष्ठेत् ॥ ७१ ॥

प्रीत्यप्रीतिसमायोगं स्पर्शं भुक्तिं सहोषिताम्।
स्वैरप्यैकान्त्यविमुखैरघवर्जं विवर्जयेत् ॥ ७२ ॥

प्रीत्येति। प्रीत्यप्रीतिसमायोगं कल्याणादिहर्षकाले अभिमतं मरणादिदुःखकाले वा, हर्षशोकाद्यनुपालनाद्यर्थं तैः सङ्गमं स्पर्शम्। प्रसिद्धम्। भुक्तिं भोजनम्। सहोषिताम् एकस्मिन्नासने उपवेशनम् इदं च नवविधसङ्करस्याप्युपलक्षणम्। 'नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सह' इत्युक्तेः। इदं सर्वमैकान्त्यविमुखैः स्वैः स्वैः स्वकीयैरपि सह अघवर्ज्जं विवर्जयेत्। अघं तु परिपालनीयमेवेत्यर्थः। अघं जननमरणनिबन्धनमाशौचम् ॥ ७२ ॥

अवैष्णवं न वन्देत नार्चयेद्विधिपूर्वकम्।
संप्रश्नासनदानादि कुर्याद्वाप्यानृशंस्यतः ॥ ७३ ॥

अवैष्णवमिति। न वन्देत न नमस्कुर्यात्। विधिपूर्वकं नार्चयेत्। अर्घ्यादिभिर्न पूजयेत्। संप्रश्नः कुशलप्रश्नः। आसनमुपवेष्टुमासनदानम् तदादिकम् आनृशंस्यमसतोऽपि न कुर्यात्। 'संप्रश्नासनदानादि न कुर्यादानृशंस्यत' इति पाठानुसारेणेदं व्याख्यानम्।' संप्रश्नासनदानादि कुर्याद्वाप्यानृशंस्यत, इति पाठान्तरम्। अत्र यद्युक्तं तद्ग्राह्यम् ॥ ७३ ॥

अभक्तमच्युतस्यापि नावमन्येत कश्चन।
हितं वा बोधयेत्साधोर्दद्याद्वा किञ्चिदीप्सितम् ॥७४॥

अभक्तमिति। अच्युतस्य अभक्तम् अच्युतविषयकभक्तिरहितं कञ्चिन्नावमन्येतापीति अवमानं न कुर्यादित्यर्थः। अपि शब्दः संप्रश्नासनदानादि विधिनिषेधं समुच्चिनोति। साधोरभक्तस्याप्याभिमुख्यवतः हितं बोधयेद्वाशब्देन हितबोधनाभावरूपकल्पान्तरसंग्रहः क्रियते एवमेव दद्याद्वा किञ्चिदीप्सितमित्यत्रापि वाशब्दार्थः स्वयमानृशंस्यवाँश्चेदभक्तस्याभिमुख्ये हितबोधनं किञ्चिदभीप्सितप्रदानमपि न दोषावहमित्यर्थः॥ ७४॥

न च मैत्रीं प्रकुर्वीत वैष्णवः प्राकृतैः सह।
क्वायमच्युतसक्तात्मा क्व ते विषयचंचलाः॥ ७५॥

मैत्रीं न प्रकुर्वीतेत्यत्र हेतु माह—नचेति। क्वायमित्यादिना भिन्नप्रकृतिकत्वान्मैत्री न युज्यत इति भावः॥ ७९॥

असतां गुणकर्माणि नानुमोदेत किंचन।
स्मरणादपि यत्तेषां महदाप्नोति किल्बिषम्॥ ७६॥

असतामिति। गुणा औदार्यादयः। कर्माणि अरिनिरसनादीनि न तु शास्त्रविहितानि धर्मानुमोदनस्य विहितत्वादादिशब्दाद्देहबलादिकं गृह्यते गुणकर्माणि नानुमोदेत। तत्र हेतुमाह स्मरणादिति। यद्यस्मात् कारणात् तेषामसतां स्मरणादपि महत्किल्बिषं भवति किम्पुनः स्मरणादिकृतेन गुणकर्माद्यनुमोदनेनेति भावः॥ ७६॥

विशिष्टः परमैकान्ती ज्ञानवैराग्यभक्तिभिः।
तादृशैरेव कुर्वीत सह संकथनादिकम्॥ ७७॥
उक्तान्येतानि सर्वाणि योऽवमन्येत मूढधीः।
स एष तमसोऽभ्येति पारमैकान्त्यवर्जितः॥ ७८॥

तर्हि परमैकान्तिकैः सह संकथनादिकं कुर्यादित्यपेक्षाया-माह-विशिष्ट इति द्वाभ्याम् । ज्ञानवैराग्यभक्तिभिर्विशिष्ट इत्यन्वयः । तादृशैः ज्ञानवैराग्यविशिष्टैः ॥ ७७ ॥ ७८ ॥

अथ वृत्तिमिमां सम्यक् कुर्वाणो विगतव्यथः ।
विसृज्य देहं प्राप्नोति तद्विष्णोः परमं पदम् ॥ ७९ ॥

अथेति । इमां वृत्तिं पूर्वोक्तां विहिताचाराध्यात्मिकाम् ॥ ७९ ॥
इति सत्सेवाविरुद्धाधिकारः ।

अशक्तमपि च स्मर्तुमन्ते पूर्वकृतं स्मरन् ।
स्वयमेव परं धाम स्वयं नयति माधवः ॥ ८० ॥

ननु वृत्तिं शश्वत्सदाकुर्वाणः देहं विसृज्य तत्प्रमाणप्रसिद्धं विष्णोः परं पदं प्राप्नोतीत्युक्तं नतद्युज्यते । 'यं यं वापि स्मरन् भाव ' मित्यस्यावश्यकत्वाभिधानाच्छरीरावसानदशायां धातुसंक्षोभेण स्मरणाशक्तेः सम्भावितत्वात्कथं देहावसाना-नन्तरं मोक्ष इति निश्चेतुंशक्य इत्याशङ्कायामाह-अशक्तमिति। अन्ते शरीरावसानावश्यंभावावसरे स्मर्तुं भगवन्तं स्मर्तुमशक्त-मपि च जनं प्रपन्नं माधवः श्रियः पतिः पूर्वकृतं पूर्वं चेतनेन कृतं प्रपदनं स्वयमेव स्मरन् परं धाम परमं पदं नयति। 'ततस्तु म्रियमाणं तं काष्ठपाषाणसंनिभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिमि' त्याद्यत्रानुसन्धेयम् ( १ ) ॥ ८० ॥

न खल्वपि दशादेशकालहेतुविपर्ययैः ।
प्रपत्तुस्त्यक्तदेहस्य परा यात्रा विहन्यते ॥ ८१ ॥

नखल्विति । दशा शुचित्वाद्यवस्था । देशः पुण्यक्षेत्रादिः । काल उत्तरायणादिः । दशादेशकालरूपाणां हेतूनां विपर्ययैरपि

( १ ) यदि वातादिदोषेण मद्भक्तो मां च विस्मरेत् । तर्हि स्मराम्यहं भक्तन्न-यामि परमां गतिमित्याद्यादिपदेन संगृह्यते ॥

अभावैः सहापि त्यक्तदेहस्य प्रपत्तुः प्रपन्नस्य परा यात्रा अर्चिरादिमार्गेण गमनं न विहन्यते। खलु इत्यनेन 'रथ्यान्तरे मूत्रपुरीषमध्ये चण्डालवेश्मन्यथवा श्मशाने। कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभते च मुक्तिम्॥' 'यतश्चायनेऽपि दक्षिण' इत्यादि प्रमाणप्रसिद्धिर्द्योत्यते॥ ८१ ॥

अर्चिरादिकया गत्या तत्र तत्रार्चितः सुरैः।
अतीत्य लोकानभ्येति वैकुंठं वीतकल्मषः॥ ८२ ॥

अथार्चिरादिगतिमाह–अर्चीति। अर्चिरर्चिःपुरुष आदिः प्रथमः अतिवाहको यस्यां सा अर्चिरादिका तया गत्या तत्रतत्रातिवाहकस्थले सुरैरर्चिर्दिनपूर्वपक्षोत्तरायणसंवत्सरवातसूर्यचन्द्रविद्युत्पुरुषवरुणेन्द्रधातृभिरर्चितः पूजितः सन् लोकान् तल्लोकानतीत्य वैकुण्ठमभ्येति प्राप्नोति॥ ८२ ॥

अथैनममरास्तत्र सह दिव्याप्सरोगणैः।
सोपहाराः प्रहर्षेण प्रत्युद्गच्छन्त्युपागतम्॥ ८३ ॥

अथेति। अथ वैकुण्ठलोकप्राप्त्यनन्तरम्। तत्र वैकुण्ठलोके दिव्याप्सरोगणैः सह माला चूर्णाञ्जनक्षौमभूषाहस्तैरप्सरसाङ्गणैः सह दूराद्वैकुण्ठवासिनः सूरयः सोपहाराः उपहारसहिताः सन्तः उपागतं प्राप्तमेतं प्रपन्नं हर्षेण दूरतः प्रत्युद्गच्छन्ति॥८३॥

ततः प्राप्य जगन्नाथं प्राणिपत्य श्रियः पतिम्॥
आसीनमासने दिव्ये भक्तैर्भागवतैर्वृतम्॥ ८४ ॥

ततइति। दिव्ये पादगात्राद्यात्मकधर्माधिसूरिनिर्मिते॥ ८४॥

आप्लुतः सस्मितालापमधुरालोकनामृतैः।
पादमूलं भजत्यस्य दास्यैकानन्दनिर्भरः॥ ८५ ॥

आप्लुत इति। सस्मिताः स्मितपूर्वका आलापाः सूक्तयः मधुराणि मनोहराणि आलोकनानि च अमृतानि तैराप्लुतः अस्य

श्रियः पत्युर्दास्यैकानन्दनिर्भरः आनन्दपरिपूर्णः सन् पादमूलम्भजति सेवते ॥ ८५ ॥

स च सर्वेषु लोकेषु तमेवाभ्यनुसंचरन् ॥
संमोदते समगुणः कामान्नी कामरूपधृक् ॥ ८६ ॥

स चेति। स च मुक्तश्च तमेवाभ्यनुसंचरन् कामान्नी, कामरूपमनुसञ्चरन्निति श्रुतिरत्रानुसन्धेया । समगुणः भगवद्गुणतुल्यासंकुचितज्ञानादिगुणकः । कामान्नी, काम्यन्त इति कामाः कल्याणगुणाः । त एवान्नमदनीयं भोग्यं तदस्यास्तीति कामान्नी इदं चोपलक्षणम् । गुणविभूतिविशिष्टभगवदनुभवानन्दभरित इत्यर्थः। कामरूपधृक्स 'एकधा भवति द्विधा भवति' इति प्रक्रियया एकधा दशधा शतधा सहस्रधा स्वसङ्कल्पादात्तकिङ्करविग्रहः सन् सम्मोदते। समित्येकीकारे तेन सह तुल्यभोगो मोदत इत्यर्थः। तथा च शारीरकं सूत्रम् "भोगमात्रलिङ्गाच्च" इति ॥ ८६ ॥

अथेह बान्धवास्तस्य गतस्य परमां गतिम् ।
वैष्णवास्त्वभिनन्देयुः पुण्यामवभृथक्रियाम् ॥ ८७ ॥

अथ प्रपन्नस्य मोक्षप्राप्त्यनन्तरं तदीयानां कर्त्तव्यविशेषमाह–अथेति। लोके परमामुत्कृष्टां गतिं गतस्य प्राप्तस्य प्रपन्नस्य वैष्णवास्तस्य पुण्यामवभृथक्रियां 'मृतिर्यन्मरणं तदवभृथ' इति श्रुतेरभिनन्देयुः। हर्षेणोपलालयेयुः। भागवतमृतेः पुण्यत्वं च 'यत्तु ब्रह्मविदा त्यक्तमपि तन्मङ्गलं वपुः । स्पृष्ट्वा विमुच्यते ब्रह्महत्यये' त्यादिषु प्रसिद्धम् ॥ ८७ ॥

क्रियते चास्य पुत्राद्यैर्यत्किमप्यौर्द्ध्वदैहिकम् ।
तत्सर्वं प्रियभक्तस्य विष्णोः प्रीतिकरं परम् ॥ ८८ ॥

पुत्रादिभिः क्रियमाणोपसंस्कारोऽपि केवलभगवन्मुखोल्लास-फलक इत्याह–क्रियत इति । प्रियः भक्तो यस्य तस्य प्रियभक्तस्य । इदं च साभिप्रायं विशेषणम् ॥ ८८ ॥

गुरूणामन्तिमातिथौ जन्मर्क्षे श्रवणेऽपि वा ।
हरिमभ्यर्चयेद्भक्त्या तद्भक्तांश्च विशेषतः ॥ ८९ ॥

शिष्याणां कर्त्तव्यविशेषमाह–गुरूणामिति । अन्तिमातिथौ मरणदिने जन्मर्क्षे गुरूणां जन्मनक्षत्रे॥८९॥इति गत्यधिकारः॥

ज्ञानकर्मक्रियामन्त्रध्यानयोगगतिक्रमाः ।
विस्तरेण मया पूर्वमुक्तास्तत्रापि ते समाः ॥ ९० ॥

ज्ञानमिति । अत्रप्रपन्नेऽपि उपायत्वबुद्धिं विहाय प्रपन्नेनापि सर्वमनुष्ठेयमिति भावः ॥ ९० ॥

उपासनविधौ धर्मा ये चान्यैः परिकीर्तिताः ।
न्यस्तात्मनस्तु तान्सर्वान्फलान्येव निबोधत ॥ ९१ ॥

उपासनेति । अन्यैः स्वव्यतिरिक्तैः मुनिभिर्न्यस्तात्मनः प्रपन्नस्य फलान्येव न तूपायान्निबोधत ॥ ९१ ॥

अभ्यर्थितो जगद्धात्र्या श्रिया नारायणः स्वयम् ।
उपादिशदिमं योगमिति मे नारदाच्छ्रुतम् ॥ ९२ ॥

प्रपत्तियोगस्य सम्प्रदायमाह–अभ्यर्थित इति जगद्धात्र्या जगन्मात्रा इमं योगं पूर्वमुक्तं प्रपत्त्युपायम् ॥ ९२ ॥

इति हस्तपदे साङ्ख्यं शास्त्रं गुह्यतमं परम् ।
शिरश्चैतन्मयोक्तायाः संहिताया भविष्यति ॥ ९३ ॥

इतीति । इति अनेन प्रकारेण प्रवृत्ते गुह्यतमे देवानां गुह्यतमे देवानां गुह्यम् "य एवं वेद ब्राह्मणो महिमानमेति" इति

श्रुतेरत्यन्तगुह्यम् एतच्चतुरध्यायात्मकं मयोक्तायाः संहितायाः भारद्वाजसंहितायाः ॥ ९३ ॥

संहितोपनिषद्यस्मिञ्छास्त्रे ज्ञेयान्यनुक्रमात् ।
आदौ न्यासः फलञ्चास्य तदुपायश्च संग्रहः ॥ ९४ ॥

संहितेति । उक्तानर्थाननुक्रम्य संहितोपनिषदि भारद्वाजोपनिषद्रूपे अस्मिन् चतुरध्यायात्मके शास्त्रे ॥ ९४ ॥

ततो न्यासस्य चाङ्गानां निर्णयः सविरोधिनाम् ।
ततश्च फलरूपाया वृत्तेरङ्गानि विस्तरात् ॥ ९५ ॥

तत इति अङ्गानामानुकूल्यसङ्कल्पादीनां सविरोधिनाम् । आनुकूल्याद्यङ्गविरोधिसहितानाम् ॥ ९५ ॥

वृत्त्यङ्गमेवं च ततो निन्द्यहानं गतिस्तथा ।
एवं चतुर्भिरध्यायैः कथितानि विशेषतः ॥ ९६ ॥

वृत्त्यङ्गमिति । निन्द्यहानिं प्रतिषिद्धविवर्जनम् ॥ ९६ ॥

इत्थं प्रसादाद्देवर्षेर्नारदस्यामितौजसः ।
कृतोऽत्र वेदवेदान्तपञ्चरात्रार्थनिर्णयः ॥ ९७ ॥

इत्थमिति । अमितौजसः महातपस्विनः । अत्र चतुरध्याये वेदानां वेदान्तानां पञ्चरात्रस्य च योऽर्थः प्रधानतात्पर्यविषयः तस्य शास्त्रकृतनिर्णयः कृतः ॥ ९७ ॥

इत्येतत्परमं गुह्यं श्रुत्वा भागवतोत्तमाः ।
मुनयः पूजयांचक्रुर्भरद्वाजं तपोनिधिम् ॥ ९८ ॥

इतीति । परमं रहस्यं वेदगुह्यम् ॥ ९८ ॥

श्रुत्वादौ नारदात्सम्यग्भरद्वाजोऽर्थसंग्रहम् ।
महतीं संहितामेतां चकार मुनिचोदितः ॥ ९९ ॥

श्रुत्वेति । अर्थसंग्रहं श्रुत्वेत्यन्वयः ॥ ९९ ॥

यश्चेमां संहितां पुण्यां शृणुयाच्छ्रावयेत वा ।
स मुक्तः सर्वपापेभ्यः सर्वकामान्समश्नुते ॥ १०० ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां न्यासोपदेशो नाम चतुर्थोऽध्यायः ॥

---

यश्चेति । पुण्यां सर्वपापहरां श्रावयेत् । सर्वान्कामान्समश्नुते मुक्तोभवतीत्यर्थः ॥ १०० ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहिताटीकायां चतुर्थोऽध्यायः ॥

---

भूय एवर्षिभिः पृष्टो भरद्वाजस्तपोनिधिः ॥
अनुक्तानब्रवीद्धर्मानुक्तांश्चैव प्रसादयन् ॥ १ ॥

भूय इति । प्रसादयन् विशदीकुर्वन् ॥ १ ॥

धर्मो वर्णाश्रमादीनां कार्त्स्न्येन मुनिसत्तमाः ॥
शिष्टो व्याससमासाभ्यामार्षैर्दिव्यैस्तथागमैः ॥ २ ॥

धर्म इति । हे मुनिसत्तमाः वर्णाश्रमादीनां धर्मः आर्षैः ऋषिप्रोक्तैः धर्मशास्त्रैस्तथा दिव्यैरागमैः पञ्चरात्रसंहिताभिश्च व्यास समासाद्यैर्व्यासो विस्तारः समासः सङ्कोचः । आदिशब्देन अनतिसङ्कोचविस्तारो विवक्षितः ॥ २ ॥

अत्र केचित्परं तत्त्वं रजोमीलितदृष्टयः ॥
अपश्यन्तोऽभिजानन्ति धर्मस्य न परां गतिम् ॥ ३ ॥

अत्रेति । केचिद्रजोमीलितदृष्टयः रजोगुणसंकुचितज्ञानाः अत्र आर्षदिव्यशास्त्रगणेषु अपश्यन्तः धर्मस्य परां गतिं नाभिजानन्ति । अपश्यन्तो नाभिजानन्तीति पदाभ्यां साधनभूत-

समीचीनन्यायपरिशीलनाभावः तत्फलभूतनिर्णयाभावश्च विवक्षितः ॥ ३ ॥

केचित्तु सत्त्वसम्पन्नाः केशवेनावलोकिताः ।
सारासारविदः प्राज्ञाः परं धर्मं विजानते ॥ ४ ॥

केचिदिति । सत्त्वसम्पन्नाः उद्रिक्तसत्त्वगुणाः । केशवेनावलोकिताः जायमानदशायां भगवता विलोकिताः । एतच्च सत्त्वसम्पत्कारणम् । 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' इति वचनात्परं धर्मं मोक्षधर्मम् ॥ ४ ॥

यदैकान्त्यङ्गता विष्णौ भगवत्यात्मभावने ।
तद्वैष्णवा भागवताः सन्त इत्यपि ते स्मृताः ॥ ५ ॥

यदेति । आत्मनो भावयति करणकलेवरादि योगिनः करोतीत्यात्मभावने भगवति विष्णौ विषये ऐकान्त्यङ्गताः प्राप्तास्ते भागवताः । त एव सन्त इत्यपि स्मृताः ॥ ५ ॥

नियोक्ता भगवान्विष्णुर्नियोगस्तस्य वै श्रुतिः ।
नियोज्याः सत्त्वसम्पन्ना मुख्या मोक्षार्थचिन्तकाः ॥ ६ ॥

नियोक्तेति । भगवान् ज्ञानादिषाड्गुण्यपरिपूर्णः । "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति श्रीपराशरोक्तेः । विष्णुर्व्याप्तिमान्नारायणः नियोक्ता नियोजकः । श्रुतिस्तस्य विष्णोर्नियोग आज्ञारूपः । सत्त्वसम्पन्नाः सत्त्वनिष्ठाः सत्त्वगुणस्थानीयनियोगविषयाः । अतस्ते वै मुख्याः । कुतः ? मोक्षार्थचिन्तकाः मोक्षाख्यं पुरुषार्थं यतः काङ्क्षन्ते अतस्ते मुख्या नियोज्या इति वान्वयः । एतत्सर्वं भगवतो नियोक्तृत्वं श्रुतेर्नियोगत्वं सत्त्वस्थानां नियोज्यत्वमित्येतत्सर्वम् अजानन्तः ॥ ६ ॥

अन्यथैवाभिमन्यन्ते सर्वमेतत्कुदृष्टयः।
यतो दूरतरास्ते हि परस्य परमात्मनः ॥ ७ ॥

अन्यथैवाभिमन्यन्ते तत्र हेतुमाह—अन्यथैवेति यत इति यतः कारणात्ते कुदृष्टयः परस्य सर्वस्मात्परस्य परमात्मनः आत्मनामन्तर्यामिणः दूरतरा अतिविप्रकृष्टास्तद्दास्यरहिताः जायमानकटाक्षरहिताश्चेत्यर्थः ॥ ७ ॥

यथा पृथग्विधा वर्णा यथा तत्रैव चाश्रमाः।
विविक्तमतयस्तत्र तथा भागवता अपि ॥ ८ ॥

एवं भागवतानां भगवत्कृपापारतन्त्र्यात्तेषां शास्त्रात् समीचीनज्ञानसम्भवः नान्येषामित्याभिध्याय भागवतानां बहुविधत्वमाह—यथेति। यथा वर्णाः पृथग्विधाः परस्परं भिन्ना यथा वा तत्रैव ब्राह्मणक्षत्रियादिवर्णेष्वेव आश्रमाः ब्रह्मचर्यादयः पृथग्विधाः यथा विविक्तमतयः अनन्यधियः भागवता अपि तत्र वर्णेष्वेवाश्रमेष्वपि च पृथग्विधाः। भक्तप्रपन्नभेदात् शुद्धमिश्रभेदाच्च बहुविधा इत्यर्थः ॥ ८ ॥

ईशभक्तिफलोपाया ईशैकफलसाधनाः।
द्विधा ह्येकान्तिनस्ते च शुद्धा मिश्रा इति द्विधा ॥ ९ ॥

द्वैविध्यमेवाह ईशेति। ईशस्तद्भक्तिश्च क्रमेण फलमुपायश्च येषां ते ईशभक्तिफलोपायाः भक्त्युपायनिष्ठा इत्यर्थः। ईशैकफलसाधनाः भगवल्लाभाय भगवन्तमेवोपायत्वेन स्वीकृतवन्तः प्रपन्ना इत्यर्थः। अयं भेदो वर्णस्थानीयः। अत्रैकान्तिशब्दः परमैकान्तिपरः। ईशैकफलसाधनत्वोक्तेः। 'स एकान्त्यन्यविमुखो हरिं सर्वेश्वरं परम् ॥ यत्समाश्रयते किञ्चित्फलमभ्यर्थयन्नर' इति एकान्तिन ईशैकफलसाधनत्वाभावोक्तेः। ते चैका

न्तिनः प्रत्येकं शुद्धा मिश्रा इति द्विधा भिन्ना इत्यर्थः । अयं भेद आश्रमस्थानीयः ॥ ९ ॥

विशुद्धज्ञानकर्माणः श्रौतदिव्यार्षवर्त्मभिः ।
भक्तिनिष्ठाः परं ब्रह्म नारायणमुपासते ॥ १० ॥

ईशभक्तिफलोपाया इत्युक्तं विवृणोति।विशुद्धमिति। विशुद्धं फलाभिसन्धिरहितं ज्ञानं ज्ञानयोगः कर्म कर्मयोगश्च येषां ते तथोक्ताः । इयं च भक्तेः साधनोक्तिः । भक्तिनिष्ठः मोक्षोपायतया कर्मज्ञानसाध्यभक्तियोगं स्वीकृतवन्तः श्रौतदिव्यार्षवर्त्मभिः श्रौतं श्रुतिविहितं दिव्यं श्रीपञ्चरात्रोक्तम् आर्षं धर्मशास्त्रोक्तं तैर्वर्त्मभिर्मार्गैः परं ब्रह्म बृहत्त्वादिगुणयुक्तं नारायण मुपासते ॥ १० ॥

नारायणैकशरणाः फलं नारायणः स्वयम् ।
तैस्तैः स्वादुत्तमैः कल्पैर्यजन्तोऽनुभवन्ति वै ॥ ११ ॥

द्वितीयपादं विवृणोति–नारायणेति । नारायणैकशरणाः नारायणैकोपायाः फलं फलभूतं नारायणं स्वयं स्वादुत्तमैः स्वयम्प्रयोजनभूतैर्नतूपायकुक्षिनिक्षिप्तैस्तैस्तैः कल्पैः श्रौतदिव्यार्षविधिभिर्यजन्त आराधयन्तोऽनुभवन्ति ॥ ११ ॥

ये तु वाकनिषन्निष्ठास्तत्तत्संस्कारसंस्कृताः ।
ते वै भागवताः शुद्धा वासुदेवैकयाजिनः ॥ १२ ॥

येत्विति वाकनिषन्निष्ठाः वाकेषु मूलवेदेषु निषत्सु च परिनिष्ठिताः तत्तत्संस्कारसंस्कृताः वाकनिषद्विहितगर्भाधानादिचत्वारिंशत्संस्कारैः संस्कृताः वासुदेवैकयाजिनः नत्वन्यीन्द्राद्यान्तर्याम्याराधकाः। शुद्धयाजिन इत्यर्थः। एवं भूतास्ते शुद्धा इत्यन्वयः ॥ १२ ॥

त्रय्या विहितसंस्कारास्त्रय्यन्ते परिनिष्ठिताः।
यजन्त्येकान्तिनो मिश्रा विष्णुं विश्वतनुं हरिम्॥१३॥

मिश्रैकान्तिनां लक्षणमाह—त्रय्येति। त्रयी ऋग्यजुः सामानि विहिताः संस्कारा येषां ते तथोक्ताः। त्रय्यन्तेषु वेदान्तेषु परिनिष्ठिताः। विश्वतनुं विष्णुम् इन्द्राद्यन्तर्यामिणं हरिं स्वकर्मभिर्यजन्ते॥ १३॥

श्रूयते यत्र यष्टव्या यादृशी या हि देवता।
तादृशी सा भवेत्तत्र यजन्त्येकान्तिनो हरिम्॥ १४॥

विश्वतनुमित्युक्तमर्थं विशदयति श्रूयत इति। यत्र कर्मणि यादृशी यादृग्गुणविग्रहादिविशिष्टा या देवता यष्टव्या श्रूयते श्रुत्या विधीयते तत्र नित्यनैमित्तिकात्मके कर्मणि तादृशी तादृग्गुणविग्रहादिविशिष्टा सा देवता भवेत्। तादृग्गुणविग्रहादिविशिष्टदेवतान्तर्यामिणं हरिमेकान्तिनः अनन्यदेवताः यजन्ति। तेषामाराध्यत्वेन तत्तद्देवतान्तर्यामिरूपेण सन्निहितो भवतीत्यर्थः॥ १४॥

तथा हि वाक् शची दुर्गा धाता शक्रस्त्रियम्बकः।
इति नानाभिधारूपो लक्ष्मीशः स्वयमिज्यते॥ १५॥

व्यक्तमर्थं विवृणोति—तथेति। वाक् सरस्वती। शची इन्द्राणी। दुर्गा पार्वती। धाता सरस्वतीभर्त्ता। शक्रः शचीपतिः। त्र्यम्बको दुर्गापतिः। इति एवं प्रकारेण नानाभिधारूपः नानाविधनामरूपविशिष्टः सन् लक्ष्मीशः स्वयमिज्यते पूज्यते। तत्तद्देवतान्तर्यामी सन् तत्तद्रूपद्वारा स्वपर्यन्ताभिधायिभिस्तन्नामभिः स्वयं श्रियः पतिरेवाराध्यत इत्यर्थः। लक्ष्मीश इति साभिप्रायं विशेषणम्। "देवतिर्यङ्मनुष्येषु पुन्नामा भगवान्हरिः। स्त्रीनाम्नीलक्ष्मीमैत्रेय नानयोर्विद्यतेपरम्"

इत्यादिप्रक्रियया धात्रादीनामाराधनं भगवदाराधनं लक्ष्म्याराधनञ्चेति भावः ॥ १५ ॥

तथैवात्मपृथिव्याद्या यतो लक्ष्मीपतेर्वपुः ।
अतस्तैरौपनिषदैरिज्यतेऽखिलविग्रहः ॥ १६ ॥

एवं नित्ये नैमित्तिके च कर्मणि रुद्रेन्द्रादिदेवताके तत्तद्देवतान्तर्यामिणो नारायणस्याराध्यतया पारमैकान्त्यमभग्नमित्युक्त्वा 'जीवमुख्यप्राणलिङ्गात्' इत्यादिनोपासनात्रैविध्यादौ श्रुतत्वादिह तद्योगादियुक्त्वा चिद्विशिष्टोपासनजीवविशिष्टोपासनस्वरूपोपासने उपासनद्वय इव प्रतर्दनविद्यासु इन्द्रादिजीवशरीरकपरमात्मोपासनमपि न पारमैकान्त्यभङ्गाय भवतीत्याह-तथैवेति । तथैव नित्यनैमित्तिके जीव आत्मा आत्मपृथिव्याद्याः जीवपृथिव्याद्या जीवपृथिवीप्रभृतयः । आदिशब्देन अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्यः पृथिव्यां तिष्ठन् यो अप्सु तिष्ठन्' इत्यारभ्य पठितानामबादीनां संग्रहः । यतः कारणात् लक्ष्मीपतेः श्रियः पतेर्वपुः शरीरं 'यस्य पृथ्वीशरीर'मिति अत्रानुसन्धेयम् । अतः कारणादौपनिषदैः उपनिषत्प्रतिपादितब्रह्मविद्यानिष्ठितैर्मिश्रपरमैकान्तिभिरखिलपृथिव्यादितत्तच्छरीरको लक्ष्मीपतिरिज्यते उपास्यते । पृथिव्याद्युपादानं दृष्टान्तार्थम् । यथा पृथिव्याद्यन्तर्याम्युपासनेन न पारमैकान्त्यभङ्गः एवं जीवान्तर्याम्युपासनेनापि न पारमैकान्त्यभङ्ग इति ॥ १६ ॥

ततः शुद्धं परं ब्रह्म विशुद्धपरिवारकम् ।
इज्यते विविधैर्भोगैर्नित्यं च प्रतिमादिषु ॥ १७ ॥

एवं मिश्रैकान्तिनां मिश्रताप्रयोजकं मिश्रयजनमुक्त्वा तेषाम् उपादानानन्तर्भाविनीत्येव भगवदिज्यायामपि शरीरत्वेन देव-

तान्तरसम्बन्धशङ्कायां तन्निषेधति—तत इति । शुद्धं देवतान्तर्यामिभावमन्तरेणाप्राकृतदिव्यविग्रहविशिष्टत्वेनावस्थितं विशुद्धपरिवारकं संसारानुपहतदेवीभूषणदिव्यायुधगणादिपरिवारसमेतं परं ब्रह्म प्रतिमादिषु विविधैर्भोगैर्नित्यमिज्यते । नित्यार्चनन्तु विशुद्धपरिवारकशुद्धविषयमेवेत्यर्थः । यद्वा व्यामिश्राणां न केवलं सर्वत्रापि व्यामिश्रयजनं; प्रतिमादिषु नित्यं शुद्धं यजनमप्यस्तीत्यर्थः ॥ १७ ॥

अशुद्धा ब्रह्मरुद्राद्या जीवा विष्णोर्विभूतयः ।
तान्वै कुदृष्टयः साम्यात्परत्वादप्युपासते ॥ १८ ॥

अशुद्धानां ब्रह्मादीनामाराधनमपि तु तदन्तर्यामिण एवाराधनम् । नित्यार्चनादिषु तेषां शरीरत्वेनापि नान्वय इत्युक्त्वा इदानीं स्वातन्त्र्येण चतुर्मुखाद्याराधनं कुदृष्टिमूलमित्याह—अशुद्धा इति । अशुद्धाः कर्मवश्याः ब्रह्मरुद्राद्याः । आदिशब्दादिन्द्रादीनां ग्रहणमादिशब्देन तद्ग्रहणं च दृष्टान्तार्थम् । यथा नाकेशेन्द्रो 'नत्वद्वुत्तरो ज्यायानस्ति वृत्रह'न्नित्यादिभिर्वाक्यैरापातत इन्द्रस्य परत्वे प्रतिपन्ने त्वाष्ट्रवधबलिबन्धनब्रह्महत्यादिकर्मसम्बन्धनिबन्धनदुःखानुभवश्रवणात्सृज्यत्वसंहार्यत्वश्रवणाच्चापरत्वं स्थिरीकृतम्; एवं चतुर्मुखादीनाम् अपि वेदापहारगुरुपातकनिबन्धनदुःखानुभवस्य 'नारायणादिन्द्रोजायते नारायणाद्ब्रह्मा जायते' इत्यादिभिः सृष्टिकाले सृज्यस्य प्रलये कर्माभावस्य च श्रूयमाणत्वात् अपरत्वमेवेति जीवाः । अयं च साध्ये ब्रह्मरुद्रयोर्जीवत्वे अशुद्धत्वं हेतुः । आदिशब्देन संगृहीता इन्द्रादयो दृष्टांततया स्वीकृताः । अशुद्धत्वञ्च कर्मवश्यत्वम् । सृष्टिप्रलयकर्माभावश्च जीवत्वेऽपि न स्वतन्त्र इत्याह । विष्णोर्विभूतय इति । तानित्थं भूतान् रुद्रादीन्कुदृष्टयः कुम-

त्यः साम्याद्विष्णोरित्येतदनुषज्यते । विष्णोस्तुल्यत्वेन ततोऽपि परत्वेनाप्युपासते । इदमुभयमपि कुदृष्टिमूलमित्यर्थः॥१८॥

अपरत्वेन चाप्येता ये यजन्ति हि देवताः ।
तेषां भवति नैकान्त्यमतो नैवाप्नुयुः परम् ॥ १९ ॥

एषा साम्येनाधिक्येन च देवतान्तरोपासने प्रतिषिद्धिः अपरत्वेन तदुपासनं प्राप्तं निषेधति–अपरत्वेनेति । चकारात्पूर्वोक्तसाम्येनाधिक्येन चोपासनं समुच्चीयते । एताः पूर्वोक्ता ब्रह्मरुद्राद्या देवता ये । अपरत्वेन चोपासते तेषामैकान्त्यं न भवति नास्ति । अत ऐकान्त्याभावात् परं निःश्रेयसं नाप्नुयुः ॥ १९ ॥

अङ्गभावेन शुद्धानामर्चा प्रियतमा हरेः ।
या स्वतन्त्रधिया तत्र सा निहन्ति विविक्तताम् ॥२०॥

शुद्धानामपरत्वेनार्चनं पारमैकान्त्यव्यापकमित्याह–अङ्गभावेनेति । शुद्धा नित्यमुक्ता अनन्तादयस्तेषामङ्गभावेन भगवच्छेषत्वेनार्चा हरेः प्रियतमा इष्टतमा तत्र शुद्धविषयेऽपि या स्वतन्त्रतयार्चा अङ्गभावमन्तरेण पूजा सा विविक्तता पारमैकान्त्यं निहन्ति नाशयतीत्यर्थः ॥ २० ॥

भावनानां तु कालुष्यादशुद्धिः कर्मणां भवेत् ।
तस्मात्तेषां विशुद्ध्यर्थं विष्णुमेव सदा भजेत् ॥ २१ ॥

नन्वेकस्यैव कर्मणः कथं पारमैकान्त्यानुकूलत्वतद्विरोधित्वे इत्याकांक्षायां बुद्धिभेदात्तदा तदुभयविरुद्धमित्याह–भावनानामिति । भावनानां कलुष्यात्कलुषितत्वात्तच्च नित्यनैमित्तिकेष्वन्तर्यामिपर्यङ्कभावभावत्वं शुद्धविषयकेषु अपि कर्मसु स्वतन्त्रत्वञ्च । यस्मात्कालुष्यात्कर्मणामशुद्धिर्भवेत् । अतस्तेषां कर्मणां विशुद्ध्यर्थं विष्णुमेव सदा भजेत् । नित्यनै-

मित्तिकेषु तत्तदन्तर्यामिणं विष्णुमेव सदा भजेत्। विशुद्धवि-
षयकमपि विष्णुशेषत्वानुसन्धानपूर्वकमेव कुर्यादित्यर्थः ॥२१॥

बाह्यः सदसतां नास्ति भेदः प्रायेण कर्मसु।
सङ्कल्पादेव भिन्नानि स हेतुर्बन्धमोक्षयोः ॥ २२ ॥

उक्तमर्थं स्फुटयति-बाह्य इति। सदसतामेकान्तिनां सतामसतामनेकान्तिनां च कर्मसु प्रायेण बाह्यो भेदो नास्ति क्वचिद्भेदे विद्यमानेऽपि न सर्वत्र बाह्यो भेद इत्यर्थः किन्तु सङ्कल्पादेव भिन्नानि सतां कर्माणि भगवत्पर्यन्तानि फलाभिसन्धिविधुराणि च। असतां तु असत्पर्यन्तानि कामनोपहतानि चेत्ययमान्तरभेद एव स एव सङ्कल्पः। बन्धमोक्षयोर्हेतुः। असत्सङ्कल्पो बन्धस्य सत्सङ्कल्पो मोक्षस्य हेतुरित्यर्थः ॥ २२ ॥

यजेच्छुद्धानशुद्धान्वा साम्यात्पारम्यतोऽपि वा।
लभते विविधान्कामान् विभोस्तस्यैव शासनात्॥२३॥

शुद्धानामशुद्धानां च साम्यात्पारम्यतो वा यजनन्तु तावन्निष्फलत्वान्निन्द्यते किन्तु परमपुरुषार्थलक्षण मोक्षपरिपन्थित्वादित्यभिप्रायवानाह यजेदिति। विभोः सकलकर्मफलप्रदस्य विष्णोरेव शासनाद्विविधान्कामान् लभते न मोक्षमिति भावः। तथा च गीतं भगवता 'स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान्मयैव विहितान्हितान्। अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इति ॥ २३ ॥

त्रिभिः प्रजापतेर्भक्तः सप्तभिः शङ्करस्य तु।
विंशत्याग्नीन्द्रसूर्यादेर्जन्मभिर्वैष्णवो भवेत् ॥ २४ ॥

अपरत्वेन ब्रह्मरुद्राद्युपासनन्तु परम्परयामोक्षाख्यपुरुषार्थसम्बन्धमित्याह–त्रिभिरिति। प्रजापतेश्चतुर्मुखस्य भक्तस्त्रिभिर्जन्मभिर्वैष्णवो भवेत् शंकरस्य सेवी सप्तभिर्जन्मभिर्वैष्णवो

भवेत् । अग्नीन्द्रसूर्यादेर्भक्तः विंशत्या विंशतिजन्माभिर्वैष्णवो भवेत् । अपरत्वेन चायं जन्मत्रयादिव्यवधानेन वैष्णवत्वलाभः । साम्येन पारम्पर्येण वा देवतान्तरोपासकस्य 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इति तेषामन्तवत्फलोक्त्या निरवधिकपुरुषार्थान्वयाभावादतत्त्वज्ञानमूलस्य तदुपासनस्य मोक्षफलकत्वकथनायोगात्साम्यादुपासनस्य फलं कथितम् । तदनन्तरमपरत्वेनोपासनफलकथनस्यातत्वात्तदुपासनस्यतत्त्वज्ञानमूलतया मोक्षसम्बन्धकथनाचिन्त्या 'तान्वै कुदृष्टयः साम्यात्परत्वादप्युपासत' इत्यनन्तरम् 'अपरत्वेन चाप्येता ये यजन्ति हि देवताः' इत्याद्युक्तेस्तत्कर्मणैव तदुभयफलकथने तत्कथनौचित्या 'यो महाविष्णुमन्येन हीनदेवेन दुर्मतिः ॥ साधारणं निरीक्षेत सोन्त्यजो नान्यथान्त्यज' इत्यादिप्रमाणमप्येतेन साम्योपासनस्यमोक्षपरिपन्थित्वोक्तेश्च तस्माद्यथोक्त एवार्थः ॥ २४ ॥

न सांख्येन न योगेन शैवेनापि न तत्पदम् ।
यदौपनिषदैः प्राप्यं पञ्चरात्रविशारदैः ॥ २५ ॥

रजस्तमोमूलतत्तत्स्मृतिविहितप्रकारेणोपासकस्य न मोक्षप्राप्तिरित्याह—न सांख्येनेति । सांख्यं कापिलस्मृतिः । योगः हैरण्यगर्भः । शैवं पाशुपततन्त्रम् । एतत्रितयमपि 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' अत एव योगः प्रत्युक्तः 'पत्युरसामञ्जस्यात्' इत्यादिभिर्भगवता बादरायणेन निरस्तत्वात् । औपनिषदैर्वेदान्तिभिः । पञ्चरात्रविशारदैः श्रीपञ्चरात्रनिष्ठैः । औपनिषदैरित्यनेन व्यामिश्रयाजिनः । पञ्चरात्रविशारदैरित्यनेन शुद्धयाजिनश्च विवक्षिताः इति वा साम्येन पारम्येण वा देवतान्तरोपासनस्य रजस्तमोमूलतन्त्रसिद्धत्वात्तदुपासकानां न साक्षान्नापि परम्परया मोक्षान्वय इत्यर्थः ॥ २५ ॥

एकैकं वापि नैकान्ती भजेन्नैकान्त्यलक्षणम् ।
कालेनैकान्त्यमाप्नोति नरो विगतकल्मषः॥ २६ ॥

भगवत्पारम्याभ्युपगमस्य परमैकान्तिलक्षणतया तन्मात्राभ्युपगमेन देवतान्तरोपासकत्वादनैकान्तिनामपि जन्मत्रयादिव्यवधानेन पारमैकान्त्यप्राप्तिरस्तीत्यभिप्रायवानाह—एकैकमिति । अनेकान्ती परमैकान्त्यरहितः नरः बहुष्वेकान्तिलक्षणेषु एकैकमेकान्तिलक्षणं वा भजन् तद्भजनजनितपुण्येन विगतकल्मषः विनष्टपारमैकान्त्यप्रतिबन्धकदुरितः कालेन जन्मत्रयादिव्यवधानकालेन ऐकान्त्यं पारमैकान्त्यमाप्नोति ॥ २६ ॥

नारायणैकनिष्ठा ये सात्त्विकास्तान्निबोधत ।
पुरुषा राजसा ज्ञेया नानादैवतयाजिनः ॥ २७ ॥

सत्त्वनिष्ठानामेव मोक्षो नान्येषामिति विवक्षुः क्रमेण सत्त्वरजस्तमोनिष्ठानाह—नारायणेति । एकनिष्ठा य इत्यनेनानन्ययाजित्वमुच्यते । स्पष्टमन्यत ॥ २७ ॥

बाह्या निर्दैवताश्चैव तामसाः परिकीर्त्तिताः ।
रजस्तमोऽभिभूतानां न तु मोक्षः कथंचन ॥ २८ ॥

बाह्येति । बाह्या वेदबाह्याः । निर्दैवताः निरीश्वराः । रजस्तमोऽभिभूतानां रजोऽभिभूता नानादैवतयाजिनः । तमोऽभिभूता नानादैवतयाजिन इत्यत्र भगवत्साम्येन पारम्येण वा दैवतयाजिनो गृह्यन्ते 'न तु मोक्षः कथञ्चन' इत्यनेन व्यवधानेनापि मोक्षप्रतिषेधात ॥ २८ ॥

मुनयः सत्त्वनिष्ठानां लक्षणानि निबोधत ।
विष्णोर्दास्यैकफलता तदेकोपायता स्थितिः ॥ २९ ॥

नारायणैकनिष्ठा इत्यनेन विवक्षितानि सत्त्वनिष्ठानां लक्षणानि निबोधत । विष्णोर्दास्यैकफलतां विविच्याह मुनय इति।

मुनय इति सम्बोधनम् । दास्यमेव एकं फलं येषां तेषां भावो दास्यैकफलता एव शब्दोऽवधारणार्थः । मुख्यार्थो वा तदेकोपायतास्थितिः अङ्गत्वेन प्रधानत्वेन वा भगवदेकोपायनिष्ठा । उभयेषामपि प्रवृत्तत्वात् ॥ २९ ॥

**तदाज्ञाकरणे प्रीतिस्तत्कर्मगुणकीर्त्तनम् ।**
**तच्चिह्नाङ्कितदेहत्वं तदीयाराधने रतिः ॥ ३० ॥**

तदेति । तदाज्ञाकरणे 'श्रुतिस्मृती ममैवाज्ञे' इत्यादिप्रमाणप्रसिद्धे नित्यनैमित्तिकात्मभगवद्दास्ये कैंकर्ये प्रीतिस्तत्कर्म गुणकीर्त्तनं दुष्टनिग्रहाशिष्टपरिपालनार्थानां भगवच्चेष्टितानां ज्ञानशक्त्यादीनाम् आश्रितवात्सल्यादीनां गुणानां च तत्कीर्तनम् । तच्चिह्नाङ्कितदेहत्वं चक्रादिभगवल्लाञ्छनलाञ्छितशरीरत्वम् । तदीयाराधने भागवताराधने रतिः प्रीतिः ॥ ३० ॥

**तदन्यस्पर्शवैराग्यमिन्द्रियार्थेष्वलोलता ।**
**आचार्य्याधीनवृत्तित्वमाचार्यार्थात्मवृत्तिता ॥ ३१ ॥**

तदन्येति । तदन्यस्पर्शवैराग्यं भगवद्व्यतिरिक्तोपायेपि सम्बन्धासहिष्णुत्वम् इन्द्रियार्थेषु विषयेष्वलोलता अनासक्तिः धर्मानुबन्धिभोगेष्वपि 'शरीरं प्राणवत्पश्येदन्नम्प्राणविलेपनम् । प्राणाभावेन च न तावानन्दस्तन्तु प्राणव'दित्यादिक्रमेण प्रावण्यविधुरत्वम् आचार्य्याधीनवृत्तित्वम् ॥ ३१ ॥

**क्रोधलोभमदालस्यमानमोहविहीनता ।**
**सत्यशौचदयाधैर्य्यक्षमासन्तोषयुक्तता ॥ ३२ ॥**

क्रोधेति । क्रोधः कोपः । लोभः उचितव्ययप्रतिबन्धकजनितस्तव्धभावापादकवित्तौन्नत्यविशेषः । आलस्यं कर्त्तव्येषु प्रवृत्त्यभावप्रयोजको मनोदौर्बल्यविशेषः । मानः उत्कृष्टजनावमानहेतुरहङ्कारपदवाच्यो गर्वः । मोहो यथावस्थितज्ञानाभावः ।

पुत्रदारादिष्वनिरुद्धा ममता बुद्धिर्वा तत्रापि । तच्छब्दप्रयोगात् । एतद्विहीनता अभावः । सत्यं यथार्थवचनम् । शौचं मृज्जलादिभिः शरीरशुद्धिरिति । इन्द्रियार्थेष्वलोलतेत्यादिना रागाद्यभावलक्षणाया आन्तरशुद्धेरुक्तत्वात् । दया दुःखप्रहारेच्छा । धैर्यं व्यसनैरभिभवे सत्यपि कर्त्तव्येष्वप्रमत्तत्वम् । अनवसन्नचित्तत्वमित्यर्थः । सन्तोषो यथालब्धेन प्रहर्षः । एतैर्युक्तता विशिष्टत्वम् ॥ ३२ ॥

इत्येतैर्लक्षणैर्युक्ता वैष्णवा वीतकल्मषाः ।
सभाज्या दर्शनेनैव नावज्ञेयाः कदाचन ॥ ३३ ॥

इत्येतैरिति । दर्शनेनैव दर्शनमात्रेणैव, सभाज्याः पूज्याः । यदा दृष्टाः तदानीमेव प्रणामादिना पूजनीया इत्यर्थः । कदाचिदपि नावज्ञेयाः नावमन्तव्याः । प्रत्युत्थानाभावलक्षणमवज्ञानं न कर्त्तव्यमित्यर्थः ॥ ३३ ॥

अज्ञैः कुदृष्टिभिर्बाह्यैर्नास्तिकैः संशयात्मभिः ।
न तु भागवतः किंचित्प्रच्युतैश्च समाचरेत् ॥ ३४ ॥

एवमेकान्तिनां भक्तप्रपन्नप्रभेदेन तत्रापि शुद्धमिश्रभेदेन च वैविध्यमुक्त्वा तेषामेव सत्त्वनिष्ठत्वकथनार्थं सत्त्वरजस्तमोनिष्ठानां वृत्तिमुक्त्वा सत्त्वनिष्ठानामेव मोक्षो नान्येषामित्यनन्तरमभिधाय सत्त्वनिष्ठानां लक्षणानि च निर्दिश्य तेषां दर्शनमात्रेणैव पूजनीयत्वं विधाय तदन्येषां संसर्गः सर्वप्रकारेणापि परित्याज्य इत्याह–अज्ञैरिति । अज्ञाः शास्त्रज्ञानशून्याः कुदृष्टयः वेदं प्रमाणतया परिगृह्याप्यन्यथाप्रतिपत्तिविपरीत प्रतिपत्तिभिर्विनष्टाः पापिष्ठाः । बाह्या वेदाविरुद्धैकपरस्परविरुद्धेषु तन्त्रेष्वन्यतरप्रामाण्यनिर्णयरहिताः प्रच्युतानां तन्त्रैक शरणाः नास्तिकाश्चार्वाकमतस्थाः संशयात्मनां स्वरूपं वक्ष्यति । एतैः सह किञ्चिदपि न समाचरेत ॥ ३४ ॥

तुल्याभिजनचारित्रा बान्धवास्तुल्यदृष्टयः ।
आपाद्य दृष्टयोऽपि स्युर्न कदापि कुदृष्टयः ॥ ३५ ॥

बान्धवमपि परमैकान्तिभिः सममेव सम्पादनीयम् । न पूर्वोक्तैरित्याह–तुल्येति । तुल्याभिजनचारित्रा बाह्यान्तरतुल्यकुल वृत्तयः । तुल्यदृष्टयः समानज्ञानाः । बान्धवाः स्युः । आपदि तुल्याभिजनचारित्रतुल्यदृष्टत्वभावा आपत् तस्यां दशायाम् । अदृष्टयः ज्ञानशून्या बान्धवाः स्युः कदाचिदपि आपदि कुदृष्टयः अन्यथा ज्ञानविपरीतज्ञानग्रस्ता बान्धवा न स्युः ॥ ३५ ॥

विवाहयज्ञाध्ययनस्पर्शसंवासभोजनम् ।
एकान्तिनान्तु कर्त्तव्यं तादृशैः सह बान्धवैः ॥ ३६ ॥

श्लोकद्वयेनोक्तमर्थं विशदयति–विवाहेत्यादि । विवाहः तत्कन्यकानां स्वीकारः स्वकन्यकानां तेभ्यः प्रदानञ्च । यज्ञः तेषु याजकेषु सत्सु स्वयं यजनम्; तेषु यष्टृषु स्वयं याजनं च । अध्ययनं तेषु अध्यापकेषु स्वय मध्ययनम् । तेष्वध्येतृषु स्वयमध्यापनञ्च । एवं सद्यस्तत्साम्यापादकं विवाहयाजनाऽध्यापनलक्षणं सम्बन्धत्रयमुक्तम् । अथोपवृत्त्या तत्साम्यापादकं सम्बन्धान्तर माह । स्पर्शसंवासभोजनमिति स्पर्शः प्रसिद्धः । संवासः एकशय्यायां सहवासः । भोजनं तदन्नभोजनम् । एकपंक्तौ भोजनञ्च 'एकशय्यासनं पंक्तिभाण्डपक्वान्नमिश्रणम् । याजनाध्यापने योनिस्तथैव सहभोजनम् ॥ नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः' सह इतिवचनाद्विवाहादिकं सर्वमेकान्तिनान्तादृशैरेकान्तिभिरेव सकलं कम कारयेत् ॥ ३६ ॥

सतामनवकाशत्वात्कालांशेषु न लौकिकम् ।
तस्मादलौकिकैरेव सकलं कर्म कारयेत् ॥ ३७ ॥

भगवदेकफलसाधनैरपि भगवच्छास्त्रसिद्धपश्चकालविभागेनाच्छिद्रभगवत्कर्मकारिभिरेव सममच्छिद्रपश्चकालः परमैकान्तिभिः सकलं याजनाध्ययनादिकं कर्म कारयेत्। न तु दक्षाद्युक्तप्रकारेणाष्टधा विभागेना 'ष्टमे लोकयात्रा चे'त्यादिप्रक्रियया लोकयात्रापरायणैरित्यभिप्रायवानाह–सतामिति। सतामनवकाशत्वात्पश्चस्वपि कालेष्वच्छिद्रभगवत्कैङ्कर्यैकरतितया कालांशेषु कालभागेषु अवकाशाभावाल्लौकिकं लोकयात्रारूपकर्म नास्ति अतः स्वयमलौकिकत्वादलौकिकैर्लोकयात्राविमुखैरेव सकलं कर्म कारयेत्। कालांशेष्वित्यस्य उपादानाद्द्व्यर्थकालेषु अप्रयोजनसिद्धद्रव्यादिकस्य पुरुषार्थः। अतिरिक्तांशेष्विति वार्थःअतिरिक्तांशेष्वपि हि स्वाध्यायादेव सुप्रवेशो भगवच्छास्त्रेषु कथितः।न तु लोकयात्रायाः।द्रव्ययोजनाभावात्॥३७॥

समित्पुष्पहविस्तोयपात्रोपनयनादिषु।
अवैष्णवान्विशेषेण न कर्मसु नियोजयेत्॥ ३८॥

चतुर्थाध्याये न चैषां कर्म कुर्वीत न स्वकर्म च कारयेदित्युक्तस्यार्थं विशयदयन्नाह समिदिति–विशेषेण समिधां पुष्पाणाश्च यज्ञियानाम्। आनयनादिषु कर्मस्ववैष्णवान्न नियोजयेत्॥ ३८॥

नोपभोक्तव्यमन्नाद्यमवैष्णवनिवेदितम्।
नावैष्णवाय दातव्यं स्वयं विष्णोर्निवेदितम्॥ ३९॥

नेति। अवैष्णवनिवेदितं वैष्णवैः स्वादितमपि अवैष्णवैर्भगवते निवेदितमन्नाद्यं न नियोक्तव्यम्। यद्वा भगवत्प्रसादबुद्ध्यापि अवैष्णवनिवेदितं न स्वीकार्यमित्यर्थः॥ ३९॥

ये त्ववैष्णवभर्तव्या ये चावैष्णभर्तृकाः।
ऐकान्त्यस्योपघातेन न तैः कर्माण्यनापदि॥ ४०॥

येत्विति । अवैष्णवा भर्त्तव्या पुत्रदारादिका येषां ते तथोक्ताः।ये वावैष्णवा भर्त्तारो भरणकर्त्तारो पित्रादयो येषां ते तथोक्ताः । ये चेति पुल्लिङ्गमविवक्षितं वा । तदा भर्तृशब्दः पतिवाची । भर्त्तव्यशब्दश्च भार्यावाची यस्या भर्त्ता न वैष्णवः यस्य भार्य्या न वैष्णवी उभयोरप्यैकान्त्योपघातेन उपहतैकान्त्यत्वाद्भार्याया भर्तुरर्द्धत्वेन श्रूयमाणतया भर्तुरपि तदर्द्धतया अर्द्धस्य अपारमैकान्त्योपहतत्वादनापदि । आपदि एवंविधपरमैकान्त्यलाभदशायां तु न दोष इति भावः ॥ ४० ॥

त्यक्ताचारस्त्यक्तदृष्टिस्त्यक्तार्थस्त्यक्तलक्षणः ।
त्यक्ताचार्यस्त्यक्तमन्त्रः प्रत्येकं प्रच्युतो नरः ॥ ४१ ॥

'न तु भागवतः किञ्चित्प्रच्युतैश्च समाचरे' दिति पूर्वमुक्तम् । इदानीं प्रच्युतानाह-त्यक्तेति । विहिताचारदृष्टिभक्तिलक्ष्मसत्सेवाख्येषु पञ्चसु वृत्त्यवयवेष्वेकैकविकलः प्रच्युत इत्याशयः । त्यक्ताचारः वृत्त्यवयवाविहिताचाररहितः । त्यक्तदृष्टिः दृष्ट्याख्यवृत्त्यवयवरहितः । त्यक्तार्थार्थः । इदमुपलक्षणम् । भक्तिलक्षणवृत्त्यवयवविकल इत्यर्थः । त्यक्तलक्षणः लक्ष्माख्यवृत्त्यवयवशून्यः । त्यक्ताचार्यः सत्सेवारूपवृत्त्यवयवविधुरः । त्यक्तमन्त्रः लक्ष्मान्तर्गतत्वेऽपि मन्त्रस्य पृथगुपादनं प्रधानत्वात् । प्रत्येक्तं प्रच्युतः त्यक्ताचारः । एवं त्यक्तदृष्टिः त्यक्ताचार्यश्च प्रत्येकं प्रच्युत इत्यर्थः ॥ ४१ ॥

पातकेन कुदृष्ट्यान्यभजनेनान्यलक्षणैः ।
अवैष्णवोपसत्त्यान्यमन्त्रेणापि च्यवन्ति वै ॥ ४२ ॥

एवं विहिताचारादिवृत्त्यवयवविरुद्धान्विता अपि प्रत्येकं प्रच्युता इत्याह-पातकेनेति । पातकं विहिताचारविरुद्धम् । कुदृष्टिर्दृष्टिविरुद्धा अन्यभजनं भक्तिविरुद्धम् ।

अन्यलक्षणानि लक्ष्मीविरुद्धानि । अवैष्णवापसक्तिः सत्सेवा विरुद्धा । अन्यमन्त्रेण इतरमन्त्रेण । अत्रापि त्यक्तमन्त्र इत्यत्रेव निर्वाहो द्रष्टव्यः । च्यवन्ति प्रत्येकं प्रच्युता भवन्ति प्रत्येकमिति योज्यम् । वृत्त्यवयवेष्वेकैकानन्वयिनां प्रत्येकं प्रच्युतत्वेतद्विरुद्धानां षण्णां प्रत्येकं प्रच्युतत्वस्य कैमुत्यन्यायेनसिद्धत्वात् ।४२।

यो दिव्यशास्त्रमन्त्रेषु कुरुते त्ववधीरणाम् ।
तथान्यशास्त्रमन्त्रेषु प्रसक्तिं न च वैष्णवः ॥ ४३ ॥

त्यक्ताचार इति श्लोके त्यक्तदृष्टिस्त्यक्तमन्त्र इति पदाभ्यां तदनन्तरं श्लोकेषु च कुदृष्ट्या अन्यमन्त्रेणेति पदाभ्यां च विवक्षितमर्थं पूर्वोत्तराभ्यां स्फुटयति—य इति दिव्यशास्त्रमन्त्रेषु दिव्यशास्त्रेषु दिव्यमन्त्रेषु चेत्यर्थः । अवधीरणामवज्ञां यः कुरुते तथा अन्यशास्त्रेषु अन्यमन्त्रेषु च यः प्रसक्तिम् अत्यादरेण संगं करोति स दिव्यशास्त्रमन्त्रप्रसक्तश्च न वैष्णवः दिव्यशास्त्रमन्त्रेष्वपि दृढविश्वासे पर्याकलनासक्ततया वा देशकालादिवैगुण्येन वा देशे काले येन दिव्यशास्त्रविलोकनं दिव्यमन्त्रजपो वा न कृतः येन निरासार्थं हेयत्वेन ज्ञानार्थं वा अन्यशास्त्रमन्त्रावलोकनं कृतं न तयोरभागवतत्वमिति भावः । यद्वा त्यक्ताचार इत्यादि श्लोके वृत्त्यवयवविकल्पः । प्रच्युत इत्युक्ताः । अनन्तरश्लोक तद्विरुद्धसेविनस्ततोऽपि निकृष्टा उक्ताः । अनेन श्लोकेन वृत्त्यवयवबाधितकरणपूर्वकं तद्विरुद्धसेविनस्ततोऽपि निकृष्टा उक्ता इति ध्येयम् ॥ ४३ ॥

सर्वैश्च लक्षणैर्युक्तो नियतश्च स्वकर्मसु ।
यस्तु भागवतान्द्वेष्टि सुदूरं प्रच्युतो हि सः ॥ ४४ ॥

अथैकैकवृत्त्यवयवविकलतद्विरुद्धसेवा तदवधीरणापूर्वकतद्विरुद्धसेविभ्योऽपि निकृष्टं प्रच्युतमाह—सर्वैरिति । सर्वैश्च लक्ष-



णैस्तापपुण्ड्रादिलक्षणैर्युक्तः। स्वकर्मसु विहिताचारे नियतो यस्तु भागवतान् परमैकान्तिनः साम्यतो वैष्णवान्वा द्वेष्टि स सुदूरं प्रच्युतः त्यक्ताचारादिभ्यः पातकाद्यन्त्रयिभ्यः दिव्यशास्त्राव-मन्तृभ्योऽपि अत्यन्तं प्रच्युत इत्यर्थः। हि शब्दः 'नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात् । नाग्न्यर्कसोमा-निलवित्तपास्त्राच्छङ्के भृशं ब्रह्मविदोऽवमानात्'। 'पद्मकोटिशते-नापि न क्षमामि वसुन्धरे' इत्यादिप्रसिद्धिं द्योतयति ॥४४॥

अपि चेत्सेवनपरो न चेत्तापादिसंस्कृतः ।
अनर्चार्हतया विष्णोर्दास्यात्प्रच्यवते ध्रुवम् ॥ ४५ ॥

त्यक्तलक्षण इति पूर्वोक्तं लक्षणत्यागं स्पष्टयति-अपि चेति-अपीति सत्सेवनपरोऽपि भागवतसेवारतोऽपि तापादिसं-स्कृतो न चेत् तापपुण्ड्रानामादिसंस्काररहितो यदि स्यात्तथा विष्णोरर्चानर्हतया विष्ण्वर्चायामनर्हतया दास्यात्प्रच्यवते प्रच्युतो भवति ध्रुवं नात्र कार्य्या विचारणेत्यर्थः ॥ ४५ ॥

यस्तु प्राप्य गुरोर्विद्यां नार्चयेत्पुरुषोत्तमम् ।
प्रणमेदन्यदेवाय न स भागवतः स्मृतः ॥ ४६ ॥

त्यक्तार्च इत्युक्तं विशदयति यस्त्विति-गुरोराचार्याद्विद्यां मन्त्रं प्राप्य लब्ध्वा पुरुषोत्तमं भगवन्तं नार्चयेदन्यदेवान्वा प्रणमेद्देवतान्तरनमस्कारं वा कुर्यात् स भगवदनर्चकः देवता-न्तरप्रणामो वात्र न भागवत इत्यर्थः। देवतान्तरप्रणामी तृतीये त्यक्तार्चपदेन संगृहीत इति भावः। भागवतो न स्मृतः ॥४६॥

ये नात्मानमनात्मानं विद्याविद्ये फलाफले ।
उपास्यमनुपास्यञ्च वेत्ति भागवतो न सः ॥ ४७ ॥

त्यक्तदृष्टिस्वरूपमाह-येनेति। आत्मानं ज्ञानाधिकरणमात्म-स्वरूपम् । अनात्मानं ज्ञानानधिकरणं प्रकृतिस्वरूपम् ।

विद्याविद्ये विद्याशब्दो मोक्षोपायज्ञानपरः । अविद्याशब्दस्तद्विरोधिपरः । मोक्षोपायस्वरूपं तद्विरोधिस्वरूपञ्चेत्यर्थः । फलाफले मोक्षाख्यफलस्वरूपं तद्विरोधिस्वरूपं चेत्यर्थः । उपास्यमीश्वरस्वरूपमनुपास्यं तदितराँश्च यो न वेत्ति स भागवतो न स्मृतः । अर्थपञ्चकज्ञानरहितो भागवतो न भागवत इत्यर्थः ॥ ४७ ॥

देवतानाञ्च याथात्म्यं कैङ्कर्य्यस्य हरेरपि ।
अविदित्वाचरन् कर्म विहीनां गतिमश्नुते ॥ ४८ ॥

त्यक्ताचार इति पदेनाभिप्रेतमाह–देवतानामिति । देवतानामित्यादिश्लोकद्वयेन देवतानां तत्कर्मसु चोदितानाम् । अग्नीन्द्रादीनां याथात्म्यं भगवद्देहभावं हरेः कैङ्कर्यञ्च अविदित्वा अज्ञात्वा कर्मवर्णाश्रमनियतम् । आचरन् कुर्वन् विहीनां निकृष्टां गतिमश्नुते अनुभवति । क्रियमाणेषु वर्णाश्रमनियतेषु कर्मसु तत्तद्देवतान्तर्याम्याराधनत्वं भगवदाज्ञाकैङ्कर्यत्वं च ज्ञात्वा तत्तकर्म कुर्वाणोऽपि त्यक्ताचारपदेन संगृहीतः । प्रच्युत इत्यर्थः । अविदित्वा त्यजन्कर्मेत्यपरः पाठः । तत्र देवतानां कंचुकत्वं हरेराराध्यत्वं कर्मणां कैङ्कर्य्यत्वमविदित्वा देवतान्तरविषयत्वबुद्ध्या साधनत्वबुद्ध्या च कर्म त्यजन् विहीनां गतिमश्नुत इत्यर्थः ॥ ४८ ॥

देवर्षिभूतात्मतया त्यजन्केवलमेव वा ।
विष्णुं तत्तत्फलाकांक्षी पारमैकान्त्यतश्च्यवेत् ॥ ४९ ॥

देवर्षीति । देवतानामृषीणां भूतानात्मतया केवलं देवर्षिभूतव्यवधानं विना वा तत्तत्कर्मफलाकांक्षी आपाततस्तत्तत्कर्मसाध्यतयावगतफलाकांक्षी सन् विष्णुं यजन् पारमैकान्त्यतश्च्यवेत् च्युतो भवेत् । वर्णाश्रमनियताचारेषु देवाद्यन्तर्यामितया





भगवन्तमाराधयन्नपि स्वधर्मेषु साक्षादेव यजन्नपि फलाकांक्षी चेत् च्युतोभवेत् पारमैकान्त्याच्च्युतोभवेदित्यर्थः ॥ ४९ ॥

तेषां न परिशुद्धानि योनिर्विद्याञ्च कर्म च ।
ये विष्णुचरणैकान्त्यविहीना ब्राह्मणादयः ॥ ५० ॥

तेषामिति । विष्णुचरणैकान्त्यविहीनाः भगवत्पदारविन्द-पारमैकान्त्यविधुराः ये ब्राह्मणादयः । आदिशब्देन वर्णान्तर-संग्रहः । तेषां योनिर्विद्या च कर्मचेत्येतानि न परिशुद्धानि । तैः सह योनिसम्बन्धो विद्यासम्बन्धो याजनादि लक्षणकर्म-सम्बन्धश्च न कर्त्तव्य इति भावः ॥ ५० ॥

मरणं जन्मने जन्म मरणायैव केवलम् ।
तेषां भगवदैकान्त्यविमुखा ये नराधमाः ॥ ५१ ॥

पारमैकान्त्यरहितानां जन्म विफलमिति तान्निन्दति-मरण मिति । ये भगवदैकान्त्यविमुखाः नराधमाः, तेषां जन्म मरणायैव केवलं मरणातिरिक्तफलकं न भवतीत्यर्थः । मरणमपि जन्मने केवलं न तु मुमुक्षोर्मरणमिव मोक्षफलकमितिभावः ५१

न विद्या केवलार्थाय नाचारो नार्चनं हरेः ।
न चक्राद्यङ्कदेहत्वं विना भागवतार्चनम् ॥ ५२ ॥

वृत्त्युदयस्य एकैकमित्यनेन आवश्यकत्वम् । अवरोहक्रमेण प्रपञ्चयन् प्रथमं सत्सेवां प्रपञ्चयति-न विद्येति । केवल भागवतार्चनं विना भागवताराधनेन विना कृता विद्या दृष्टिः अर्थाय प्रयोजनाय । आचारो विहिताचारः । अत्रापि केवल इति लिङ्गव्यत्ययेन सम्बन्धः । एवमुत्तरत्रापि सम्बन्धो-द्रष्टव्यः । सोऽपि नार्थाय केवलं चक्राद्यङ्कदेहत्वमपि नार्थाय । केवलशब्दः विना भागवतार्चनमित्येतदनुवादकरूपो वा मन्तव्यः ॥ ५२ ॥

न प्रपत्तेः परा विद्या न विष्णोर्दैवतम्परम् ।

न तद्दास्यात्परा सिद्धिर्न गुरुर्वैष्णवात्परः ॥ ५३ ॥

न प्रपत्तेरिति। प्रपत्तेः परा अधिका विद्या न। "सत्कर्मनिरताः शुद्धाः सांख्ययोगविदस्तथा। नार्हन्ति शरणस्थस्य कलांकोटितमामपि" इत्यादिकमत्रानुसन्धेयम्। वेदान्ताचार्य्याश्चाहुः 'तन्निष्ठोऽप्यन्यनिष्ठान्प्रभुरतिशयितुंकोटिकोटयंशतोऽपि' इति। विष्णोः परमधिकं दैवतं नास्ति। सर्वानन्दातिशाय्यवाङ्मनसगोचरं ब्रह्मानन्दानुभवजनितप्रीतिकारिततत्कैङ्कर्य्यादधिका सिद्धिर्नास्तीत्यर्थः। एतत्त्रयं दृष्टान्तार्थम्। वैष्णवात्परमैकान्तिनः परः अधिको गुरुर्नास्ति पूजनीय इति। "आराधनानां सर्वेषां विष्णोराराधनं परम्। तस्मात्परतरं प्रोक्तं तदीयाराधनं नृप। मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्। तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः" इत्यादिकमत्रानुसन्धेयम् ॥ ५३ ॥

नित्यमच्युतभक्तानां कुर्यात्पादावनेजनम् ।

नम्रः समुपभुञ्जीत सर्वपातकनाशनम् ॥ ५४ ॥

नित्यमिति। अच्युतभक्तानां नित्यं पादावनेजनं पादप्रक्षालनं कुर्यात। तत्तीर्थं पादतीर्थम् उपयुञ्जीत सेवेत पिबेत॥५४॥

वैष्णवस्यांकशय्यायां वैष्णवस्य गृहेऽपि वा ।

देशे वा तद्विचरिते संस्थिता यान्ति सद्गतिम् ॥ ५५ ॥

वैष्णवस्येति। वैष्णवस्याङ्क एव शय्या तस्यां वैष्णवस्य गृहे भवनेऽपि वा तद्विचरिते वैष्णवसञ्चारवति विविक्ते देशे वा संस्थिताः मृताः। सम्पूर्वतिष्ठतेर्मरणवाचित्वात्तदुक्तं श्रीवत्साङ्कमिश्रैः 'पुत्रादयः कथममी मयि संस्थिते स्युरित्यप्रतिक्रियनिरर्थकचिन्तनेन। दूये न तु स्वयमहं भविताऽस्मि कीदृगित्थं न हस्तिगिरिनाथविमर्शितैति' इति सद्गतिं यान्ति ॥ ५५ ॥



यत्र क्वाप्यथ वा देशे वैष्णवो म्रियते यदा ।
तदा तत्राशु सान्निध्यं करोति गरुडध्वजः ॥ ५६ ॥

यत्रेति । यत्र क्वापि देशेऽपि "रथ्यान्तरे मूत्रपुरीषमध्ये चण्डाल-वेश्मन्यथ वा श्मशाने । कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभते च मुक्तिम्" इत्यादिकमत्रानुसन्धेयम् । गरुडध्वज इत्यस्य गरुडस्कन्धमारोप्य दिव्यं धाम नेतुं तेन सह गच्छतीति भावः ।

न जन्मनो नाध्ययनान्न यज्ञान्न तपःश्रमात् ।
न त्यागादश्नुते ब्रह्म गुरूपसदनं विना ॥ ५७ ॥

मत्सेवायामपि गुरुवश्यता प्रधानेत्यभिप्रायेणाह—न जन्मन इति । गुरूपसदनं विना आचार्यसमाश्रयणं विना जन्मनः ब्राह्मणाद्युत्तमवर्णाज्जननादपि ब्रह्मभगवद्वासुदेवनारायणशब्द-वाच्यं परं ब्रह्म नाश्नुते न प्राप्नोति । अध्ययनाद्वेदाध्ययनादपि ना-श्नुते । यज्ञाद्यज्ञाद्यनुष्ठानादपि नाश्नुते । तपःश्रमाच्चान्द्रायणादि तपोऽनशनक्लेशादपि नाश्नुते । त्यागात् विषयत्यागात् । अध्य-यनयज्ञतपस्त्यागशब्दैस्तत्प्रधानमाश्रमचतुष्टयमुच्यते ॥ ५७ ॥

देहकृन्मन्त्रविन्न स्यान्मंत्री संस्कारकृत्परः ।
तौ च नात्मविदौ स्यातामन्यस्त्वात्मविदात्मकृत् ॥ ५८ ॥

आचार्यतया को वा करणीय इत्यपेक्षायामाह—देहकृदिति । देहकृत् पिता मन्त्रविन्न स्याच्चेत्परः अन्यः मन्त्री मन्त्रवित्संस्का-रकृदुपनयनादिसंस्कारकृत् उपनयनादिसंस्कारकर्त्ता तौ देह-कृत्संस्कारकृतौ च आत्मविदौ आत्मज्ञौ न स्यातां चेदन्यः ताभ्यामन्यः आत्मविदात्मज्ञः आत्मकृद्ब्रह्मविद्योपदेष्टा आ-चार्यः पिता चेन्मन्त्रज्ञः स्यात्स एव संस्कारकृद्भवितुमर्हति । स एव आत्मविच्चेदात्मकृद्भवति सोऽप्यात्मविन्न स्याच्चे-दन्य एवात्मज्ञः आत्मकृदित्यर्थः । देहकृदित्यनेन 'शरीरमेव

मातापितरौ जनयतः' इत्ययमंशः स्मारितः। आत्मकृदित्यनेन 'सहि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्मे'त्येतत्स्मारितम्॥५८॥

न चक्राद्यंकनं नेज्या न ज्ञानं न विरागता।
न मन्त्रः पारमैकान्त्यं तैर्युक्ता गुरुवश्यता ॥ ५९॥

न चक्रेति। चक्राद्यङ्कनन्न केवलं तप्तचक्रादिधारणमपि पारमैकान्त्यम् न इज्या। इदश्च भक्त्युपलक्षणम्। केवलेज्यापि पारमैकान्त्यं न ज्ञानं दृष्टिरपि पारमैकान्त्यं न विरागता वैराग्यमपि पारमैकान्त्यं न वृत्त्यवयवविरोधिवर्ज्जनं वैराग्यम्। 'निन्द्यवर्जन'मित्यत्रैवान्यत्रोक्तेः। मन्त्रः केवलमन्त्रोऽपि पारमैकान्त्यं न किन्तु तैश्चक्राद्यङ्कनादिभिर्युक्ता गुरुवश्यता आचार्याधीनता पारमैकान्त्यमित्यर्थः ॥ ५९ ॥

विद्या विभूषणं पुंसस्तस्या वृत्तं विभूषणम्।
विष्णुभक्तिर्विभूषास्य सा चक्राद्यंकभूषणा॥ ६० ॥

एवं सत्सेवां प्रपंच्य इदानीं लक्ष्म प्रपश्चयन् विहिताचारादेर्भूष्यभूषणभावमाह–विद्येति। पुंसः विद्यादृष्टिर्विभूषणम्। तस्या वृत्तं विहिताचारो विभूषणम् अस्य वृत्तस्य विष्णुभक्तिर्विभूषा सा विष्णुभक्तिश्चक्राद्यङ्कभूषणा विष्णुभक्तेर्लक्ष्मभूषणमित्यर्थः। आत्मनः हेयोपादेयविवेककारणं शास्त्रजन्यज्ञानं भूषणवदतिशयावहन्तस्य च ज्ञानस्य यथाज्ञानमाचारोभूषणवत् 'शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम्। नाच्छादयति कौपीनं न दंशमशकापह' मित्यादिवदुपहास्यत्वप्रसङ्गात् वृत्तमतिशयावहम् 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति समचारस्य भक्तिफलकतया फलभूता भक्तिः वृत्तस्यातिशयावहा। तस्यापि भक्तेर्लक्षणतया चक्राद्यङ्कनं भूषणमित्यर्थः॥ ६०॥

ध्यानेन मन्त्रयोगेन पूजनेनांकनेन च।
तोषयन्ति जगन्नाथं वासुदेवं युगक्रमात् ॥ ६१ ॥

कलियुगस्य पापभूयिष्ठतया विशेषतोऽन्तिमयुगे सकलपापनिवर्त्तकं चक्राद्यङ्कनमावश्यकमित्यभिप्रायवानाह-ध्यानेनेति। मन्त्रयोगो मन्त्रजपो जपानुष्ठानम्। कृतयुगे ध्यानेन त्रेतायां मन्त्रयोगेन द्वापरे पूजनेन कलौ चक्राद्यंकनेन जगन्नाथं वासुदेवं तोषयन्ति ॥ ६१ ॥

अष्टमात्षोडशाब्दाद्वा धार्य्यं चक्रादिभूषणम्।
प्रतप्तैरंकनं पश्चात् सदा वा भूषणं स्त्रियाः ॥ ६२ ॥

स्फुटतया यस्मिन्काले निष्कर्तुं शक्यते तावत्पर्यन्तभूषणतया पञ्चायुधधारणं कर्त्तव्यम्। ततः प्रतप्तैश्चक्रादिभिरंकनं कार्यमित्यभिप्रायेणाह-अष्टमादिति। अष्टमाब्दादारभ्य इदं चोपनयनोपलक्षणार्थम् अष्टमाब्दस्य ब्राह्मणोपनयनकालत्वात्। अथवा आषोडशाब्दात् अष्टमादूर्ध्वम् आषोडशब्दाद् ब्राह्मणस्य गौणोपनयनकालत्वात्। केषुचिद्वचनेषु उपयनकाले चक्राद्यंकनस्य विधानात् उपनयनस्य षोडशाब्दपर्य्यन्तं सम्भावितत्वात्तावत्पर्य्यन्तं चक्रादिभूषणं धार्यम्। पश्चात्प्रतप्तैश्चक्रादिभिरङ्कनम्। स्त्रिया भीरुतया कस्याश्चिदङ्कनाशक्तायाः सदा भूषणमेव वाञ्छन्तीत्यर्थः। वा इत्यनेन अमुख्यत्वम्। अन्यमतत्वं च ज्ञाप्यते ॥ ६२ ॥

शिष्यपुत्रकलत्राणां भृत्यानाञ्च गवामपि।
कुर्यादचेतनानाञ्च वैष्णवं नाम लक्ष्म च ॥ ६३ ॥

लक्ष्मधारणवत् वैष्णवनामधारणमपि पुत्रादीनां कार्यमित्याह-शिष्येति। भृत्यः भृतिमूलदास्यसम्बन्धवान् गर्भाधानादिमान् अचेतनानां गृहोपकरणानां वैष्णवं विष्णुसम्बन्धि लक्ष्म चक्राद्यङ्कनम् ॥ ६३ ॥

आमा ह्यतप्ततनवस्तप्ताङ्का हरिलाञ्छनैः।
सुशृता भोग्यतां प्राप्य भुज्यन्ते परमात्मना ॥ ६४ ॥

'अतप्ततनूर्नतदामोअश्नुते, इति श्रुतिमुपबृंहयति—आमा हीति। अतप्ततनवः तप्तचक्रानङ्कितदेहाः आमाः अपक्काः अदग्धपापा इति यावत्। हरिलाञ्छनैश्चक्रादिभिस्तप्ताङ्काः सुशृताः परिपक्काः। दग्धपापा इति यावत्। श्रा पाक इति धातुः। भोग्यतां भोगयोग्यतां प्राप्य आमस्य अपक्कस्य भोगायोग्यत्वादिति भावः। परमात्मना नारायणेन भुज्यन्ते 'अहमन्नमन्नमदन्तमद्मी, तिवत्। भोगयोग्यो भूत्वा भुज्यत इत्यर्थः ॥ ६४ ॥

ऊर्द्ध्वपुण्ड्रान्तरालस्थांश्चक्रादीन्धारयेत्सदा।
बहिष्कृता ह्यतिक्रुद्धाः पदात्प्रच्यावयन्ति ते ॥ ६५ ॥

ऊर्द्ध्वपुण्ड्रेति। चक्रादीन्हेतीन्सदा ऊर्द्ध्वपुंड्राणामन्तरालस्थान्धारयेत्। बहिष्कृताः उर्द्ध्वपुण्ड्रान्तरालस्थतया अधृताश्चेत्पदात्प्रच्यावयन्ति। चक्रादिभिरङ्कनं बाहुवक्षोललाटमस्तके धार्य्योर्द्ध्वपुण्ड्रान्तरालस्थलेष्वेव कर्त्तव्यमित्यर्थः ॥ ६५ ॥

प्रातर्मध्यंदिने सायमूर्द्ध्वपुण्ड्रेण केशवः।
अकृतैर्वापि सुकृतैस्तैस्तैः प्रीणाति कर्मभिः ॥ ६६ ॥

प्रातरिति। अकृतैः सुकृतैः सम्यगनुष्ठितैर्वातैस्तैस्तत्कालचोदितैः कर्मभिः केशवः प्रीणाति। कालत्रयोर्द्ध्वपुण्ड्रधारणं तत्तत्कालविहितकर्मणां न्यूनातिरिक्तदोषशामकतया भगवत्प्रीणनमिति भावः ॥ ६६ ॥

प्रभाते दिव्यलोकस्थं मध्याह्ने चार्कमध्यगम्।
तोषयन्त्यूर्द्ध्वपुण्ड्रेण सायं स्वात्मगतं हरिम् ॥ ६७ ॥

प्रभात इति। दिव्यलोकस्थं परमपदवासिनं मध्याह्ने अर्कमध्यगम्। आदित्यमण्डलान्तर्वर्तिनं सायङ्काले ॥ ६७ ॥

सन्तः सतोऽनुगृह्णन्ति दर्शनादेव लक्ष्मभिः ।
त्यजन्त्यन्ये तदुभयं मुख्यमैकान्त्यकारणम् ॥ ६८ ॥

लक्ष्मधारणस्य फलान्तरमाह–सन्तइति । सन्तः शेषत्वज्ञानलब्धसत्ताका लक्ष्मभिः चक्राद्यूर्द्धपुण्ड्रान्तैः चिह्नैर्दर्शनादेव दर्शनमात्रेण सतः सत्पुरुषाननुगृह्णन्ति सतो मत्वा परिगृह्णन्तीत्यर्थः । अन्ये असन्तः अवैष्णवा वैष्णवचिह्नं दृष्ट्वा वैष्णवा इमे इति त्यजन्ति । तदुभयं सत्परिग्रहासत्परिग्रहात्मकद्वयमपि मुख्यं प्रधानम् ऐकान्तस्य परमैकान्तित्वस्य कारणमतो लक्ष्मधारणमावश्यकमित्यर्थः ॥ ६८ ॥

क्रमातभगवन्मन्त्रः कल्पविच्छुद्धमानसः ।
धृतोर्द्धपुण्ड्रश्चक्रादिलाञ्छितो हरिमर्चयेत् ॥ ६९ ॥

अथ भक्तिं प्रपञ्चयन् लक्ष्माङ्गत्वाद्भक्तेर्लक्ष्मप्रपञ्चनानन्तरं भक्तिप्रपञ्चनमुचितमिति सङ्गतिमभिप्रदर्शयन्नाह–क्रमातेति क्रमातभगवन्मन्त्रः सम्प्रदायक्रमलब्धभगवन्मन्त्रः । कल्पविन्मन्त्रकल्पज्ञः भगवत्समाराधनकल्पज्ञो वा ॥ ६९ ॥

यथापूर्वाकृतीन्नित्यान्मुक्तांश्चैव यथागमम् ।
यथावतारदेहं च पूजयेद्धरिमिच्छया ॥ ७० ॥

अर्चयेदित्यर्चनं प्रस्तुतम् । तच्च सपरिवारकं भगवद्विषयकं परिवाराश्च नित्यमुक्ताः । किमाकृतींस्तानर्चयेत् । कीदृशाकृतिं हरिं वा पूजयेदित्यपेक्षायामाह–यथेति । मुक्तान्यथापूर्वाकृतीन् तादृशाकृतिमतः पूजयेदित्यर्थः । इच्छया बहुष्ववतारेषु स्वेच्छाविषयं पूजयेदित्यर्थः ॥ ७० ॥

अवैष्णवाद्वैष्णवाद्वा चेतनं वाप्यचेतनम् ।
यदवाप्तं समस्तं तद्विष्णवे विनिवेदयेत् ॥ ७१ ॥

त्मकं भगवते निवेदनीयमित्याह–अवैष्णवादिति। अवैष्णवोऽप्यत्र शाण्डिल्यादिप्रतिषिद्धकुलटापाखण्डपतितादिव्यतिरिक्तः अनुकूलो ज्ञेयः । वैष्णवात्तस्मादलाभे अवैष्णवाद्वा प्राप्तं चेतनाचेतनात्मकं सर्वं विष्णवे विनिवेदयेदित्यर्थः ॥ ७१ ॥

वासः स्रग्गन्धभूषादि भक्ष्यभोज्यादिकं तथा ।
न किञ्चिदुपभोक्तव्यमनिवेद्य श्रियःपतेः ॥ ७२ ॥

भगवदर्थमुपादत्तस्य भगवते निवेदनात्पूर्वमुपयोगो न कर्त्तव्य इत्याह–वास इति। वासो वस्त्रम् स्रक् माला गन्धः मलयजादिः। भूषा भूषणम् आदिशब्दादायुधादिसंग्रहः भक्ष्यं शष्कुल्यादि भोज्यमन्नादि आदिशब्दाच्चोष्यादिग्रहणम् ॥ ७२ ॥

वेदवेदाङ्गतत्त्वज्ञो वेदान्तपरिनिष्ठितः ।
मीमांसान्यायनिपुणो धर्मशास्त्रविशारदः ॥ ७३ ॥

अथ दृष्टिं प्रपञ्चयन् 'यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवती' ति न्यायेन ज्ञानपूर्वकमेव पारमैकान्त्यनियतं धर्मानुष्ठानं कर्त्तव्यमित्याह–वेदेति । वेदाः ऋग्यजुःसामाथर्वाख्याः वेदाङ्गानि शिक्षाकल्पव्याकरणनिरुक्तज्योतिश्छन्दांसि वेदान्तपरिनिष्ठितः मीमांसान्यायनिपुणः वेदपूर्वोत्तरभागार्थनिर्णायकमीमांसाद्वयनिपुणः । धर्मशास्त्रविशारदः पूर्वभागोपबृंहणमन्वादिधर्मशास्त्रपरिशीलनपरः। अस्य श्लोकस्य उत्तरश्लोकेनान्वयः ॥ ७३ ॥

इतिहासपुराणज्ञः पंचरात्रार्थतत्त्ववित् ।
परं भगवदैकान्त्यं ज्ञात्वा धर्मं समाचरेत् ॥ ७४ ॥

इतिहासेति । इतिहासपुराणज्ञः उत्तरभागोपबृंहणभारतरामायणवैष्णवपुराणभागवतादिषु गृहीततात्पर्यः। पंचरात्रार्थ-



तत्ववित् परमैकान्तिधर्मानुष्ठानपरस्य परमकारुणिकेन भगवता वेदवेदान्तार्थनिर्णयाय प्रवर्तितस्य पंचरात्राख्यस्य दिव्यशास्त्रस्य तत्त्वज्ञः परं 'सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः' इत्यादिभिः ॥ ७४ ॥

सर्वसंस्कारसंस्कारो ज्ञानं भागवतं परम् ।
तत्संस्कृता हि संस्काराः कल्पन्ते मुक्तिहेतवः ॥ ७५ ॥

सर्वेति । भागवतं भगवद्विषयकं ज्ञानम् इदं चार्थपंचकज्ञानस्याप्युपलक्षणार्थम्। यद्वा, सप्रकारकभगवज्ज्ञाने अर्थपंचकज्ञान स्यापि सिद्धत्वात्तथोक्तिः । सर्वेषामपि संस्काराणां वर्णाश्रमनियतानां चत्वारिंशत्संस्काराणां वैष्णवत्वनियतानां चक्राद्यंकनादीनां च संस्कारः अतिशयापादकः । हि यस्मात्कारणात् संस्कारास्तत्संस्कृताः ज्ञानसंस्कृताः मुक्तिहेतवः कल्पन्ते अतो भागवतज्ञानं सर्वसंस्कार इत्यर्थः ॥ ७५ ॥

परमात्मा हरिः स्वामी स्वतोऽहं तस्य किङ्करः ।
कैङ्कर्य्यमखिला वृत्तिरित्येष ज्ञानसंग्रहः ॥ ७६ ॥

किं तद्भागवतं ज्ञानं यत्पुनः सर्वसंस्काररूपमुच्यत इत्यपेक्षायां संग्रहेणाह—परमात्मेति । परमात्माआत्मनामन्तरात्मा। 'हरिर्ब्रह्माणमीशमिन्द्रश्च यमं वरुणमेव च।प्रसह्य हरते यस्मात्तस्माद्धरिरिहोच्यते' इति प्रमाणनिरूपणनिरुक्तहरिनामा स्वामी मध्यस्थः स्वतःशब्दः काकाक्षिन्यायादत्राप्यन्वेति। निरुपाधिकशेषीत्यर्थः । अहम् अहंबुद्धिवेद्यः प्रत्यगर्थः । स्वतः किङ्करः निरुपाधिकशेषभूतः।'दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनः। नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च'इत्यादिकमनुसन्धेयम्। अखिला वृत्तिः सर्वोऽपि व्यापारः लौकिकरूपः कैङ्कर्य्यलीलारसग्रहनिवर्त्तकतया कैङ्कर्य्यरूपमिति । इत्येष ज्ञा-

नसंग्रहः । अवश्यापेक्षितं संग्रहरूपं ज्ञानमित्यर्थः । यद्वा इति-शब्दः पूर्वोक्तप्रतिपादितपरः।'परमात्मा हरिः स्वामी स्वतोऽहं तस्य किङ्करः । कैङ्कर्यमखिला वृत्ति' रित्येषश्लोकांशो ज्ञानस्य संग्रहः संगृह्यत इति संग्रहः संग्राहक इत्यर्थः ॥ ७६ ॥

नित्यमर्चाजपध्यानस्नानदानव्रतादिकम् ।
विशुद्धमेव कर्त्तव्यमनन्यैर्न विमिश्रितम् ॥ ७७ ॥

अथ विहिताचारम्प्रपंचयन् नित्यनैमित्तिककाम्यरूपेण त्रिविधस्यापि तस्य शुद्धमिश्रभेदेन भिन्नत्वात्काम्येषु विमिश्रा नन्वयेऽपि नित्यनैमित्तिकयोस्तदन्वयाभ्यनुज्ञानात् नित्यनैमित्तिकयोरविशेषेण सर्वशोऽपि विमिश्रस्य प्राप्त्या तयोरपि कानिचित्कर्माणि शुद्धान्येव कुर्यात् इत्याह–नित्यमित्यादिना । अर्चा देवपूजा । जपः निष्ठामन्त्रजपः ध्यानं स्मृतिसंततिः व्रतम् एकादश्युपवासादिकम् अर्चादिकन्नित्यन्ताद्विशुद्धमेव कर्त्तव्यम् । देवतान्तरसम्बन्धसहितमर्चनादिकम् तन्न कर्त्तव्यमित्यर्थः । ऐच्छामिच्छाजपध्यानेत्यपरः पाठः । तथाविधम् इच्छायां सत्यां कर्तव्यमनुज्ञाकैंकर्यमित्यर्थः । ऐच्छमिति पाठान्नित्यमिति पाठ एव साधुः । उत्तरं नैमित्तिककाम्ययोर्वक्ष्यमाणत्वात् नित्यस्यार्चाजपादेः शुद्धसेवाचारात् कैश्चिदपि परमैकान्तिभिरर्चादेर्मिश्रस्यानुष्ठानात् । 'तथाशुद्धं परब्रह्मविशुद्धपरिवारकम् । इज्यतेविविधैर्भोगैर्नित्यं च प्रतिमादिष्विति' नित्यार्चायाः शुद्धाया एवं पूर्वमुक्तत्वाच्च । ननु गायत्री जपः कथमिति चेन्न तस्य सन्ध्योपास्त्यन्तर्गतत्वेन पृथक्कर्मत्वाभावातस्याश्च मिश्राया एवाभावाभ्यनुज्ञातत्वेन तदन्तर्गतस्य तस्याप्यनुज्ञातत्वात्।अत्रोच्यमानस्य नह्यातिरिक्तनिष्ठामन्त्रजपत्वात् न च मन्त्रः कश्चिदपि देवतान्तरमिश्रितः पारमैकान्तिभिर्निष्ठामन्त्रतया जप्य इत्यर्थः ॥ ७७ ॥

सद्ब्रह्म वासुदेवाद्यैर्विविक्तैर्यत्र नामभिः ।
प्रोच्यते भगवान्विष्णुस्तद्विशुद्धमुदाहृतम् ॥ ७८ ॥

शुद्धस्य स्वरूपमाह–सद्ब्रह्मेति । यत्र कर्मणि विविक्तैः केवलभगवद्वाचकैः सदादिभिर्नामभिः भगवान्विष्णुः प्रोच्यते तत्कर्म विशुद्धमुदाहृतम् । देवतान्तरान्तर्य्यामिभावमन्तरेण साक्षाद्भगवद्देवताकं विशुद्धमित्यर्थः ॥ ७८ ॥

यत्राविविक्तैः शब्दैस्तु प्रोच्यते पुरुषोत्तमः ।
देवादीनामशुद्धानां व्यामिश्रं तत्प्रचक्षते ॥ ७९ ॥

विमिश्रितस्वरूपमाह–यत्रेति । यत्र कर्मणि अविविक्तैः केवलभगवद्वाचकेभ्यः सद्ब्रह्मादिशब्देभ्यो विविक्तेभ्यो भिन्नैः अशुद्धानां रजस्तमोऽभिभूतानां देवादीनां शब्दैः धातृशक्तिशिवादीनां नामभिः पुरुषोत्तमः प्रोच्यते तत्कर्म व्यामिश्रं प्रोच्यते । अशुद्धदेवतान्तर्यामिभावेन भगवद्देवताकं विमिश्रितमित्यर्थः ॥ ७९ ॥

दुर्निमित्तमये पापे ग्रहादीनां विपर्य्यये ।
विष्णुतद्भक्तपूजाभिः शान्तिं कुर्वीत नान्यथा ॥ ८० ॥

नैमित्तिकान्यपि कानिचिद्विशुद्धान्येव कर्तव्यानीत्याह–दुरिति । दुर्निमित्तत्वलक्षणं भयमकस्मान्मानसोद्वेगरूपम् । यद्वा भयशब्दस्य तत्कारणे लक्षणया दुर्निमित्तादिविशेषणत्वम् । तत्प्रभृतिभिरुत्थितं वा पापम् अकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारादिकम् । ग्रहादीनां सूर्यादीनां विपर्ययो द्वादशाष्टमजन्मादिव्यवस्थानम् एषु निमित्तेषु यथायोगं विष्णुतद्भक्तपूजादिभिः शान्तिं कुर्वीत नान्यथा । ग्रहयज्ञादिना विमिश्रितेन न कुर्वीतेत्यर्थः । विष्णुपूजाभिः शान्तिश्च परमाख्या, वैयूही मूर्त्याख्या, वैभवीतिचेत्युक्ता चतुष्टयीमहा-

शान्तिस्तद्भक्तपूजाभिः शान्तिश्च [illegible]
सौदर्शनी ततः 'इत्युक्ता उपशान्तिचतुष्टयी'। तथा च वक्ष्यति 'करणे प्रतिषिद्धानां विहिताकरणे तथा । विधेयामहतीशान्तिर्विज्ञायगुरुलाघवम् । अवैष्णवेभ्यो यत्किंचित्प्रतिगृह्य प्रदाय वा । कृत्वोपशान्तिं शुद्ध्येत परिवादे सतामपि। असतः परिगृह्णीयात् पुत्रदारादिकान् यदि । विधाय परमां शान्तिं वृत्तिमाचारयेन्निजाम्।भजनेचान्यदेवानामनाचारे च शार्ङ्गिणः। वैयूहीं परमां वापि कुर्याच्छान्तिं विशुद्धये। लक्षणानामकरणे धारणे चान्यलक्षणे। मूर्तिं कुर्यान्महाशान्तिं तथा सौदर्शनीन्तु वा। अपचारे गुरूणाञ्च वैष्णवानां च सर्वशः।वैष्वक्सेन्यथ वा शान्तिः कार्या चासन्निषेवणे । असाच्छास्त्राभियोगं सच्छास्त्राणां निराकृतौ । कर्त्तव्या गारुडी शान्तिर्दुर्निमित्तेषु वैष्णवी' इत्यादि ॥ ८० ॥

प्राज्यैः प्रियतमैर्भोगैर्विशेषेण जनार्दनम् ।
आराधयेन्निमित्तेषु वैष्णवाँश्च विशेषतः ॥ ८१ ॥

अल्पेषु निमित्तेषु चन्दनकुसुमादिभिः पायसापूपादिभिश्च भगवन्तमाराध्य वैष्णवानप्याराधयेदित्यत्राह–प्राज्या इति । यद्वा उक्तमेवार्थं विशदयन्नाह–प्राज्यैरिति । प्राज्यैः श्रेष्ठैः प्रियतमैरिष्टैः । प्राज्यैरित्यनेन लोके श्रेष्ठतया प्रसिद्धवृत्तान्तैः । प्रियतमैरित्यनेन आत्मनः प्रियतमा उच्यन्ते । 'यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते' इत्युक्तम् । भोगैर्गन्धपुष्पधूपदीपसूपापूपादिभिः विशेषेण नित्यपरिकरादाधिक्येन । ननूक्तं 'न पापेन न पुण्येन नात्यायासेन कर्मणा । सम्पदां संग्रहं कुर्याद्द्विपदां च प्रतिक्रियाम् ।' इति तत्कथमुच्यते दुर्निमित्तेत्यादिना पुण्येन विपत्प्रतीकार इति । उच्यते । तत्रापि प्राप्तायाः रोगदारिद्र्यादिरूपाया विपदः प्रतीकारः पुण्यने



कर्त्तव्य इत्युच्यते। न प्रत्यवायपर्य्यवसन्ना प्रतीकारकेषु दुर्निमित्तादिषु विहिता शान्तिः प्रतिषिध्यते। तत्रापि 'विनैव प्रतिषेधेन सर्वार्थान्साधयेत्सतामिति' पुण्येनापि वैष्णवानां सम्पत्संग्रहविपत्प्रतीकारयोश्चोक्तत्वात्तदर्थं वा उक्तनिमित्तेषु भगवद्भागवताराधनस्याविरोधात् 'वृतश्च परितानेन शान्तिं शश्वत्प्रयोजये,दिति स्वधर्माविभेदार्थमपि शान्त्यनुष्ठानं परिनिष्ठम्। तस्मान्न पापेनेत्यादिना प्रत्यवायपर्य्यवसन्ना प्रतिकारविपत्प्रतीकारो निषध्यत इति न विरोधः ॥ ८१ ॥

कुर्वन्ति वैष्णवार्थाय स्वधर्माणाञ्च सिद्धये ।
शान्तिकर्म हरेः केचित्प्रपत्तिं केवलं हरेः ॥ ८२ ॥

शान्त्यनुष्ठानस्य वैष्णवप्रयोजनवृत्तेः परिपोषलक्षणफलद्वयेन संग्रहप्रपत्त्या समविकल्पं दर्शयति—कुर्वन्ति इति। वैष्णवार्थाय वैष्णवप्रयोजनाय स्वधर्माणां स्ववृत्तेः सिद्धये परिपोषाय च शान्तिकर्म कुर्वन्ति केचिद्धरेः केवलां प्रपत्तिमेव कुर्वन्ति। केचिदित्यनेन शान्तिकर्मकरणानधिकारिण उच्यन्ते। प्रपत्तिलक्षणपरीक्षायां स्वाभीष्टस्यानन्यसाध्यत्वावश्यं भावादकिंचनस्य चाधिकारित्वात् ॥ ८२ ॥

यास्तत्रतत्र श्रूयन्ते पुंसां काम्यतया श्रुतौ ।
ताः किलैकान्तिना दिव्या भगवद्भोगसम्पदः ॥ ८३ ॥

शुद्धानि काम्यान्यपि कर्माणि स्वयं प्रयोजनभगवत्कैंकर्यतयानुष्ठेयानीत्याह—या इति। श्रुतौ तत्रतत्र याः क्रियाःकाम्यतया श्रूयन्ते एकान्तिनां विद्याशुद्धास्ताः क्रियाभगवद्भोगसम्पदः भगवतोऽत्यन्तमभिमता इत्यर्थः 'याः क्रियाः संप्रयुक्ताः स्युरेकान्त्यगतबुद्धिभिः। ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयमि'त्युक्तत्वात्। यद्वा पुंसां काम्यतया श्रुतौ याः क्रियाः

श्रूयन्ते ताः परमैकान्तिनां भगवद्भोगसम्पदः भगवदाराधनरूपाः। संपच्छब्देन स्वयं पुरुषार्थत्वमुच्यते। स्वयं पुरुषार्थः भगवत्कैंकर्यमित्यर्थः ॥ ८३ ॥

आरम्भे कर्मणां सिद्ध्यै विघ्नानां प्रशमाय च।
कुर्यात्सपरिवारस्य विष्वक्सेनस्य पूजनम् ॥ ८४ ॥

कर्मारम्भेषु विघ्नोत्सारणार्थं कर्मानुष्ठानमविशुद्धमेव कुर्य्यादित्याह—आरम्भे इति। सिद्ध्यै अभिवृद्धये सपरिवारस्य गजाननजयत्सेनहरिवक्त्रकालप्रकृतिसंज्ञाख्यपार्षदसमेतस्य। गजाननादीनामपि विघ्ननिवर्तकत्वं प्रसिद्धम्।'यस्य द्विरदवक्त्राद्याः पारिषद्याः परः शतम्। विघ्नं निघ्नन्ति भजतां विष्वक्सेनं तमाश्रये' इति सकलशिष्टैर्वाक्यतयानुसन्धानात। उक्तंच भट्टपराशरैः। 'विदधतु सकलं विष्वक्सेनस्य ते प्रथमैर्विषमैर्भटैः करिमुखजयत्सेनौ कालप्रकृतिसिंहमुखाद्योगणाः। जगति भवन्ति भजतां तत्प्रत्यूहतूलदवानला दिशिदिशि विचरन्तः श्रीरङ्गपालनकर्मठाः' इति ॥ ८४ ॥

स्वल्पापि हन्ति भूयांसं स्वधर्मं निन्दिता क्रिया।
दृष्टिं कुदृष्टिर्भक्तिन्तु देवतान्तरसंश्रयः ॥ ८५ ॥

वृत्तिं प्रपञ्चयँस्तद्विरुद्धवर्जनमाह—स्वल्पेति। भूयांसं स्वधर्मं स्वल्पापि निन्दिता क्रिया हन्ति कुदृष्टिर्दृष्टिं हन्ति देवतान्तरसंश्रयश्च भक्तिं हन्ति ॥ ८५ ॥

सत्सेवनमसत्सेवा लक्षणं चान्यलक्ष्मता।
तस्माद्विरुद्धान्येकान्ती विशेषेण विवर्जयेत् ॥ ८६ ॥

सत्सेवनमिति। असत्सेवा सत्सेवनं हन्ति। अन्यलक्ष्मता देवतान्तरचिह्नधारणं लक्षणं लक्ष्माख्यं वृत्त्यवयवं हन्ति॥८६॥

---

१ मत्यन्तरविरहाच्छोद्धुन्नाशकं सम्यक्श्लोकमिमम् ॥

एकस्यापि हि धर्मस्य विनाशे च विरोधिभिः ।
अनन्वयापचारेण नश्यत्येकान्तिवृत्तिता ॥ ८७ ॥

एकस्येति । एकस्यापि विहिताचारादिष्वेकस्यापि धर्मस्य विरोधिभिर्निन्दितक्रियाद्दाष्टिभिर्विनाशे सति अनन्वयापचारेण वृत्त्यन्वयाभावरूपापचारेण ऐकान्त्यवृत्तिता नश्यति। अनन्वयापचारेति पाठे धर्मस्य अन्वयरूपे अकरणरूपे चेत्यर्थः॥८७॥

परमैकान्तिनां धर्मः कृते पूर्णः प्रवर्त्तते ।
क्षीयमाणः क्रमेणायं कलौ स्थास्यति वा न वा ॥८८॥

परमैकान्तिनामाचारस्यान्यदुर्लभत्त्वं ज्ञापयितुं तस्य कृते पूर्णतां क्रमेण हानिं चाह—परमैकान्तिनामिति । कृते कृतयुगे क्रमेण युगक्रमेण स्थास्यति वा न वेत्यन्वयस्य 'यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ।कलिः कृतयुगं तस्य कृतं तस्य कलिर्भवेत्' इति । कलावपि कृतयुगसम्भवादिति विरलतया क्वचिदेव महानुभावे पुरुषधौरेये परमैकान्तिधर्मोऽयं वर्तते न प्रचुरतयेति भावः ॥ ८८ ॥

नानाकामहतज्ञाना नानादैवतयाजिनः ।
नरा भगवदैकान्त्ये न स्थास्यन्ति कलौ युगे ॥ ८९ ॥

नानेति । नानाकामहतज्ञाना बहुविधफलाभिलाषा नष्टबुद्धयः नानादैवतयाजिनः रजस्तमःप्रचुरदेवतान्तरपूजकाः । इदञ्च विशेषणद्वयं पारमैकान्त्यानवस्थाने हेतुतयोक्तम् ॥ ८९॥

परं भागवतं वर्त्म दृष्ट्वापि कलिमोहिताः ।
प्रभवन्ति न विद्वांसस्त्यक्तुं पूर्वान्धवर्त्मनीम् ॥ ९० ॥

एवं पारमैकान्त्यज्ञानस्याभावे केचित्पारमैकान्त्ये न स्थास्यन्ति; इत्युक्त्वा केचित् ज्ञात्वापि दुर्वासनामहिम्ना पारमै-

कान्त्येन स्थास्यन्तीत्याह–परमिति । परं सर्वोत्कृष्टं सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिरित्युक्तत्वाद्भागवतं धर्मं वैष्णवं मार्गं दृष्ट्वा ज्ञात्वापि विद्वांसो विबुधाः कलिमोहिताः सन्तः पूर्वेषामन्धानां वर्त्तनीं त्यक्तुं न प्रभवन्ति समर्था न भवंति पितृपितामहादिपरिगृहीतवर्त्तनीदुर्वासनादार्ढ्यात् । ज्ञात्वापि पारमैकान्त्यं न तत्र तिष्ठन्तीत्यर्थः ॥ ९० ॥

भविष्यन्ति कलौ केचित्क्वचिदेकान्तिनो हरेः ।
मोहयिष्यन्ति च परे कुतर्कैस्तान्कुदृष्टयः ॥ ९१ ॥

भविष्यन्तीति । केचिन्न सर्वे क्वचिन्न सर्वत्र एकान्तिनः परमैकान्तिन इत्यर्थः।कुतर्कैः प्रमाणविरुद्धतर्कैः कुदृष्टयः रजस्तमोमूलग्रन्थजन्यविपर्ययज्ञानाः ॥ ९१ ॥

निरीश्वराः कर्मफला निष्क्रिया ब्रह्मवादिनः ।
परावरविमूढाश्च भविष्यन्ति कलौ युगे ॥ ९२ ॥

निरीश्वरा इति । केचित्कर्मपराः कर्मरताः निरीश्वराः भविष्यन्ति इत्यनेन कबन्धमीमांसका उक्ताः केचिद् ब्रह्मवादिनो निष्क्रिया भविष्यन्तीत्यनेन राहुमीमांसका उक्ताः। केचित्परावरविमूढा भविष्यन्ति कुत्र? कलौ युगे ॥ ९२ ॥

क्षीणायुर्ज्ञानशक्तित्वान्मनुष्याणां कलौ युगे ।
विद्यानां परमा विद्या न्यास एव परायणम् ॥ ९३ ॥

एवं कलियुगस्य सकलपरमधर्मं लब्धुमनर्हतया पापिष्ठत्वमुक्त्वा तस्मिन्नुपायान्तरानुष्ठानाशक्तानां पुरुषाणां प्रपत्तिरेव भवभयसंतरणोपाय इत्याह–क्षीणायुरिति क्षीणमल्पम् आयुर्ज्ञानं शक्तिश्च येषां तेषां भावस्तत्त्वं तस्मात् । क्षीणायुष्यकथनेन बहुकालसाध्योपायान्तराभाव उक्तः। एवं ज्ञानशक्तिसाध्य-

त्वादुपायान्तराणां क्षीणज्ञानशक्तित्वकथनेनापि तदन्वय उक्तः विद्यानां परमाविद्या अनवधिकायाससाध्यकर्मज्ञानाङ्गकत्रैवर्णिकाधिकारिकाविलम्बितफलकेभ्यो विध्यन्तरेभ्योऽधिकाविद्या न्यास एव न्यासशब्दवाच्या प्रपत्तिरेव परायणम् उपायः 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहु' रिति श्रुतिः स्मारिता विद्यानां परमा विद्या न्यास इत्यर्थः ॥ ९३ ॥

कर्म ज्ञानञ्च भक्तिश्च साधनानि मनीषिणाम् ।
न्यास एवाचिरात्सिद्धिं वाञ्छतां सर्वदेहिनाम् ॥ ९४ ॥

परमविद्यात्वमेव विशदयति—कर्मेति । कर्म कर्मयोगः । ज्ञानं ज्ञानयोगः । भक्तिर्भक्तियोगः । मनीषिणां ज्ञानिनाम् । साधनानि सद्वारकतया च मोक्षं प्रतिसाधानानि कर्मज्ञाने तु सद्वारकतया साधनम् । मनीषिणामित्यनेन अधिकृताधिकारत्वं ज्ञाप्यते । अचिरात् क्षिप्रमेव सिद्धिं वाञ्छतां सर्वदेहिनां न्यास एव साधनमिति वचनव्यत्ययेन सम्बन्धः । अचिरादित्यनेन शीघ्रफलप्रदत्वरूपातिशयः सिद्धिमिति सामान्यशब्देन सकलफलप्रदत्वातिशयः । सर्वदेहिनामित्यनेन सर्वाधिकारकत्वरूपातिशयश्च प्रतिपाद्यते ॥ ९४ ॥

ज्ञानानन्दमयो नित्यः शुद्धो देहान्तरं हरेः ।
जीवोऽयं संसरत्यस्य माययैव विमोहितः ॥ ९५ ॥

नित्यशुद्धार्हस्यापि जीवस्य भगवन्मायातिरोहितस्वभावतया कर्मकृतनिरतिशयावार्याशुद्धिभोक्तृत्वम् । तद्वारणाय प्रपत्तिरवश्यं कर्तव्येत्याह—ज्ञानानन्दमयेत्यादिश्लोकद्वयेन । अयं जीवो ज्ञानानन्दमयः ज्ञानानन्दस्वरूपः ज्ञानानन्दगुणक इति वा नित्यः । उभयावधिरहितः । शुद्धः । नित्यशुद्धार्ह इति वा । अन्यथासंसरतः शुद्ध्यभावात । हरेः देहान्तरं शरीरान्तर-

मित्यर्थः। तथापि अस्य हरेः चेतनकर्मानुरूपसङ्कल्पेन तदधीनतया प्रकृत्या वा विमोहितः सन्संसरति ॥ ९५ ॥

अनीश्वरोऽहमीशोऽहमिति धीर्मायया हरेः।
भवेत्सा संसृतेर्मूलं तं प्रपद्यैव तां त्यजेत् ॥ ९६ ॥

अनीश्वर इति। अहम् अनीश्वर ईश्वररहितः। अहमेवेश इति-धीर्बुद्धिर्हरेर्मायया भवति सा अनीश्वरोऽहमीश्वरोऽहमिति धीः संसृतेः संसारस्य मूलं भवति। अतस्तां मायान्तं प्रपद्यैव वर्जयेत भगवन्तं शरणमुपगम्य वर्जयेत्। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यत्रानुसन्धेयम्। तं प्रपद्यैवेत्येवकारेण लिङ्गभावेन वा प्रपत्तिमभिगम्यैव मायां जयेत्। नान्यथेत्यवगम्यते ॥ ९६ ॥

ज्ञानानन्दमयोऽनन्तो दिव्यात्मगुणविग्रहः।
नारायणो जगद्योनिः प्राप्यो लक्ष्मीपतिः स्वयम् ॥ ९७ ॥

एवं विद्यानां परमा विद्येत्यादिना उपायस्वरूपमुक्तम्-ज्ञानेति। ज्ञानानन्दमयो ज्ञानानन्दस्वरूपः ज्ञानानन्दप्रचुर इति वा। अनन्तः देशादिपरिच्छेदरहितः। दिव्या अकर्मकृताः आत्मगुणविग्रहाश्च यस्य स तथोक्तो नारायणः नारशब्दवाच्यत्वेन चेतनात्मकनित्यवस्तुसर्वायनभूतः। जगद्योनिः जगद्भिन्ननिजभिन्नोपादानभूतः। लक्ष्मीपतिर्नारायणः सतां प्राप्य इत्यन्वयः ॥ ९७ ॥

आब्रह्मलोकाल्लोकानां यदैश्वर्यं न तद्ध्रुवम्।
अथ नित्यं महत्साधु यद्दास्यं परमात्मनः ॥ ९८ ॥

अथ प्राप्तिस्वरूपमाह-आब्रह्मेति। आब्रह्मलोकादित्यत्राभिविधिरेव ग्राह्यः। ब्रह्मलोकमभिव्याप्य यल्लोकानामैश्वर्यं

तन्न ध्रुवम्, अनित्यं कर्मणां परिपाकत्वादाविर्भावममङ्गलम् इत्यादिकमत्रानुसन्धेयम् । अथ परमात्मनो यद्दास्यं तत्साधु निरवद्यं महत् निरातिशयं नित्यम् अन्तरहितं फलमिति शेषः । यत्साधु मोक्षदशायां साधुतया भासमानं महत्सर्वोत्तरं दास्यं तन्नित्यमिति वान्वयः ॥ ९८ ॥

एवंविधस्वधर्मेण युक्तस्यानन्यचेतसः ।
नित्यमाराधनं विष्णोर्यत्तद्दास्यमिहोच्यते ॥ ९९ ॥

मुमुक्षुत्वावस्थायामपि भगवद्दास्यरूपं फलमाह-एवंविधेति। एवंविधस्वधर्मेण गुणयुक्तस्यानन्यचेतसः प्रयोजनान्तरविमुखस्य चेतनस्य यन्नित्यमहरहर्हरेर्विष्णोराराधनं तदिह अस्मिन् लोके दास्यमुच्यते । मोक्षभगवदिच्छासाक्षात्कारपूर्वकं क्रियमाणस्य निरातिशयकैङ्कर्यस्यैव पुरुषार्थत्वात्तस्य चात्र सम्भवान्नित्यं भगवदाराधनात्मकं दास्यमिह पुरुषार्थ इतिभावः॥९९॥

अनुज्ञाताः स्त्रियश्चैवमर्चयन्त्यो जगद्गुरुम् ।
यथार्हमपि शूद्राद्याः सर्वे यान्ति परां गतिम्॥ १०० ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहितायां परिशिष्टे
प्रथमोऽध्यायः ॥ १ ॥

---

भगवदाराधनात्मके दास्ये स्त्रीशूद्रादीनामप्यधिकारोऽस्तीत्याह-अनुज्ञाता इति । अनुज्ञाता आचार्यादिभिः पतिपुत्रादिभिर्वा यथार्हं स्वार्हकत्वेन अर्चयन्त्यः शूद्राद्या इत्यादिशब्देन अनुलोमप्रतिलोमजातानां ग्रहणम् ॥ १०० ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहितापरिशिष्टटीकायां प्रथमोऽध्यायः ॥ १ ॥

---

उपासितगुरोर्वर्षं विष्णोर्दास्यमभीप्सतः ।
विहिताः पञ्च संस्कारा युक्तस्यैकान्त्यहेतवः ॥ १ ॥

अथ भगवदाराधनस्य संस्कारपञ्चकसंस्कृताधिकारिकत्वादनेनाध्यायेन तत्संस्कारमाह—उपासितेति। वर्षमुपासितगुरोः। अत्यन्तसंयोगे द्वितीया युक्तस्य शिष्यगुणयुक्तस्य ॥ १ ॥

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः ।
अमी हि पञ्च संस्काराः पारमैकान्त्यहेतवः ॥ २ ॥

संस्कारानन्नुक्रमते—ताप इति। परमसंस्कारा गर्भाधानादिभ्यः संस्कारेभ्योऽपि अविलम्बेन मोक्षप्रदतया अत्यन्तमुत्कृष्टाः। पारमैकान्त्यहेतवः परमैकान्तित्वप्राप्तिकारणानि ॥ २ ॥

तापयिष्यन् गुरुः शिष्यं चक्राद्यैर्हेतिभिर्हरेः ।
पुण्येऽह्नि नियतः स्नात्वा स्नातं मन्त्रजलाप्लुतम् ॥ ३ ॥

तापयिष्यन्निति। तापयिष्यन् तप्तान् करिष्यन्। हेतिभिरायुधैः ॥ ३ ॥

ऋचा दक्षिणतः कुर्याद्वैष्णव्या बद्धकौतुकम् ।
ततः समर्चयेद्देवं स्वार्चायां स्थण्डिलेऽपि वा ॥ ४ ॥

ऋचेति। वैष्णव्या ऋचा विष्णुप्रकाशिकया 'विष्णोर्नुक'मित्यादिकया दक्षिणतः दक्षिणकरे बद्धकौतुकं बद्धकङ्कणं कुर्यादिति पूर्वश्लोकेनान्वयः। ततः अनन्तरं स्वार्चायां स्वाराध्यबाह्यबिम्बे स्थण्डिलेऽपि वा देवं समर्चयेत् आराधयेत् ॥ ४ ॥

पश्चिमे स्वेन मन्त्रेण कृत्वाग्नेः स्थापनादिकम् ।
मूलमन्त्रेण हुत्वाज्यं ततः प्रत्यक्षराहुतीः ॥ ५ ॥

पश्चिम इति। पश्चिमे भगवतः पश्चिमभागे प्रत्यङ्मुखतयावस्थितस्य भगवतः पुरत इत्यर्थः। स्वेन मन्त्रेण स्वसूत्रोक्तवि-

धानेन अग्नेः स्थापनादिकम् अग्निप्रतिष्ठापनादिकं गृह्यते । मूलमन्त्रेण श्रीमदष्टाक्षरमन्त्रेण आज्यं हुत्वा ततस्तदनन्तरं प्रत्यक्षराहुतीर्हुत्वा एकैकाक्षरेण एकैकामाहुतिं हुत्वेत्यर्थः ॥५॥

एकां पुनश्च सर्वेण पौरुषीभिश्च षोडश ।
हुत्वा त्रीन्विष्णुगायत्र्या वैष्णव्या चाथ हेतिभिः ॥ ६ ॥

एकामिति।पुनश्च पुनरपि सर्वेण सकलेन श्रीमदष्टाक्षरेण एकामाहुतिं हुत्वेत्यर्थः। पौरुषीभिः पुरुषसूक्तस्थाभिः षोडशऋग्भिः षोडशाहुतीर्हुत्वा विष्णुगायत्र्या 'नारायणाय विद्महे' इत्यादिकया त्रिर्हुत्वा वैष्णव्या 'विष्णोर्नुक'मित्यादिकया ऋचा एकामाहुतिं हुत्वा अथ अनन्तरं हेतिभिः पञ्चायुधमन्त्रैर्हुत्वा॥६॥

हविर्निवेद्य देवाय तच्छेषेण तथाहुतीः ।
अथोपसन्ने हैमानि ताम्राणि राजतानि वा ॥ ७ ॥
प्रक्षाल्य पञ्चगव्येन मन्त्रतोयाप्लुतानि च ।
बिम्बानि पूर्वहेतीनां स्वभागनिहितानि वै ॥ ८ ॥
निधाय वह्नौ प्रत्येकं तत्रावाह्य स्वमन्त्रतः ।
अर्घ्यं पाद्यं तथाचम्यं गन्धं पुष्पञ्च धूपकम् ॥ ९ ॥
दीपञ्च दत्त्वाथाभ्यर्च्य प्रणम्याग्निसमप्रभम् ।
आचार्यः स्वयमादाय नियुक्तो वाथ मन्त्रवित् ॥ १० ॥
प्राङ्मुखस्योपविष्टस्य न्यसेद्बाहौ च दक्षिणे ।
सुदर्शनं तथा वामे पाञ्चजन्यं स्वमन्त्रतः ॥ ११ ॥

हविरिति । देवाय पूर्वमर्चिताय भगवते हविर्निवेद्य तच्छेषेण हविर्निवेदितशेषेण तथा आज्याहुत्युक्तक्रमेण आहुतीर्हुत्वा मूलमन्त्रेण ततः प्रत्यक्षरं पुनः सर्वेणैव पौरुषीभिः षोडशभि-

विष्णुगायत्र्या त्रिः वैष्णवैर्वा हेतिमन्त्रैश्च हुत्वेत्यर्थः । अथेति उपसन्ने शिष्ये उपसन्नेइत्यनुवादः। अर्चिताहानि इत्यपरः पाठः। अथनान्तरं हैमानि स्वर्णनिर्मितानि ताम्राणि ताम्रमयानि राजतानि रजतानिर्मितानि वा पूर्वं प्रथमं स्वभागनिहितानि देवस्य दक्षिणवामपार्श्वनिहितानि हेतीनां बिम्बानि चक्रादिकमुद्राः पञ्चगव्येन प्रक्षाल्य मन्त्रतोयाप्लुतानि कृत्वा प्रत्येकमग्नौ निधाय तत्र वह्निविनिहितचक्रादिमुद्रासु स्वमन्त्रतः चक्रादिमन्त्रेणावाह्य चक्रादिकामिति शेषः। चक्रमुद्रां वह्नौ निधाय तत्र सुदर्शनमावाह्य एवं पाञ्चजन्यमुद्रादिकमपि वह्नौ निधाय तत्र स्वमन्त्रेण पाञ्चजन्यादिकमावाह्येत्यर्थः इति श्लोकद्वयस्यार्थः । अर्घ्यमित्यादि । अर्घ्यादिभिरुपचारैः समभ्यर्च्य अथ प्रणम्य अग्निसमप्रभं सम्यक्तप्तं सुदर्शनमाचार्यः स्वमादाय नियुक्तः आचार्येण नियुक्तः अन्यो वा मन्त्रवित् ब्राह्मणास्योपविष्टस्य शिष्यस्य दक्षिणे बाहौ स्वमन्त्रतः 'सुदर्शनमहाज्वाले' ति मन्त्रेण सुदर्शनं न्यसेत् । ततोऽनन्तरं स्वमन्त्रतः । 'पाञ्चजन्यनिजध्वाने'ति मन्त्रेण वामे बाहौ पाञ्चजन्यं न्यसेदिति । श्लोकत्रयस्यार्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

एवं गदां धनुः खड्गं ललाटे मूर्ध्नि वक्षसि ।
चक्रं वा शङ्खचक्रे वा धारयेत्सर्वमेव वा ॥ १२ ॥

एवमिति । एवं पंचरात्रोक्तेन क्रमेणैव गदां कौमोदकीं धनुः शार्ङ्गं खड्गं नन्दकञ्च क्रमेण ललाटे मूर्ध्नि वक्षसि स्वमन्त्रेण न्यसेत् चक्रं वा केवलं चक्रमात्रञ्च धारयेत् । शंखचक्रद्वयमात्रं वा धारयेत् । सर्वमेव पञ्चायुधानि धारयेत् । अत्र व्यवस्थित विकल्पो वेदितव्यः ॥ १२ ॥

तन्त्रं समाप्य देवेशं सहशिष्यः प्रदक्षिणम् ।
कृत्वा प्रणम्य सान्निध्यं प्रार्थ्य शेषं समापयेत् ॥ १३ ॥

तन्त्रमिति । तन्त्रं होमतन्त्रं समाप्य सहशिष्यः शिष्यसहितो देवेशं प्रदक्षिणं कृत्वा प्रणम्य सान्निध्यं प्रार्थ्य याचनं कृत्वा शेषमिज्याशेषं समापयेत् ॥ १३ ॥

कुर्यात्सर्वत्र कर्मान्ते द्विजैः पुण्याहवाचनम् ।
आचार्यस्यार्चनं चैव वासःस्रग्भूषणादिभिः ॥ १४ ॥

कुर्य्यादिति । कर्मादौ अन्ते सर्वत्र तापादौ सर्वसंस्कारान्ते विशेषं प्रायश्चित्ताहुतिकरणेन द्विजैर्विप्रैः सह पुण्याहवाचनं कुर्यात् । वासःस्रग्भूषणादिभिराचार्यस्यार्चनं कुर्याच्चैवेत्यत्र एवकारो भिन्नक्रमः । आचार्यस्यार्चनं कुर्यादेव । अङ्गेष्विद मत्यावश्यकमित्येवकरार्थः ॥ १४ ॥

सर्वमङ्गलसंयुक्तमिति चिह्नानि शार्ङ्गिणः ।
धारयित्वा यथोत्साहं वैष्णवानभितर्पयेत् ॥ १५ ॥

सर्वेति । 'सर्वमङ्गलसंयुक्तम्' इति क्रियाविशेषणम् । सर्वमङ्गलसंयुक्तं शार्ङ्गिणः चिह्नानि आयुधानि धारयित्वा यथोत्साहं वैष्णवानभितर्पयेत् भोजनदक्षिणादानादिभिस्तत्प्रीणनं कुर्यात् ॥ १५ ॥

धारयिष्यंस्ततः शिष्यमूर्द्धपुण्ड्रान्यथाविधि ।
पुण्येऽह्नि नियतः स्नात्वा पूर्ववद्बद्धकौतुकम् ॥ १६ ॥
उपवेश्याथ देवेशं भोगैर्दीपान्तमर्चयेत् ॥
स्थण्डिलं कल्पयेत्पश्चात्पुरुषस्य प्रमाणतः ॥ १७ ॥

अथ पुण्ड्रसंस्कारमाह–धारयिष्यन्निति । ततः तापसंस्कारानन्तरं गुरुर्यथाविधि शिष्यमूर्द्धपुण्ड्रं धारयिष्यन् पुण्येऽहनि शुभदिवसे स्नात्वा पूर्ववत् 'ऋचो दक्षिणतः कुर्याद्वैष्णव्या बद्धकौतुक' मित्युक्तप्रकारेण कृतकौतुकं कृतकङ्कणम् उपवेश्य उप-

विष्टं कारयित्वा अथ देवेशं भोगैरापीठदीपोपचारपर्यन्तमर्चयेत्। पश्चादर्चनानन्तरं पुरुषस्य प्रमाणतः पुरुषप्रमाणेन स्थण्डिलं कल्पयेदिति श्लोकद्वयार्थः ॥ १६ ॥ १७ ॥

स्थानानि सैकतान्यत्र वर्णचूर्णमयानि वा।
कुर्याद्द्वादश पूर्वादिचतुर्दिक्षु समान्तरम् ॥ १८ ॥
तथा मध्येऽस्य चत्वारि तेष्वभ्यर्चासनं पृथक्।
केशवादींस्तत्रतत्र वासुदेवादिकांस्तथा ॥ १९ ॥
प्रत्येकं च यथारूपं ध्यात्वा नामभिरावहेत्।
हविरन्तैरथार्घ्याद्यैरर्चयेत्तान्यथाक्रमम् ॥ २० ॥

स्थानानीति। अत्र स्थण्डिले सैकतानि सिकतामयानि वर्णचूर्णानि वा स्थानानि ऊर्द्धपुण्ड्रस्थानानि पूर्वादिचतुर्दिक्षु द्वादश कुर्यात्। समान्तरमितिक्रियाविशेषणम्। समव्यवधानानि समानि अन्तराणि अवकाशा यस्मिन्कर्मणि तत्। समव्यवधानानि एकैकस्यां दिशि त्रीणि मिश्रयित्वा द्वादश स्थानानि कुर्यादित्यर्थः तथा समान्तराणीत्यर्थः। अस्य स्थण्डिलस्य मध्ये चत्वारि स्थानानि कुर्यात् तेषु षोडशसु स्थानेषु अभ्यर्चासनमर्चासनं च पृथक्पृथक् कुर्यात्। ततोऽनन्तरं तत्र स्थानेषु केशवादिकाँस्तथा वासुदेवादिकाँश्च प्रत्येकं यथारूपं ध्यात्वा तेषां नामभिरावहेत् पूर्वादिचतुर्दिक्षु कृतेषु द्वादशस्थानेषु केशवादिद्वादशमूर्तीस्तत्तदसाधारणरूपेण कृत्वा तत्तन्नामभिरावहेत्। मध्ये कृते स्थानचतुष्के वासुदेवादिचतुर्व्यूहांस्तत्तदसाधारणरूपेण ध्यात्वा तत्तन्नामभिरावहेदित्यर्थः। अथानन्तरमर्घ्यादिभिरेतैरुपचारैस्तान्केशवादीन्यथाक्रममर्चयेदिति श्लोकत्रयार्थः ॥ १८ ॥ १९ ॥ २० ॥

परीत्य सह शिष्येण सर्वांस्तान्प्रणिपत्य च ।
उपविश्याथ शिष्याय प्रणिपत्योपसीदते ॥ २१ ॥
एषां नामानि रूपाणि यथावदुपदर्शयेत् ।
शिष्यो हृदि समावेश्य तान्सर्वान्क्रमयोगतः ॥ २२ ॥
निर्घृष्य मृत्स्नां विधिवन्मूलमन्त्राभिमन्त्रिताम् ।
आदायाङ्गुलिभिर्दद्याल्ललाटाद्यूर्द्ध्वपुण्ड्रकान् ॥ २३ ॥

परीत्येत्यादिना । शिष्येण सह सर्वांस्तान्केशवादीन्परीत्य प्रदक्षिणीकृत्य प्रणिपत्योपविश्य अथ प्रणिपत्योपतिष्ठते शिष्याय तेषां केशवादीनां नामानि रूपाणि च यथावत् असङ्कीर्णमुपदर्शयेत् शिष्योऽपि सर्वांस्तान् केशवादीन् क्रमयोगतः उपदेशक्रमेण हृदि समावेश्य मृत्स्नां विधिवद्यथाविधि निर्घृष्य मूलमन्त्राभिमन्त्रितां कृत्वा तामंगुलिभिरादाय ललाटाद्यूर्द्ध्वपुण्ड्रकान् ललाटादिस्थानूर्द्ध्वपुण्ड्रकान् दद्यादिति श्लोकत्रयस्यार्थः।निर्घृष्य मृत्स्नां विधिवदित्यत्रापेक्षितो विधिःब्रह्मरात्रे दर्शितः।"अथातु लक्षणोपेतां सुगन्धां सात्त्विकां शुभाम् । वामेऽब्रशोभिते हस्ते वाग्यतः प्रणवेन तु । निधाय जलमादाय गन्धद्वारेति सेचयेत् । अस्त्रमन्त्रेण रक्षाञ्च कृत्वा दशसु दिक्ष्वपि । तारमन्त्रेण संमिश्र्य मूलमन्त्रेण मन्त्रयेत् । नृसिंहबीजञ्च लिखेद्रक्षार्थं दोषशान्तये । शतधारेण मन्त्रेण तीर्थतोयञ्च निक्षिपेत् । तामेकीकृत्य तर्जन्या स्मृत्वा मम पदद्वयम् । विष्णोर्नुकेन मन्त्रेण मन्त्रयित्वा यथाक्रमम् । पञ्चोपनिषदैर्मन्त्रैर्मूलमन्त्रेण मन्त्रयेत् । द्वादशाक्षरमुच्चार्य प्रार्थयेदिष्टसिद्धये । सप्तभिर्वैष्णवैर्मन्त्रैर्मन्त्रयेत्सौख्यसिद्धये । मृदं शेतेरमन्त्रेण तर्जन्या मूर्ध्नि विन्यसेत् । चतुश्चक्रधरं मां तु स्मृत्वा जाम्बूनदप्रभम् । ललाटे केशवायेति धारयेदूर्ध्वपुण्ड्रकम् । चतुःशंखधरं देवं नीलजीमूतसन्निभम्"।२१।२२।२३।

त्रयोदश द्वादश वा चतुरो वैकमेव वा।
नमोऽन्तैर्नामभिर्ध्यात्वा स्थापयेत्तत्र तत्र च ॥ २४ ॥
केशवादीन् द्वादशसु वासुदेवं त्रयोदशे।
केशवं वासुदेवं वा ललाटे केवलं न्यसेत् ॥ २५ ॥
व्यूहाँश्चतुर्षु तान्नत्वा सदा सान्निध्यमर्थयेत्।
अतो हि वैष्णवस्यांगं विष्णोरायतनं विदुः ॥ २६ ॥
हविर्निवेद्य देवाय गुरुः शेषं समापयेत्।
तत्र त्वाचार्य्यमभ्यर्च्य भोजयेद्वैष्णवानपि ॥ २७ ॥

अथ संख्याविकल्पमाह—त्रयोदशेति। त्रयोदश द्वादश वा चतुरो वा पुण्ड्रान् एकमेव वा पुण्ड्रं नमोऽन्तैर्नामभिर्धृत्वा द्वादशसु च पुण्ड्रेषु तत्र तत्र केशवादीन् स्थापयेत्। त्रयोदशे वासुदेवं स्थापयेत्। एकोर्द्धपुण्ड्रपक्षे ललाटे केशवं वासुदेवं गलके न्यसेत्। चतुरूर्द्धपुण्ड्रपक्षे चतुर्षूर्द्धपुण्ड्रेषु व्यूहान्न्यसेत्। तान्केशवादीन्नत्वा सदा सान्निध्यमर्थयेत् याचेत। अतो हि एतस्माद्धि कारणात् वैष्णवस्याङ्गं शरीरं विष्णोरायतनं गृहं विदुः। अनन्तरं गुरुर्देवाय हविर्निवेद्य शेषं समापयेत्। ततोऽनन्तरं शिष्यः आचार्यमभ्यर्च्य वैष्णवान्भोजयेत्। इति श्लोकचतुष्टयार्थः।'नमो नारायणायेति मन्त्रमुच्चार्य धारयेत्।इन्द्रनीलमणिश्यामश्चतुर्हस्तैर्गदाधरम् ॥ हृदयेऽसिधरायेति धारयेदंगुलाष्टकम्। चतुर्भुजं धनुष्मन्तं चन्द्रमस्सदृशप्रभम्॥गोविन्दायेति मन्त्रेण कण्ठे तु चतुरंगुलम्। चतुर्हलधरं देवं पद्मकिञ्जल्कसान्निभम् ॥ विष्णवे त्वेति मन्त्रेण धारयेद्दक्षिणोदरे। मुसलास्त्रं महाविष्णुमरविन्दाभमेव च ॥ मधुसूदनं मन्त्रेण धारयेद्दक्षिणं भुजे। चतुःखड्गधरं देवमग्निसन्निभतेजसम् ॥ त्रिवि-

क्रमायेतिमन्त्रेण धारयेद्दक्षिणे गले । चतुर्वज्रधरं देवं तरुणादित्यसंनिभम्॥ वामनायेति मन्त्रेण वामकुक्षौ तु धारयेत्। पट्टिशायुधहस्तं च पुण्डरीकाक्षमेव च ॥ श्रीधरायेति मन्त्रेण भुजे वामे तु धारयेत्। चतुर्भिर्मुद्गरधरं भुजैर्विद्युत्समप्रभम् ॥ हृषीकेशेति मन्त्रेण धारयेद्वामकन्धरे । पञ्चायुधधरं माञ्च सहस्रांशुसमप्रभम् ॥ पद्मनाभेति मन्त्रेण पृष्ठे वै धारयेत् क्रमात्। पाशहस्तधरं देवं बालार्कशतसंनिभम् ॥ दामोदरेति मन्त्रेण धारयेत्पश्चिमे गले । द्वादशाक्षरमुच्चार्य शेषं मूर्द्धनि विन्यसेत्॥ इत्येषां नामरूपाणि यथावदुपदर्शयेत्॥" इत्युक्तानि नामरूपाण्यप्युक्तान्येव दृष्टानि ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

करिष्यन् वैष्णवं नाम वैष्णवाश्रयमेव वा ।
पुण्येऽहनि गुरुः स्नात्वा पूजयित्वा जगद्गुरुम् ॥ २८ ॥
पूर्ववत्स्थण्डिलं कृत्वा पूर्ववात्सिकतामये ।
षोडशे पीठमभ्यर्च्यावाहयेन्नामदेवताम् ॥ २९ ॥

अथ नामसंस्कारमाह—करिष्यन्निति वैष्णवं विष्णुसम्बन्धिवैष्णवाश्रयं भागवतसम्बन्धिदेवतां ध्यात्वा हविरन्तमर्चयेत् अर्घ्याद्यैर्हविःसमर्पणान्तैरुपचारैरर्चयेदिति श्लोकसार्द्धद्वयार्थः ॥ २८ ॥ २९ ॥

भगवद्रूपिणं ध्यात्वा हविरन्तमथार्चयेत् ।
उपपन्ने ततः शिष्ये कौपीनं कटिबन्धनम् ॥ ३० ॥

भगवादिति । ततोऽनन्तरं कौपीनं कटिबन्धनं द्वे नवे वस्त्रे च गुरवे निवेद्य शिष्ये उपपन्ने सति गुरुरपि तस्मै शिष्याय कौपीनादिकं तं शिष्यं ग्राहयेत् । कौपीनादिकं शिष्येण धृतं कुर्य्यादित्यर्थः । अथवा शिष्ये उपपन्ने सति कौपीनं कटिबन्धनं

नवे वस्त्रे निवेद्य भगवते निवेद्य शिष्याय दत्त्वाथ शिष्यं कौपीनादिकम् ग्राहयेत ॥ ३० ॥

निवेद्य वस्त्रे च नवे तस्मै तं ग्राहयेद्गुरुः।
तच्छेषं गन्धमाल्यादि तथा चान्नं निवेदितम् ॥ ३१ ॥

निवेद्येति। तथा कौपीनादिकवदेव तच्छेषं नामाधिदेवतापूजाशेषं गन्धमाल्यादि गन्धपुष्पादिसहितं निवेदितं नामाधिदेवतानिवेदितमन्नं च ग्राहयेत ॥ ३१ ॥

नाम दासादिशब्दान्तं श्रावयेत्केवलं तु वा।
परीत्य प्रणतोऽभ्यर्च्य देवतां हृदि निक्षिपेत् ॥ ३२ ॥

नामेति। दासादिशब्दान्तं नाम श्रावयेत् । 'केशव वासुदेव नारायण' दास इत्यादि प्रकारेण भगवन्नाम अनन्तदासो भरणदास इत्यादिप्रकारेण भगवतो नाम श्रावयेत् । केवलं केशवो नारायणः अनन्तो बकुलाभरण इत्यादि प्रकारेण दासशब्दरहितं वा नामकुर्यादित्यर्थः परीत्येति । परीत्य नामाधिदेवतां प्रदक्षिणीकृत्य प्रणतः कृतप्रणामः। अभ्यर्च्य नामाधिदेवतां सम्पूज्य देवतां नामाधिदेवतां हृदि शिष्यहृदये निक्षिपेत् ॥ ३२ ॥

हविर्निवेद्य देवाय तन्त्रशेषं समापयेत्।
शिष्यो देशिकमभ्यर्च्य वैष्णवान् परितोषयेत् ॥ ३३॥

हविरिति । ततो देवाय हविर्निवेद्य शेषं समापयेत। ततो गुरुमभ्यर्च्य वैष्णवान् परमैकान्तिनः परितोषयेत् भोजनदक्षिणादिना सन्तुष्टान् कुर्यादिति सार्द्धश्लोकार्थः ॥ ३३ ॥

स्वयं ब्रह्माणि निक्षिप्तान् जातानेव च मन्त्रतः।
विनीतानथ पुत्रादीन् संस्कृत्य प्रतिबोधयेत् ॥ ३४ ॥

अथ मन्त्रसंस्कारमाह-स्वयमिति। अथ नामसंस्कारानन्तरं स्वयमाचार्यः मन्त्रतो जातान् मन्त्रसंस्कारेण पुनरुत्पन्नान् ब्रह्मणि निक्षिप्तान् पुत्रशिष्यान् संकृत्य संस्कारैः संस्कृत्य प्रतिबोधयेन्मन्त्रार्थं बोधयेत् मन्त्रसंस्कारसंग्रहः। संस्कृत्येत्यनुवादः। न तु मन्त्रसंस्कारानन्तरं पुनः संस्कारो विधीयते किंतु नामादिसंस्कारचतुष्टयानन्तरं मन्त्रार्थं बोधयेदित्यर्थः ॥ ३४॥

अनुकूलेऽहनि शुभे गुरुः स्नात्वा समाहितः।
हुताग्निः पूर्ववच्छिष्यं निष्पाद्य कृतकौतुकम् ॥ ३५॥

अथ मन्त्रसंस्कारप्रकारमाह-अनुकूल इति अनुकूले ग्रहनक्षत्राद्यानुकूल्यवति शुभेऽहनि गुरुः स्नात्वा समाहितः सन् हुताग्निः कृतनित्योपासनः पूर्ववन्नामसंस्कार इव कृतकौतुकं धृतकङ्कणं शिष्यं निष्पाद्य दक्षिणतः कुर्याद्वैष्णव्या बद्धकौतुकमित्युक्तम् ॥ ३५॥

ततः सम्पूज्य देवेशं पश्चादग्निं निधाय वै।
स्वेन तन्त्रेण तत्राथ हुत्वा पूर्ववदाहुतीः ॥ ३६॥

तत इति। ततोऽनन्तरं देवेशं सम्पूज्य पश्चात्पूजानन्तरं स्वेन मन्त्रेण स्वसूत्रोक्तविधानेन अग्निं निधाय अग्निं प्रतिष्ठाप्य अथ तत्र वह्नौ पूर्ववदाहुतीर्हुत्वा 'मूलमंत्रेण हुत्वाज्यं ततः प्रत्यक्षराहुतीः। एकां पुनश्च सर्वेण पौरुषीभिश्च षोडश हुत्वा-त्रिर्विष्णुगायत्र्या वैष्णव्या चाथ हेतिभि'रित्युक्तप्रकारेण हुत्वेत्यर्थः ॥ ३६॥

स्थाने हेत्याहुतीनान्तु मूलमन्त्राहुतीः पुनः।
हविर्निवेद्य देवाय तच्छेषेण तथाहुतीः ॥ ३७॥
स शिष्योऽथ गुरुः कृत्वा साग्निं देवं प्रदक्षिणम्।

प्रणम्य पुनरासीनः प्रणिपत्योपसेदुषः ॥ ३८ ॥
संहारादिक्रमं कुर्याद्विधिवच्छोषणादिकम् ।
अस्त्रमन्त्रेण रक्षाञ्च प्रणमय्य गुरूंस्ततः ॥ ३९ ॥
न्यासाख्यं परमं मन्त्रं वाचयित्वाथ बोधयेत् ।

स्थानेत्यादि । हेत्याहुतीनां स्थाने पुनर्मूलमन्त्राहुतीर्हुत्वा अथ हेतिभिरित्युक्तक्रमेण हेत्याहुतिस्थाने मूलमन्त्राहुतीर्हुत्वे-त्यर्थः । ततो देवाय हविर्निवेद्य तच्छेषेण तथा मूलमन्त्रेण हुत्वा-ज्यमित्युक्तप्रकारेण आहुतीर्हुत्वाथ गुरुः सशिष्यः शिष्यस-हितः सन् साग्निं देवं प्रदक्षिणं कृत्वा अग्निं देवञ्च प्रदक्षिणी कृत्येत्यर्थः । प्रणम्य साग्निं देवं प्रणम्य पुनरासीनः सन् प्रणि-पत्य प्रणिपातं कृत्वा उपसेदुषः उपसंनस्य शिष्यस्य संहारादि-क्रमं कुर्यात्संहारादिन्यासं कुर्याद्विधिवद्यथाविधि शोषणा-दिकञ्च कुर्यादादिशब्देन दाहसंप्लावने गृह्येते अस्त्रमन्त्रेण रक्षाञ्च कुर्यात्ततोऽनन्तरं गुरून् प्रणमय्य गुरुपरम्परां प्रणामं कारयित्वा ततोऽनन्तरं न्यासाख्यं न्यासशब्दवाच्यं परम्पराम-स्मादिति परमं सकृदाचार्य्योच्चारणानुकरणमात्रेण मोक्षपद-तया सत्यन्तद्रूपञ्च सकृदुच्चारो भवतीत्यादिश्रुतिप्रसिद्धवैभवं मंत्रं वाचयित्वा बोधयेज्ज्ञापयेदिति सार्द्धत्रयश्लोकस्यार्थः ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥

श्रीमन्नारायणः स्वामी दासस्त्वमसि तस्य वै ॥ ४० ॥
परमीप्सुस्तमेवार्थमनुकूलो विवर्जयेत् ।
प्रातिकूल्यं सुविस्रब्धः संप्राथ्यं शरणं हरिम् ॥ ४१ ॥
व्रज तस्यैव चरणौ तत्रैवात्मानमर्पय ।
इति सम्बोधितस्त्वेवं मन्त्रेणत्मानमर्पयेत् ॥ ४२ ॥

बोधनप्रकारमाह-श्रीमन्नारायण इत्यादि । श्रीमन्नारायणः लक्ष्म्या नित्ययुक्तः नारायणः स्वामी 'मिथुनाविष्टमेकशेषित्व-मित्यर्थः त्वं तस्य दासः शेषिमिथुनशेषभूतोऽसि । परमुत्कृष्टतमेवार्थमीप्सुः श्रीमन्नारायणरूपपुरुषार्थं प्राप्तुमिच्छुः । अनुकूलः अनुकूल्यसङ्कल्पविशिष्टः । प्रातिकूल्यं विवर्जयेत् । सुविस्रब्धः रक्षिष्यतीति विश्वासयुक्तः । तस्य श्रीमन्नारायणस्य चरणावेव परं शरणं व्रज संप्राप्य उपायत्वेनाध्यवस्य संप्रार्थ्येति पाठे त्वं मे गोपायिता स्या इति संप्रार्थ्येत्यर्थः । तत्रैव चरणयोरेवात्मानमर्पय आत्मसमर्पणं कुर्वित्येवं सम्बोधितः आचार्येण बोधितः मन्त्रेणैव द्वयेनैवात्मानम् अर्पयेत् । श्रीमन्नारायणो ह्यात्मनिक्षेपं कुर्यादिति सार्द्धश्लोकद्वयार्थः ॥ ४० ॥ ४१ ॥ ४२ ॥

ततश्च व्यापकान्मन्त्रानन्यांश्चाङ्गैः समन्वितान् ।
दत्त्वास्मै पुनरेवैवं गृहीत्वा वृत्तिमादिशेत् ॥ ४३ ॥

ततश्चेति । व्यापकान् षडष्टद्वादशाक्षरान् अङ्गैर्न्यासादिभिः समन्वितान् अन्यान् अव्यापकांश्च मन्त्रानस्मै शिष्याय दत्त्वा पुनरेव एनं शिष्यं गृहीत्वा वृत्तिमादिशेत् उपदिशेत् ॥ ४३ ॥

नित्यं विष्णुपरं कर्म कुरु निंद्यानि मा कृथाः ।
सदात्मानं विबुध्यस्व मा कामेषु मनः कृथाः ॥ ४४ ॥

वृत्युपदेशप्रकारमाह-नित्यमिति विष्णुं परं भगवदाज्ञाकैङ्कर्यरूपं नित्यं कर्म कुरु अनेन विहिताचार उक्तः निन्द्यानि निषिद्धानि मा कृथाः । अनेन निषिद्धवर्जनमुक्तम् । सदात्मानं विबुध्यस्व स्वरूपतो दुर्द्धषतमश्च निर्विकारं परमात्मानम् विबुध्यस्व अनेन दृष्टिः । कामेषु मनो मा कृथाः । अनेन दृष्टिविरुद्धवर्जनमुक्तम् ॥ ४४ ॥

यजस्व नित्यमात्मेशं मानंसीरन्यदेवताः ।
लक्ष्यस्व लक्षणैर्भर्तुर्लक्षिष्ठा मान्यलक्षणैः ॥ ४५ ॥

यजस्वेति । नित्यमात्मेशं नारायणं यजस्व अनेन भक्तिरुक्ता अन्यदेवता देवतान्तराणि मानंसीः । अनेन भक्तिविरुद्धवर्जनमुक्तम् । भर्तुर्नारायणस्य लक्षणैश्चक्रादिभिर्लक्ष्यस्व । अन्यलक्षणैर्देवतान्तराचिह्नैर्मालक्षिष्ठाः । अनेन लक्ष्मविरुद्धवर्जनमुक्तम् ॥ ४५ ॥

उपास्स्व वैष्णवान्नित्यमसतो मोपसीसरः ।
गुरुं प्रणम्योमित्युक्त्वा ह्यात्मानञ्च निवेदयेत् ॥ ४६ ॥

उपास्स्वेति । नित्यं वैष्णवान् उपास्स्व अनेन सतां सेवोक्ता-असतः पारमैकान्त्यविमुखान् मोपसीसरः अनेन सत्सेवाविरुद्धवर्जनमुक्तम् । असतो मोपसीसर इत्यन्तस्य सार्द्धश्लोकद्वयस्य वृत्तिमादिशोदित्यनेन पूर्वस्थितेनान्वयः अनन्तरं शिष्यः प्रीत्या देवं भगवन्तं प्रणम्य इत्यात्मानं निवेदयेदिति श्लोकत्रयार्थः । प्रत्यादेशं प्रणम्योमित्युक्त्वात्मानमिति पाठे नित्यं विष्णुपरं कर्म कुरु इत्याद्युपदेशेषु प्रत्युपदेशमोमित्युक्त्वात्मानं गुरवे निवेदयेत् तवाहमस्मीति निवेदयेदित्यर्थः ॥४६॥

ततः समापिते शेषे देवमात्मानि निक्षिपेत् ।
गुरुं विधिवदभ्यर्च्य वैष्णवान्परितोषयेत ॥ ४७ ॥

तत इति । अनन्तरं शेषे होमशेषे समाप्ते सति देवं भगवन्तमात्मनि निक्षिपेत् स्वहृदये न्यसेत् । विधिवद्यथाविधि । गुरुमभ्यर्च्य वैष्णवाँस्तोषयेत् भोजनदक्षिणादानादिना परितुष्टान् कुर्यात् ॥ ४७ ॥

योजयिष्यन् गुरुः शिष्यं नित्यार्चनविधौ हरेः ।
शोभनेऽहनि नक्षत्रे देवमभ्यर्च्य पूर्ववत् ॥ ४८ ॥

अथ यागसंस्कारमाह-योजयिष्यन्निति । गुरुः शिष्यं हरेर्नित्यार्चनविधौ योजयिष्यन् शोभनेऽहनि दिवसे शोभने नक्षत्रे पूर्ववत् मन्त्रसंस्कार इव । देवं नारायणमभ्यर्च्य ॥ ४८ ॥

मन्त्रवत्तु हुतं हुत्वा निष्ठयाथोपसादितम् ।
यथोक्तविधिना पूर्वं स्थापितं शुभविग्रहम् ॥ ४९ ॥

मन्त्रवदिति । मन्त्रवत् मन्त्रसंस्कार इव हुतवहं हुत्वा नित्योपासनं कृत्वा तदनन्तरं मन्त्रेण संस्कारोक्तप्रकारेण आज्याहुतीरन्नाहुतीश्च हुत्वेत्यर्थः । निष्ठया आवरणेन उपसादितम् । उपवेदितमित्यन्यः पाठः । यथोक्तविधिना प्रतिष्ठाशास्त्रोक्तप्रकारेण पूर्वमेव स्थापितं शुभविग्रहम् ॥ ४९ ॥

श्रीभूमिलीलासहितं परिवारैः समन्वितम् ।
अव्यक्तपरिवारं वा देवं संग्राह्य याजयेत् ॥ ५० ॥

श्रीभूमीति । श्रीभूमिलीलासहितं परिवारैर्भूषणायुधपरिजनपरिच्छदानन्तगुरुविष्वक्सेनानन्तपार्षदचण्डादिद्वारपालकुमुदादिगणाधिपतिभिः समन्वितम् । अव्यक्तपरिवारं वा अविग्रहपरिवारकं वा देवं नारायणं संग्राह्य याजयेत् यजनं कारयेत् । परिकराणामव्यक्तत्वं च परिवारबिम्बराहित्येन मनसा चिन्त्यमानत्वमिति श्लोकत्रयार्थः ॥ ५० ॥

श्रौतदिव्यार्षकल्पानामिष्टेनान्यतमेन च ।
स्थापनं यजनं वापि मिश्रा ह्यत्राधिकारिणः ॥ ५१ ॥

श्रौतेति । श्रौतादिकल्पे मिश्राव्यामिश्रार्षकल्पानां मध्ये अन्यतमेनेष्टेन स्थापनं प्रतिष्ठापनं यजनमपि कर्त्तव्यं हि यस्मात् कारणात् । अत्र श्रौतादिकल्पे मिश्रा व्यामिश्रार्षयाजिनोऽप्यधिकारिणः । श्रौतादिव्यार्षकल्पेषु मिश्राणामप्यधिकारात् तेष्विष्टेष्वन्यतमेन स्थापनं यजनं च कर्त्तव्यमित्यर्थः ॥ ५१ ॥

ततः परिगृहीतेन गुरुभिर्येन केनचित् ।
विधिना याजयित्वैवमथ शेषं समापयेत् ॥ ५२ ॥

एवं श्रौतदिव्यार्षकल्पानामन्यतमपरिग्रहस्येच्छानिबन्धनत्व मुक्त्वा इदानीं यथा गुरुसम्प्रदायमन्यतमपरिग्रह इत्याह–तत इति । गुरुभिः परिगृहीतेन येन केन विधिना याजयित्वा शेषं समापयेत् ॥ ५२ ॥

ततः स्वकाले स्वाध्यायं ततो योगं च कारयेत् ।
इज्यान्ते गुरुपूजां च वैष्णवानां च तर्पणम् ॥ ५३ ॥

तत इति । स्वकाले स्वाध्यायकाले अनुयागानन्तरं काले स्वाध्यायं कारयेत् । ततः स्वकाले योगकाले योगं च कारयेत् ॥ ५३ ॥

केचिच्चतुर्णां पूर्वेषां क्रमं नेच्छान्ति कर्मणाम् ।
सहैकदिवसे वाब्दे त्रीणि चत्वारि पञ्च वा ॥ ५४ ॥

केचिदिति । केचिन्मुनयः पूर्वेषां चतुर्णां तापपुण्ड्रनाममन्त्र संस्काराणां क्रमं नेच्छन्ति । एकदिवसे द्वौ संस्कारौ वा कुर्वीत त्रीणि वा चत्वारि वा पञ्च वा कुर्य्यात् ॥ ५४ ॥

तदान्यतमहोमान्ते कृत्वाग्न्याद्युपसन्मुखम् ।
समापयेत्प्रधानं च न मन्त्रस्यान्यशेषता ॥ ५५ ॥

तदेति । तदा संस्काराणां चतुर्णां क्रममुपेक्ष्य एकस्मिन्नेव दिवसे सहानुष्ठानपक्षे अन्यतमहोमान्तेन संस्कारचतुष्टयेऽप्यन्यतम संस्कारहोमान्ते अग्न्याद्युपसन्मुखं संस्कारान्तरमहाग्निमुखं कृत्वा प्रधानम् अन्यतमसंस्कारहोमं समापयेत् । तन्त्रस्य मन्त्रसंस्कारस्य अन्यशेषता संस्कारान्तरशेषभावो नास्ति संस्कारान्तरानन्तरमेव मन्त्रसंस्कारो न संस्कारान्तरात्पूर्वं मन्त्रसंस्कार इत्यर्थः ॥ ५५ ॥

यद्येकदिवसे पञ्च तथा मन्त्राहुतेः परम् ।
कृत्वा यागान्तमखिलं तन्त्रशेषं समापयेत् ॥ ९६ ॥

न मन्त्रस्यान्यशेषतेति सामान्योक्तायां संस्कारानन्तरं मन्त्रसंस्कारप्राप्तौ तां निषेधति–यदीति ।एकादिवसे पञ्चापि संस्कारा यदि क्रियन्ते तदा मन्त्राहुतेः परं मन्त्रसंस्कारात्परमेव यागान्तरमखिलं कृत्वा समापयेत् । पृथगग्निमुखं यागाहुत्यादिकं न कर्तव्यमित्यर्थः ॥ ९६ ॥

एकदेशयुतोऽप्यन्यसंस्काराणां गुणान्वितः ।
युक्तः परमसंस्कारैः स वै भागवतः स्मृतः ॥ ९७ ॥

एकदेशेति । अन्यसंस्काराणां मध्ये एकदेशयुतः कतिपयसंस्कारयुक्तोऽन्यसंस्काराणां गुणान्वितः परमसंस्कारैः तापादिसंस्कारैः सर्वैर्युक्तो भागवतः स्मृतः एकदेशवैकल्यादिना भागवतत्वमित्यर्थः ॥ ९७ ॥

तापस्तपांसि तीर्थानि पुण्ड्रं नाम नमस्क्रिया ।
आम्नायाः सकला मन्त्राः क्रतवः पूजनं हरेः ॥ ९८ ॥

अथ परमसंस्कारप्रशंसा–ताप इति । तापस्तपांसि तापसंस्कारः सर्वतपःसमानः । तीर्थानि पुण्ड्रधारणम् । सर्वतीर्थावगाहनसदृशमेवमुत्तरत्रापि नाम भगवन्नाम नमस्क्रिया । मन्त्रः मन्त्राध्ययनं सकलवेदाः सर्वे वेदाः । हरेः पूजनं क्रतवो यज्ञाः। यद्वा तापस्तपांसीत्यादिना 'तमेतं ब्राह्मणवेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादिकमुक्तं वेदानुवचनादिकं प्रपत्त्या नाङ्गं वक्ष्यति इति यजेत ॥ ९८ ॥

वृत्तिर्भागवतानां हि सर्वा भगवतः क्रियाः ।
प्रायश्चित्तिरियं तस्याः सैव यत्र क्रियते पुनः ॥ ९९ ॥

नन्वेवं तापादीनां तपआदिरूपत्वात विहिताचारा-द्यात्मिका वृत्तिरनुष्ठेयैव न स्यादित्यत आह–वृत्तिरिति। भागवतानां सर्वा वृत्तिर्विहिताचाराद्यात्मिका सर्वापि भगवतः क्रिया भगवत्कैंकर्यरूपा वृत्तिस्तु कैङ्कर्यतयानुष्ठानं न प्रपत्त्यङ्गतया इति भावः। तस्या वृत्तेरननुष्ठिताया इति शेषः सैव वृत्तिरेव पुनः क्रियत इति; एवमेव प्रायश्चित्तिः पुनस्तदनुष्ठानमेव प्रायश्चित्तमित्यर्थः।न चात्रवृत्त्यननुष्ठाने दोषाभाव उच्यते। 'अपराधेषु सर्वेषु वृत्त्यंगानां यथाविधि' इत्यादिना प्रायश्चित्तोपदेशात् किन्तु प्रमादाल्लोपेन भयानुतापे पुनस्तदनुष्ठानेन तत्समाधानं भविष्यतीत्यत्र तात्पर्यम्।यद्वा तस्यावृत्त्यात्मकभगवत्प्रातिकीयाया अननुष्ठितायाः सैव परमादिशान्तिरूपा भगवत्क्रियैव प्रायश्चित्तिरित्यर्थः॥ ५९॥

तस्मादाराधनं विष्णोः शान्तिकर्म विधीयते।
तथैव विष्णुभक्तानां पूजनं शान्तिरुत्तमा ॥ ६०॥

ममैवार्थं स्पष्टयति–तस्मादिति। तस्मात्प्रत्यवायविरहितया भगवदाराधनात्मकतया धर्मानुष्ठानस्य प्रसिद्धत्वात 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इत्याद्यनुसन्धेयम्। भगवदाराधनात्मकधर्मानुष्ठानलोपे तस्य विष्णोराराधनमेव शान्तिकर्म विधीयते।तथैव विष्णवाराधनवदेव विष्णुभक्तानां पूजनमुत्तमा शान्तिः। भगवत्पूजनं शान्तिमात्रम्। भगवतः पूजनमुत्तमम्। शान्तिरित्यर्थः॥ ६०॥

मन्त्रसंस्कारयुक्तस्य न चेत्तापादिकं तदा।
परमाख्या भवेच्छान्तिरविभागे सतामपि॥ ६१॥

मन्त्रेति।मन्त्रसंस्काराादियुक्तस्य तापादिसंस्कारो न चेत॥६१॥

परमाख्याथ वैयूही मूर्त्याख्या वैभवीति च ।
आनन्ती गारुडी चैव वैष्वक्सेनी सुदर्शनी ॥ ६२ ॥

अथ शान्तीरनुक्रमते–परमाख्येति । एतासां स्वरूपमुत्तरत्र वक्ष्यति ॥ ६२ ॥

चतुष्टयी महाशान्तिरुपशान्तिश्चतुष्टयी ।
यथानिमित्तं कर्त्तव्यास्तथान्याः श्रीभुवादयः ॥ ६३ ॥

चतुष्टयीति । 'परमाख्याथ वैयूही मूर्त्याख्या वैभवीति चे'त्येतच्चतुष्टयी महाशान्तिः । 'आनन्ती गारुडी चैव वैष्वक्सेनी सुदर्शनी' चेत्येतच्चतुष्टयी उपशान्तिः । एताश्च शान्तयो यथानिमित्तं कर्तव्याः । लघुनिमित्ते लघुशान्तिः । गुरुनिमित्ते गुरुशान्तिः । प्रयोज्येत्यर्थः । तथा तद्वत् अन्याः श्रीभुवादयः श्रीभूशान्त्यादयः यथानिमित्तं कर्तव्याः । आदिशब्देन परा शान्तिरुच्यते । 'गुरूंस्तदर्चाविप्रान्वा विधिनाभ्यर्च्य शक्तितः । यद्द्द्यात्सा परा शान्तिः सर्वपातकनाशिनी' इति भूशान्त्यनन्तरं वक्ष्यमाणत्वात् । श्रीभुवादय इतिच्छान्दसत्वात्साधु ॥ ६३ ॥

दानहोमजपार्चानामेकद्वित्र्यखिलान्वयात् ।
नैकभेदविभिन्नास्ताः पात्रोत्कर्षश्च शक्तितः ॥ ६४ ॥

दानेति । दानहोमजपार्चानां मध्ये एकद्वित्र्यखिलान्वयात् एकमात्रान्वयात् द्विमात्रान्वयात्, त्रिमात्रान्वयात, सकलान्वयाच्च नैकभेदविभिन्ना अनेकभेदभिन्नाः स्युः।पात्रोत्कर्षं कुर्यादित्यर्थः।एकैका शान्तिर्दानादिषु एकद्वित्र्यादियोगेन बहुविधा भवति। तत्रापि पात्रोत्कर्षः शक्त्यनुसारेण भवति । एकैकस्थाने पात्राणां बहूनां वरणं पात्रोत्कर्षः स च शक्तितो भवति शक्तौ सत्याम् बहूनां वरणं शक्त्यभावे एकैकस्यैव वरणमित्यर्थः॥६४॥

हीनाः परमसंस्कारैर्दैवतान्तरबुद्धयः।
ऋत्विजो यजमानाश्च च्यावयन्ति परस्परम्॥ ६५ ॥

अनुक्रान्तेषु ऋत्विग्भिर्यजमानैश्च परमैकान्तिभिरेव भवितव्यमित्याह—हीन इति। परमैः संस्कारैः तापादिभिर्हीनः देवतान्तरबुद्धयः अन्यदैवतयाजिनः परस्परं च्यावयन्ति ऋत्विजो यजमानाश्च च्यावयन्तीत्यर्थः ॥ ६५ ॥

अपराधेषु सर्वेषु वृत्त्यङ्गानां यथाविधि।
वृत्तेश्च परिपोषाय शान्तिं शश्वत्प्रयोजयेत् ॥ ६६ ॥

अपराधोष्विति। वृत्त्यङ्गानामपराधेषु सर्वेषु वृत्तेः परिपोषाय च यथाविधि शान्तिं शश्वत्प्रयोजयेदित्यन्वयः। वृत्त्यङ्गानामपराधो नाम तदकरणं तद्विरुद्धकरणम्। वृत्तेः परिपोषो नाम तत्प्रतिबन्धकदुरितनिरसनद्वारा आवर्तनम् ॥ ६६ ॥

करणे प्रतिषिद्धानां विहिताकरणे तथा।
विधेया महती शान्तिर्विज्ञाय गुरुलाघवम् ॥ ६७ ॥

कुत्र निमित्ते काशान्तिः कर्तव्येत्यपेक्षायामाह—करण इति। विहिताकरणे प्रतिषिद्धानां च करणे महती शान्तिर्विधेया परमादिमहाशान्तिष्वन्यतमा कर्तव्येत्यर्थः। तत्रापि गुरुलाघवं विज्ञाय विधेया। अल्पनिमित्ते अल्पव्ययायाससाध्या शान्तिः कर्तव्या। अधिकनिमित्ते बहुवित्तव्ययायाससाध्या कर्तव्येत्यर्थः ॥ ६७ ॥

अवैष्णवेभ्यो यत्किञ्चित्प्रतिगृह्य प्रदाय वा।
कृत्वोपशान्तिं शुद्ध्येत परिवादे सतामपि ॥ ६८ ॥

अवैष्णवेभ्य इति। अवैष्णवेभ्यः पारमैकान्त्यरहितेभ्यः यत्किञ्चित्प्रतिगृह्य प्रदाय वा उपशान्तिमानन्तीं गारुडीं वैष्ण-

क्सेनीं सौदर्शनीं वा उपशान्तिं कृत्वा शुद्ध्येत सतां परमैकान्तिनां परिवादेऽपि निमित्ते एषु महाशान्तिं कृत्वाप्युपशांतिं कुर्यादित्यर्थः ॥ ६८ ॥

असतः प्रतिगृह्णीयात्पुत्रदारादिकं यदि ।
विधाय परमां शान्तिं वृत्तिमाचारयेन्निजाम् ॥ ६९ ॥

असत इति । असतो परमैकान्तिन इति पञ्चमी । तस्मात्पुत्रदारादिकं यदि गृह्णीयात् अपरमैकान्तिनः पुत्रं स्वयं यदि पुत्रत्वेन गृह्णीयात्तत्पुत्रीं यदि भार्यात्वेन गृह्णीयादित्यर्थः । तदा परमां परमाख्यां शान्तिं विधाय निजां वृत्तिमाचारयेत् । असत्परिगृहीतपुत्रदारादीन् स्ववृत्तीन्कारयेदित्यर्थः ॥ ६९ ॥

भजने चान्यदेवानामपचारे च शार्ङ्गिणः ।
वैयूहीं परमां वापि कुर्य्याच्छांतिं विशुद्धये ॥ ७० ॥

भजन इति । अन्यदेवानां भजने शार्ङ्गिणोऽपचारे तदिष्टाकरणानिष्टाकरणरूपे अपचारे च विशुद्धये वैयूहीं परमां वापि शान्तिं कुर्यात् ॥ ७० ॥

लक्षणानामकरणे धारणे चान्यलक्ष्मणाम् ।
मूर्तिं कुर्यान्महाशांतिमपि सौदर्शनींतथा ॥ ७१ ॥

लक्षणानामिति । लक्षणानां तापादिवैष्णवचिह्नानामकरणे अधारणे अन्यलक्षणानामवैष्णवचिह्नानाञ्च धारणे मूर्तिं महाशान्तिं कुर्यात् । सौदर्शनीमुपशान्तिं वा कुर्यात् इदञ्च निमित्तगुरुलाघवानुसारेणेति मन्तव्यम् ॥ ७१ ॥

अपचारे गुरूणां च वैष्णवानाञ्च सर्वशः ।
वैष्वक्सेन्यथ वानन्ती कार्य्या चासन्निषेवणे ॥ ७२ ॥

अपचार इति । गुरूणां वैष्णवानां सर्वशोऽपचारे सर्वेष्वपचारेषु असन्निषेवणे च वैष्वक्सेनी आनन्ती वा शान्तिः कार्या ७२

असच्छास्त्राभियोगे तु सच्छास्त्राणां निराकृतौ।
कर्त्तव्या गारुडी शांतिर्दुर्निमित्तेषु वैभवी ॥ ७३ ॥

असदिति । असच्छास्त्राभियोगे असच्छास्त्रपरिग्रहे सच्छास्त्राणां निराकृतौ निराकरणे च गारुडी शान्तिः कर्त्तव्या दुर्निमित्तेषु प्रादुर्भूतेषु वैभवी शान्तिः कर्त्तव्या ॥ ७३ ॥

अवैष्णवस्य भुक्तान्नमनिवेदितमेव वा।
पीत्वा पादोदकं भक्त्या वैष्णवानां विशुद्ध्यति ॥७४॥

अवैष्णवस्येति। अनिवेदितं भगवते अनर्पितम्। अवैष्णवस्यान्नं तच्च भुक्त्वा वैष्णवपादोदकं पीत्वा प्राश्य विशुद्ध्यतीति शान्तेरेव विहितत्वात। अतो वैष्णवानामेव गृहे अवैष्णवैः तण्डुलादिकं तत्पाकद्रव्यादि यन्नीतमवैष्णवान्नं तच्च भुक्त्वा वैष्णवानां पादोदकं पीत्वा विशुद्ध्यति यद्वा; अवैष्णवान्नं तत्पक्वमेव अज्ञानेन प्रमादात्सकृद्भुक्तश्चेद्वैष्णवपादोदकपानं तत्र प्रायश्चित्तमित्युच्यते। तदर्थं शान्त्यनुष्ठानानन्तरं वैष्णवपादोदकपानं विधीयते इति वा मन्तव्यम् ॥ ७४ ॥

सर्वपातकसंप्राप्तौ श्रियं गारुडमेव वा।
समभ्यर्च्य विधानेन तच्छेषं प्राश्य शुद्ध्यति ॥ ७५ ॥

सर्वेति। सर्वपातकसम्प्राप्तौ विशिष्य शान्तिनिदानपातकान्तरसम्प्राप्तौ श्रियं लक्ष्मीं गां भूमिं गुरुम् आचार्यं वा विधानेन विधिना समभ्यर्च्य तच्छेषं प्राश्य भुक्त्वा शुध्यति। श्रीशान्तिं भूशान्तिं वा अनुक्तशान्तिकेषु निमित्तेषु कुर्यादित्यर्थः ॥७५॥

देवतान्तरशेषंतु भुक्त्वा स्पृष्ट्वापि वा पुनः।
वैष्वक्सेनीं क्रियां कृत्वा तच्छेषं प्राश्य शुद्ध्यति॥७६॥

देवतेति। देवतान्तरशेषं भुक्त्वा स्पृष्ट्वा वा वैष्वक्सेनीं शान्तिं त्वा तच्छेषं प्राश्य शुद्ध्यति ॥ ७६ ॥

पीत्वानैकान्तिनां सोमं सह पंक्तौ प्रभुज्य च ।
कृतश्च तेन भुक्त्वान्नं वैयूहीं प्राप्य शुद्धयति ॥ ७७ ॥

पीत्वेति । अनैकान्तिनां सोमं पीत्वा अवैष्णवानां यागेषु आर्त्विज्यं कृत्वेत्यर्थः । अनैकान्तिनां पंक्तौ तैः सह प्रभुज्य भुक्त्वा च तेन अवैष्णवेन कृतं पक्वमन्नं भुक्त्वा च वैयूहीं शान्तिं प्राप्य शुद्धयति ॥ ७७ ॥

विप्रानैकान्तिनः प्राज्ञानृत्विजः शान्तिकर्मसु ।
गोभूधान्यहिरण्याद्यैः प्रभूतैः परितोषयेत् ॥ ७८ ॥

विप्रानिति । शान्तिकर्मसु नियुक्तान्प्राज्ञान् एकान्तिन ऋत्विजः शान्त्यनुष्ठानानन्तरं प्रभूतैः सुसमृद्धैः गोभूधान्यहिरण्याद्यैः परितोषयेत् ॥ ७८ ॥

अन्ते चैषां प्रकुर्वीत सर्वेषां शान्तिकर्मणाम् ।
नारायणस्य परमां प्रपत्तिं सर्वपूरणीम् ॥ ७९ ॥

अन्त इति । एषां सर्वेषां शान्तिकर्मणामन्ते परमां सर्वपूरणीं सकलन्यूनांशपरिपूरणीम् नारायणस्य प्रपत्तिं कुर्वीत न्यूनाधिकप्रत्यवायप्रशमनार्थं प्रपत्तिमनुतिष्ठेदित्यर्थः ॥ ७९ ॥

शान्तिं पुण्येषु देशेषु स्वक्षेत्रे स्वगृहेऽपि वा ।
कुर्यात्पुण्येषु कालेषु स्वजन्मादिषु वा पुनः ॥ ८० ॥

शान्तिमिति । स्वजन्मादिषु स्वजन्मनक्षत्रजन्मदिवसादिषु ८०

ध्यायन्नाधारशक्त्यादिपारिषद्यान्तदेवताः ।
नामभिर्वरयेद्विद्वान्परमायां विपश्चितः ॥ ८१ ॥

॥ अथ शान्तीनां स्वरूपमाह-ध्यायन्निति । परमायां शान्तौ आधारशक्त्यादिपारिषद्यान्तदेवताः आधारशक्तिमुपक्रम्य पारिषद्यपर्यन्ताः देवताः ध्यायंस्तत्तन्नामभिः विपश्चितो विप्रान्

वरयेत् । आधारशक्त्यादिपारिषद्यान्तदेवताश्च भगवद्भाष्यकारोक्तनित्ये अनुसन्धेयाः ॥ ८१ ॥

आसनेषु यथाकाममुपवेश्य यथाक्रमम् ।
पाद्यमर्घ्यं तथा भोगान्दद्यात्तेभ्यश्च मन्त्रतः ॥ ८२ ॥

आसनेष्विति । आसनेषु आधारशक्त्याद्यधिष्ठानेषु वृत्तान्विप्रान्यथाक्रमं क्रममनतिक्रम्य आसनेषु यथाकामं यथासुखमुपवेश्य तेभ्यः स्वमन्त्रतः आधारशक्त्यै नम इत्यादिभिः तत्तन्मन्त्रैः तत्तत्स्थाने वृत्तेभ्यः तेभ्यः पाद्यमर्घ्यं तथा भोगाँश्च दद्यात् ॥ ८२ ॥

स्नातेभ्यश्च यथाकामं वस्त्रभूषानुलेपनम् ।
माल्यानि धूपदीपौ च दद्याद्भक्त्या धनानि च ॥८३॥

स्नातेभ्य इति। यथाकामं यथामनोरथम् । स्पष्टमन्यत् ॥८३॥

अष्टोत्तरशतावृत्त्या जपं होमं च कारयेत् ।
स्थण्डिले तत्तदर्चां च सर्वं कुर्वीत वा स्वयम् ॥ ८४ ॥

अष्टोत्तरेति । अधारशक्त्यादिस्थाने वृतैर्ब्राह्मणैस्तत्तन्मन्त्रस्य अष्टोत्तरशतावृत्त्या होमञ्च कारयेत । स्थण्डिले आधारशक्त्यादिस्थण्डिले । तदर्चाम् आधारशक्त्याद्यर्चाञ्च कारयेत् । सर्वं जपहोमार्चादिकं स्वयं वा कुर्वीत ॥ ८४ ॥

सर्वत्राग्निमुखस्यांते समिदन्नघृताहुतीः ।
भोजयित्वा द्विजवरान्समभ्यर्च्य विसर्जयेत् ॥ ८५ ॥

अष्टोत्तरशतावृत्या होमश्च समिदन्नघृताहुतीनामित्याह— सर्वत्रेति सर्वत्र तन्त्रे मन्त्रे अग्निमुखस्यान्तेऽग्निमुखं कृत्वा तदंते समिदन्नघृताहुतीः दापयेदितिशेषः । अष्टोत्तरशतसंख्या समिदाहुतीस्तत्संख्यया अन्नाहुतीस्तत्संख्ययैव घृताहुतीश्च दापयेदित्यर्थः ॥ ८५ ॥

चतुरो वासुदेवादीन्वैयूह्यां वरयेद्द्विजान् ।
मूर्त्याख्यायां द्वादशैव केशवादीननुक्रमात् ॥ ८६ ॥

चतुर इति। वैयूह्यां शांतौ वासुदेवादींश्चतुरो द्विजान्वरयेत्। वासुदेवसंकर्षणप्रद्युम्नानिरुद्धमन्त्रेषु एकैकेन एकैकं विप्रं तत्तत्स्थाने वरयेत् । मूर्त्याख्यायां शांतौ क्रमेण केशवादिद्वादश तत्तन्मन्त्रैरर्चयेत । अन्यत्सर्वं पूर्ववदुन्नेयम् ॥ ८६ ॥

मत्स्यं कूर्मं वराहञ्च नृसिंहं वामनं तथा ।
वैभव्यां वरयेद्विप्रान्यथेच्छमितरानपि ॥ ८७ ॥

मत्स्यमिति । वैभव्यां शान्तौ मत्स्यं कूर्मं वराहं नृसिंहं वामनं च वरयेत् । यथेच्छम् इच्छायां सत्यां तथा इतरान्परशुरामबलरामकृष्णकल्कीनपि वरयेत् । वरणानन्तरं कर्त्तव्यं परमशान्त्युक्तप्रकारेणैवोन्नेयं सर्वत्र ॥ ८७ ॥

आनन्त्याश्चतुरोऽनन्तशेषनागेन्द्रभूधरान् ।
गारुड्याञ्च गरुडं तार्क्ष्यं वैनतेयं पतत्पतिम् ॥ ८८ ॥

आनन्त्यामिति । आनन्त्यां शान्तौ अनन्तशेषनागेन्द्रभूधरांश्चतुरो वरयेत् । गारुड्यां शान्तौ गरुडं तार्क्ष्यं वैनतेयं पतत्पतिञ्च वरयेत् । अत्र च प्रणवादिचतुर्थीनमोऽन्तानि नामान्येव मन्त्रा ऊह्याः ॥ ८८ ॥

गजाननाद्यैः सहितं विष्वक्सेनं तदर्चने ।
सौदर्शिन्यां शंखगदाशार्ङ्गखड्गैः सुदर्शनम् ॥ ८९ ॥

गजाननेति । तदर्चने । वैष्वक्सेन्यां शान्तौ गजाननाद्यैः सहितं गजाननजयत्सेनहरिवक्त्रकालप्रकृतिसंज्ञादिपारिषद्यसहितं विष्वक्सेनं वरयेदेतन्मन्त्राश्च नित्ये द्रष्टव्याः । सौदर्शन्यां शान्तौ शंखगदाशार्ङ्गखड्गैः सहितं सुदर्शनं वरयेत् । एतन्मन्त्राश्च नित्ये द्रष्टव्याः ॥ ८९ ॥

ऋद्ध्या समृद्ध्या कीर्त्या च श्रीशान्त्यां वरयेच्छ्रियम्।
क्षमां प्रतिष्ठां बहुलां भुवश्चाथ भुवोऽर्चने ॥ ९० ॥

ऋद्ध्येति। श्रीशान्त्याम् ऋद्ध्या समृद्ध्या कीर्त्या च सहितां श्रियम् अर्चयेत्। भुवोर्चने भूशान्तौ क्षमां प्रतिष्ठां बहुलां भुवं चैवार्चयेत्। ९० ॥

गुरूंस्तदर्च्यांन्विप्रान्वा विधिनाभ्यर्च्य शक्तितः।
यद्द्यात्सा पराशान्तिः सर्वपातकनाशिनी ॥ ९१ ॥

गुरूनिति। गुरूनाचार्य्यान् तदर्च्यान् गुर्वर्च्यान्। विप्रान्वा यथाविधि समभ्यर्च्य शक्तितो दद्यादिति। यद्दक्षिणां दद्यात् यत सा सर्वपातकनाशिनी परा शान्तिः ॥ ९१ ॥

प्रधानं स्थण्डिलं मध्ये महावेद्यां प्रकल्पयेत्।
प्रत्यङ्मुखः प्राङ्मुखः सन् सर्वञ्च परिकल्पयेत्॥९२॥

प्रधानमिति। प्रधानं स्थण्डिलं महावेद्यां मध्ये प्रत्यङ्मुखः परिकल्पयेत् अन्यत्सर्वमप्रधानं प्राङ्मुखः परिकल्पयेत्॥ ९२॥

इत्येवं शान्तयः प्रोक्ताः संस्काराश्च द्विजन्मनाम्।
यथार्हमितरेषाञ्च योजनीयः क्रियाविधिः ॥ ९३ ॥

इत्येवेति। अयं श्लोको व्याख्यानं नापेक्षते ॥ ९३ ॥

इतिसंस्कारसम्पन्नः सम्प्राप्य गुरुवश्यताम्।
आराधनं हरेरेव कुर्वाणः कर्म चोदितम् ॥ ९४ ॥

इतीति। इत्युक्तप्रकारेण सर्वसंस्कारसम्पन्नः गुरुवश्यतां सम्प्राप्य हरेरेवाराधनं भगवदेकाराधनरूपं चोदितं विहितं कर्म कुर्वाणः। अनेन विहिताचार उक्तः। हरेरेवाराधन मित्यनेन नित्येष्वपि अग्नीन्द्राद्यन्तर्यामिण एवाराध्यत्वान्न- देवतान्तरसंस्पर्शशङ्का कार्येति द्योत्यते॥ ९४॥

तदप्रीतिकराण्याशु प्रतिषिद्धानि वर्जयेत् ।
पश्यन्सदागमैः स्वेशफलोपायविरोधिनः ॥ ९५ ॥
तथा कुदृष्टिकृपणशास्त्राणि परिवर्जयेत् ।
भक्त्या परमया नित्यमर्चयेत्पुरुषोत्तमम् ॥ ९६ ॥
कुदृष्टिकल्पितान्देवान्कामजांश्च विवर्जयेत् ॥ ९७ ॥

तदिति । तदप्रीतिकराणि भगवच्चित्तकालुष्यकराणि प्रतिषिद्धानि वर्जयेत् अनेन विहिताचारविरुद्धमुक्तम् । पश्यन्निति । सदागमैः सच्छास्त्रैः स्वेशफलोपायविरोधिनः स्वस्वरूपपरस्वरूपफलस्वरूपोपायस्वरूपविरोधिस्वरूपाणि 'पश्यन्कुदृष्टिदृष्टानी' त्यपरः पाठः। तथा अशुद्धदृष्टिदृष्टानि अशुद्धदृष्टिपरिकल्पितानि शास्त्राणि वर्जयेत अनेन दृष्टिस्तद्विरुद्धवर्जनञ्चोक्तम्।भक्त्येति। कामजान् काम्यकर्माणि। अनेन भक्तितद्विरुद्धवर्जने उक्ते। कामदानिति पाठे परिमितफलप्रदान् ब्रह्मादीन्देवानित्यर्थः ॥ ९५ ॥ ९६ ॥ ९७ ॥

धृतोर्द्ध्वपुण्ड्रश्चक्राद्यैरंकितो हरिलाञ्छनैः ।
मुद्रापुण्ड्राङ्कनादीनि तामसानि विवर्जयेत् ॥ ९८ ॥

धृतेति । तामसानि मुद्रापुण्ड्राङ्कनादीनि। तामसानि तामसशास्त्रपरिकल्पितानि मुद्रादीनि । आदिशब्देन वस्त्वाकारा गृह्यन्ते । अनेन श्लोकेन लक्ष्यतद्विरुद्धे उक्ते ॥ ९८ ॥

आचार्यप्रमुखान्नित्यं विशेषेण प्रसादयेत् ।
प्रच्युतान्प्राकृतांश्चैवं सर्वत्र परिवर्जयेत् ॥ ९९ ॥

आचार्येति । प्रसादयेत्प्रसन्नान्कुर्य्यात् । प्रच्युतान् विकलवृत्तीन् अनेन सतां सेवा तद्विरुद्धवर्जनञ्चोक्ते ॥ ९९ ॥

आतिष्ठेत्पारमैकान्त्यमपायानपमार्जयन् ।
अपायवदिहैकान्त्यमशुद्धकरणान्वयात् ।
निरापायं भवेत्प्राप्यं तद्विष्णोः परमं पदम् ॥ १०० ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे द्वितीयोऽध्यायः ॥ २ ॥

आतिष्ठेदिति । अपायानपमार्जयन्निराकुलं पारमैकान्त्यमातिष्ठेत् । इह अस्मिँल्लोके पारमैकान्त्यम् अशुद्धकर्मकरणान्वयात् अपायवत् आपाययुक्तं भवति । पारमैकान्त्यं निरपायम् अपायरहितं यदि भवेत्तदातद्विष्णोः परमं पदं प्राप्यं भवेत् १००

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे टीकायां द्वितीयोऽध्यायः ॥ २ ॥

भूयः स्फुटतरं वक्ष्ये शृणुध्वं मुनिसत्तमाः ।
सनातनीं सतां वृत्तिं परेषां लक्षणानि च ॥ १ ॥

भूय इति । सनातनीम् अविच्छिन्नसम्प्रदायाम् । परेषामसतां लक्षणानि चेत्येव शश्वत्पाठः ॥ १ ॥

सर्वभूतांतरात्मानमीशमाराध्यमच्युतम् ।
बुद्ध्वा चरंति सुधियो धर्मास्तत्प्रीतये परम् ॥ २ ॥

सर्वभूतेति । सुधियो ज्ञानिनः सर्वभूतांतरात्मानं सकलचेतनांतर्याभिणम् । ईशं स्वामिनमच्युतमाराध्यं बुद्ध्वा ज्ञात्वा तत्प्रीतये परं केवलं तत्प्रीतये वर्णाश्रमोदितान् धर्मांश्चरंति सर्वभूतानामन्तरात्मानमित्यनेन सर्वांतर्यामिण एवाराध्यत्वान्नदेवतांतरपरत्वशङ्का कार्येति व्यज्यते । तत्प्रीतये परमित्यनेन साधनांतरान्वया शङ्का व्यावर्त्यते ॥ २ ॥

व्यामुग्धमतयः केचित् क्षुद्रा नानाफलार्थिनः ।
तमेव हि यजन्त्यन्ये तथान्या अपि देवताः ॥ ३ ॥

व्यामुग्धेति। व्यामुग्धमतयोऽज्ञाः अयंच पूर्वश्लोकस्थस्य सुधिय इत्यस्य प्रतिनिर्देशः। नानाफलार्थिनः दृष्टानुश्राविकरूपबहुविधफलाकाङ्क्षिणः। अयंच तत्प्रीतये परमित्येत्यस्य पूर्वश्लोकस्थस्य प्रतिनिर्देशः। अन्याश्च देवता यजंतोऽपि तथा सुधिय इव तमेव भगवंतमेव यजंति। स्वबुद्ध्या देवतान्तरयजनेऽपि वस्तुगत्यातमन्तर्यामिणमच्युतमेव यजन्तीत्यर्थः। तथा च गीतं भगवता 'येप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्,' इति। यद्वा, नानाफलार्थिनः सन्तः तमेवयजन्ति स्वासाधारणविग्रहविशिष्टमेव क्वचित्कर्मणि यजन्ति तथा तद्देवता अपि यजन्ति। न पारमैकान्त्ये तिष्ठन्तीत्यर्थः॥ ३॥

कल्पिताः कर्मबन्धेन विष्णुमायाविमोहिताः।
अपि देवा न जानन्ति स्वात्मानं किमुतापरे ॥ ४॥

यादृशकर्मानुष्ठाननिबन्धनस्याज्ञानस्य चेतनदुष्कर्मनिबन्धनभगवत्संकल्प एव निदानमित्याह—कल्पिता इति। कर्मबन्धेन कल्पिताः विपरीतज्ञानहेतुभूतदुष्कर्मबन्धाः अत एव विष्णुमायया भगवत्सङ्कल्पेन मोहिताः 'दैवी ह्येषा गुणमयी मम माया दुरत्यये' त्युक्तया भगवदधीनया प्रकृत्या विमोहिता इति वार्थः। देवा अपि स्वात्मानं स्वान्तरात्मभूतं नारायणं न जानान्ति अपरे मनुष्यास्तु न जानन्तीति किमु वक्तव्यमिति भावः॥ ४॥

वदन्ति धर्मान्व्यामिश्रान्वेदाः स्कन्धमयाः किल।
श्रुतिर्मोक्षमयी प्राह शुद्धं मोक्षैकलक्षणम् ॥ ५॥

वदन्तीति। स्कन्धमयाः वेदाः अनुवाकोपनिषदात्मकाः व्यामिश्रान्देवतान्तर्यामिण्याराधनात्मकान् काम्याँश्च धर्मान्-

वदन्ति मोक्षमयीति । मोक्षप्रयोजनतया मोक्षप्रचुराश्रुतिः अनुवाकोपनिषदात्मिका मोक्षैकलक्षणं मोक्षैकप्रयोजनकं शुद्धं धर्ममाह ॥ ५ ॥

प्रायेण धर्मान्व्यामिश्रानूचुर्मन्वत्रिपूर्वकाः ।
शुद्धाँस्तु वयमन्ये च पञ्चरात्रपथानुगाः ॥ ६ ॥

प्रायेणेति । व्यामिश्रान धर्मान् शुद्धान् मन्वत्रिपूर्वका ऊचुः। स्कन्धमयवेदोपबृंहणं मन्वत्र्यादिभिः कृतमित्यर्थः । पञ्चरात्रमार्गानुसारिणो वयमन्ये च शुद्धान्धर्मान् पञ्चरात्रमूलवेदोपबृंहणमस्माभिः कृतमित्यर्थः ॥ ६ ॥

व्यामिश्रः पंचरात्रेऽपि धर्मः क्वाप्यनुकृष्यते ।
तत्र चागमसिद्धान्ते शुद्ध एवोपदिश्यते ॥ ७ ॥

व्यामिश्र इति । पञ्चरात्रेऽपि व्यामिश्रो धर्मः क्वापि क्वाचित् स्थले अनुकृष्यते । तत्र पञ्चरात्रेऽपि आगमसिद्धान्तेऽपि विशुद्धधर्म एवोपदिश्यते । मन्त्रे मन्त्रतन्त्राख्ये सिद्धान्ते क्वचित्काचिद्व्यामिश्रधर्मोऽप्युपदिश्यते । आगमसिद्धान्ते तु शुद्धधर्म एवोपदिश्यत इत्यर्थः ॥ ७ ॥

हरेः शुद्धतनोः शुद्धं व्यामिश्रं कल्पितात्मनः ।
अशुद्धं कल्पितानान्तु केवलं यजनादिकम् ॥ ८ ॥

धर्माश्चतुर्विधाः शुद्धाः शुद्धतमाः अशुद्धाः, अशुद्धतमाश्चेति । तेषां स्वरूपाणि क्रमेणाह—हरेरिति । शुद्धतनोरजस्तमःकल्पितशरीरातिरिक्तस्य देवतान्तरान्तर्यामिभावम्। अन्तरेण केवलं भगवदाराधनात्मकं कर्म शुद्धमित्यर्थः । नित्यमुक्तादिशरीरस्य यजनमपि शुद्धमेवेति तेषां रजस्तमःशून्यत्वेन शुद्धतनुत्वात्कल्पितानां रजस्तमःकल्पितानाम् आत्मनः

अन्तर्यामिणः रजस्तमःकल्पिताग्नीन्द्रादिदेवतान्तर्य्यामिभावेन भगवदाराधनव्यामिश्रमित्यर्थः। कल्पितानां केवलं यजनादिकर्मशुद्धम् अन्तर्य्यामिपर्य्यन्तमगत्वा केवलदेवतान्तराराधनमशुद्धमित्यर्थः॥ ८॥

ते ह्यशुद्धतमाः सर्वे तमोनिष्ठतया स्मृताः।
श्रीकण्ठप्रमुखैरुक्ता ये धर्माः कामकामिनाम्॥ ९॥

ते हीति। ये श्रीकण्ठप्रमुखैः कामकामिनां धर्मा उक्ताः; ते सर्वे तमोनिष्ठतया अशुद्धतमाः स्मृताः तामसतन्त्र एव प्रसिद्धाः अशुद्धतमा इत्यर्थः। तमोनिष्ठतयेत्यनेन या वेदबाह्याः; स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठाहिताः स्मृताः इतिवचनमत्र प्रतिज्ञातम्॥ ९॥

त्रैविद्यानां सदामिश्राः प्रायेण विहिताः क्रियाः।
ज्ञानं भक्तिश्च वैराग्यं सर्वं शुद्धमुदाहृतम्॥ १०॥

त्रैविद्यानामिति। त्रैविद्यानां स्कन्धमयवेदनिष्ठानां परमैकान्तिनां प्रायेण प्राचुर्य्येण मिश्राः क्रियाः विहिताः त्रैविद्यानाम्। अपि ज्ञानं भक्तिः वैराग्यश्च शुद्धमेवोदाहृतम्। आज्ञाकैङ्कर्येष्विव देवतान्तर्याम्याराधनं सर्वत्रेत्यर्थः॥ १०॥

न्यासनिर्द्धूतपाप्मानः प्रियैः प्रियतमैरपि।
मिश्रैः शुद्धैश्च नियमैर्विष्णुमाराधयन्ति ये॥ ११॥

न्यासेति। न्यासनिर्द्धूतपाप्मानः प्रपत्तिबलपरिग्रहास्तसकलपापास्ते त्रैविद्याः क्रमेण प्रियैः प्रियतमैरपि मिश्रैः शुद्धैश्च नियमैर्विष्णुमाराधयन्ति। मिश्राः शुद्धाः प्रियाः प्रियतमा इत्यर्थः॥ ११॥

---

(१) प्रेत्य इति पाठान्तरम्।

निन्दितक्रियया हानाद्विहीनानाञ्च कुप्यति।
ऐच्छैरपि पुनः शुद्धैः परं तुष्यति माधवः॥ १२॥

निन्दितेति। विहितानां हानात् त्यागात् निन्दितक्रियया च माधवः कुप्यति। विहिताकरणं निषिद्धाकरणञ्च भगवन्निग्रहजनकम् इत्यर्थः। आज्ञारूपफलानुष्ठानवत् अनुज्ञारूपधर्मानुष्ठानवत् भगवदनुग्रहजनकम् इत्याह। ऐच्छैरिति। ऐच्छैः इच्छायां सत्यामेव कर्त्तव्यैर्न पुनर्नित्यनैमित्तिकाद्यकरणैः प्रत्यवायवद्भिः शुद्धैः देवतान्तरान्तर्यामिविषयत्वशून्यैः दीपारोपणमालाकरणादिभिः माधवः श्रियः पतिः अनेन कैङ्कर्यप्रतिबन्धिमिथुनमिति गम्यते। नित्येष्विव व्यामिश्रिता अनुज्ञामूलास्तु शुद्धा एव कर्त्तव्या इत्यर्थः। यद्वा, निन्दिताक्रियाविहितहानजनितो भगवन्निग्रहः शुद्धधर्मरूपपरमादिशान्त्यनुष्ठानेनापि नापैतीत्युत्तरार्द्धाभिप्रायः॥ १२॥

विशुद्धपरिवारस्य नित्यं शुद्धा हरेः क्रिया।
तयैव शुद्धकर्मेति त्रैविद्योऽपि न गद्यते॥ १३॥

विशुद्धेति। विशुद्धपरिवारस्य रजस्तमःस्पर्शशङ्काविरुद्ध नित्यादिपरिवारयुक्तस्य नित्यमहरहः कर्त्तव्या हरेः क्रिया आराधनात्मिका शुद्धा तयैव नित्यार्चनात्मकक्रिययैव त्रैविद्योऽपि हि व्यामिश्रधर्मानुष्ठातापि शुद्धकर्मेति निगद्यते व्यामिश्रधर्मानुष्ठताप्रपन्नोऽपि देवतान्तरस्पर्शरहितः भगवन्नित्यार्चनानुष्ठातृत्वात् शुद्धकर्मेति मुनिभिरुच्यत इत्यर्थः॥ १३॥

शुद्धो मिश्रस्तथान्यो वा समर्पितभरो हि यः।
सद्यः स वासुदेवस्य कैङ्कर्यानन्दमश्नुते॥ १४॥

शुद्धानुष्ठातुरिव व्यामिश्रानुष्ठातुः परिमोक्षो नियत इत्याह-शुद्ध इति। शुद्धः शुद्धयाजी। मिश्रः मिश्रयाजी अन्य इति व्यामिश्रयाजिविशेषणं शुद्धो वा तथान्यः शुद्धाद्यन्यो व्यामिश्रो वा समर्पितभरः भगवन्न्यस्तात्मीयभरः सद्यो वासुदेवस्य कैङ्कर्यात्मकमानन्दमश्नुते । सद्य इति पदं तत्कालविषये तत्कालपरमेव दृष्टिविषये अविलम्बाभिव्यापकं मन्तव्यम्। शुद्धो मिश्र इत्यादेरेवं वार्थः। शुद्धो व्यामिश्रो वा तथा अन्यः अशुद्धो वा न्यस्तभरः कैङ्कर्य्यानन्दमयमश्नुत इति। शुद्धत्वञ्च भरन्यासानुष्ठानानन्तरभावि मन्तव्यम्। तदुत्तरमशुद्धधर्मानुष्ठानायोगात्। अथवा अन्योऽपीति पाठः। अशुद्धयाज्यपि न्यस्तभरो मुक्तो भवति। किं पुनर्व्यामिश्रयाजीत्येतदभिप्रायः। प्रपन्नस्य दुःखवासनादिना अशुद्धान्वयेऽपि पुनः सत्रपानुतापं ह्यन्वितप्रायश्चित्तान्वयप्रवासेन तमपराधं निवर्त्य समनुष्ठितो भरन्यास एव कैङ्कर्यानन्दं ददातीति वाभिप्रायः ॥ १४ ॥

शुद्धादीनां तु धर्माणामधिकारादियोगतः।
क्रियते पुरुषादीनां व्यपदेशस्तथाविधः ॥ १५ ॥

पुरुषे शुद्धादिव्यपदेशः। शुद्धादिधर्मानुष्ठाननिबन्धन इत्याह शुद्धादीनामिति । शुद्धादीनां धर्माणाम् अधिकारादियोगः आदिशब्दादनुष्ठानं गृह्यते। पुरुषादीनाञ्च तथाविधो व्यपदेशः क्रियते। शुद्धधर्माधिकारी तदनुष्ठाता शुद्ध एवं मिश्राधिकारी मिश्र इत्यवगन्तव्यम् ॥ १५ ॥

एकायने ह्यधिकृताः सर्वे यान्त्यञ्जसा हरिम्।
ये च नानापथेऽन्यत्र प्रतिबुद्धास्तु केचन ॥ १६ ॥

एकायन इति। एकायने मूलवेदे अधिकृताः तदुक्तधर्मानुष्ठातार इत्यर्थः। सर्वे हरिं यान्ति । एकायनस्य मोक्षैकल-

क्षणत्वात् तन्निष्ठाः सर्वेऽपि हरिं प्राप्नुवन्तीत्यर्थः । नानापथे नानामार्गे अन्यत्र तु वेदान्ते तु अधिकृताः केचन प्रतिबुद्धाः न सर्वे । त्रैविद्यास्तु स्वर्गापवर्गादिरूपनानापुरुषार्थतदुपाया-दिप्रतिपादिकतया तत्र त्रिवर्गमात्र एव सर्वे लग्ना भवन्ति केचि-देव सुकृतपरिपालनेन महताम् अपवर्गतदुपायौ ज्ञात्वा हरिं प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

एकायना व्रजन्तोऽपि त्रैविद्या वा स्ववर्त्मना ।
स्खलन्तो दृष्टिवैषम्याच्च्यवन्त्यैकान्त्यतो हरेः ॥१७॥

एकायनानां त्रैविद्यानामपि स्वधर्मात्स्खलने पारमैकान्त्य-हानिस्तुल्येत्याह—एकायना इति । स्ववर्त्मना स्वमार्गेण व्रजंतोऽपि दृष्टिवैषम्यात् विपरीतज्ञानेन स्खलन्तः हरेः पार-मैकान्त्याच्च्यवन्ति । अतः स्वमार्गेणैव गन्तव्यमित्यर्थः॥१७॥

यायाच्छुद्धेन मार्गेण मिश्रेष्वन्यतमेन वा ।
परं भगवदैकान्त्यं पूर्वैराचरितेन वा ॥ १८॥

यायादिति । शुद्धेन मार्गेण परं भगवदैकान्त्यं यायात् । मिश्रेषु व्यामिश्रयोगेषु पूर्वैराचरितेन अन्यतमेन वा भगव-दैकान्त्यं यायात् । व्यामिश्रेषु बहुषु मार्गेषु पूर्वपरिगृहीतेन केनचिद्भगवदाराधनतया धर्माननुतिष्ठतः पारमैकान्त्यमभङ्गुर-मित्यर्थः । पूर्वैराचरितमित्यनेन सूत्रप्रयोगप्रक्रियामुत्सृज्य सूत्रान्तरप्रक्रियापरिग्रहः प्रात्यवायिक इति गम्यते ॥ १८ ॥

यथैवाश्रमिणः पूर्वं व्रजन्त्युत्तममाश्रमम् ।
तथैव शुद्धं त्रैविद्यामिश्रं नैकायनाः पुनः ॥ १९ ॥

व्यामिश्राणां शुद्धे प्यधिकारोऽस्ति शुद्धानां न व्यामिश्र इत्याह—यथैवेति । पूर्वे आश्रमिणः ब्रह्मचार्यादयः उत्तमाश्रमं

गृहाश्रमादिकं यथा व्रजन्ति नोत्तरे पूर्वमाश्रमं तथैव त्रैविद्याः व्यामिश्रा एकायनः पुनः शुद्धास्तु मिश्रं न व्रजन्ति ॥ १९ ॥

ऐच्छश्च नियतश्चेति नित्यनैमित्तिकं तथा।
काम्यश्च विविधं सर्वं शुद्धाशुद्धोभयात्मकम् ॥ २० ॥

ऐच्छमिति । ऐच्छं विहिताकरणप्रत्यवायरहितं दीपारोपणमालाकरणादिनियतं वर्णाश्रमनियतं सन्ध्योपासनपञ्चमहायज्ञादिनित्यम् एकादश्युपवासादिकं यद्यपि नियतमपि नित्यान्तःपात्येव तथापि पृथग्विभागः प्रमाणमेयेत्यादाविव आवश्यकज्ञातव्यत्वात् कृत इति । तथा नैमित्तिकं निमित्ते सति कर्तव्यमुपरागस्नानादिकं विविधं बहुविधं काम्यं कामनोपाधिना कर्तव्यं चित्रचैत्यादिकं सर्वमपि शुद्धाशुद्धोभयात्कं शुद्धात्मकमशुद्धात्मकमुभयात्मकञ्च भवति । उभयात्मकमित्यनेन व्यामिश्रात्मकं विवक्षितम्। ऐच्छादिषु कर्मसु कानिचिच्छुद्धानि कानिचिदशुद्धानि कानिचिद्व्यामिश्राणीत्यर्थः। एतेषु शुद्धेष्वेव एकायनानामधिकारः। त्रैविद्यानां मुमुक्षूणां तु तेषां अशुद्धेष्वधिकारादिति भावः। यद्वा नियतमित्येतस्य, विवरणं नित्यं नैमित्तिकं तथेति;ऐच्छमित्येतद्विवरणं काम्यश्च विविधं सर्वमिति। अन्यत्तुल्यम्॥२०॥

स्वतः सङ्कल्पतश्चापि कर्मणां भिद्यते गतिः।
फलानामिह सर्वेषां प्रदाता स्वयमच्युतः ॥ २१ ॥

न केवलं देवतान्तरविषयत्वेन कर्मणामशुद्धत्वम् । अतद्विषयाणामपि फलकामनया अनुष्ठाने त्वशुद्धत्वमेवेत्याह–स्वत इति। स्वतः स्वरूपेण सङ्कल्पतः स्वरूपभेदाभावेऽपि सङ्कल्पेन च कर्मणां गतिर्भिद्यते। इह फलकर्माणि सर्वेषां फलानां कर्मणि प्रदाता अच्युतो नारायण एव,देवतान्तराराधनरूपतया कृतानामपि कर्मणां फलप्रदाता भगवानेवेत्यर्थः ॥ २१ ॥

यथा कामफला यज्ञाः सृष्टा भगवता स्वयम्।
त एव विदुषां तर्हि निर्वाणाय निराशिषाम् ॥ २२ ॥

सङ्कल्पभेदमात्रेण कर्मगतिभेदं दर्शयति यथेति। भगवता कामफलाः, काम्यत इतिकामः स्वर्गादिः। तत्फलाः यज्ञाः भगवता यथा सृष्टाः यादृक्प्रकाराः सृष्टा अत एव तादृक्प्रकाराः त एव यज्ञा निराशिषां विदुषां निर्वाणतया भवन्ति अतः कामनया यज्ञाद्यनुष्ठानस्याशुद्धत्वान्मुमुक्षुभिः कामनया तदनुष्ठानं न कर्त्तव्यमिति फलितार्थः ॥ २२ ॥

अबुद्ध्वा परमात्मानं हरिमन्या हि देवताः।
ये यजन्ति निरस्ताशास्तेषां ज्ञानाय तच्छनैः ॥ २३ ॥

भगवदाराधनबुद्ध्या अनुष्ठितान्यपि कामनोपाधिमन्तरेणानुष्ठितानि कर्माणि शनैः कालान्तरे ज्ञानसाधनानि भवंतीत्याह अबुद्ध्वेति। हरिं परमात्मानमबुद्ध्वा तत्तद्देवतान्तर्यामितया भगवन्तमाराध्यमबुद्ध्वेत्यर्थः। अन्यदेवताश्च ये निरस्ताशाः निष्कामा यजन्ति भगवद्यजनन्तेषां शनैर्ज्ञानाय भवति। विलम्बेन कालान्तरेण ज्ञानसाधनमित्यर्थः। वस्तुतस्तत्रापि भगवत एवाराध्यत्वात्स एव भगवान्स्वाभाविकसंबन्धेन कृपया शनैर्ज्ञानं ददातीति भावः ॥ २३ ॥

बुद्ध्वापि परमात्मानं पारमैकान्त्यवर्ज्जिताः।
इष्ट्वापि परमैर्यज्ञैः स्थानं यान्ति न शाश्वतम् ॥ २४ ॥

तत्तत्कर्माराध्यस्तत्तद्देवतान्तर्यामीति ज्ञानेऽपि पारमैकान्त्याभावे तु न मोक्षप्राप्तिरित्याह–बुद्ध्वापीति। परमात्मानमन्तर्यामिणमाराध्यं बुद्ध्वापि ये पारमैकान्त्यवर्जिता भवन्ति ते विविधैर्यज्ञैरिष्ट्वापि शाश्वतं स्थानं न यान्ति बहुविधयज्ञानुष्ठानेऽपि पारमैकान्त्यरहितानां परमपदप्राप्तिर्नास्तीत्यर्थः॥२४॥

व्यामिश्राँश्चापि शुद्धाँश्च तत्तत्कालविभागवित् ।
यथान्यायं प्रयुञ्जीत धर्मानैकान्त्यनिष्ठितः ॥ २५ ॥

पारमैकान्त्ये दृढव्रतः सन्नेव यथाधिकारं शुद्धान्व्यामिश्राँश्च धर्माननुतिष्ठेदित्याह—व्यामिश्रानिति । तत्तत्कालविभागवित् अभिगमनादिकालतत्त्वज्ञः । विभागवदिति पाठे विभागयुक्तं यथाभवति तथेति क्रियाविशेषणम् । यथान्यायं यथाधिकारम् ॥ २५ ॥

बुद्ध्वापि परमात्मानमशुद्धं कर्म कामिनाम् ।
शुद्धं सर्वमकामानामेतद्धि परमं मतम् ॥ २६ ॥

न केवलं देवतान्तरत्वमेव पारमैकान्त्यहानिपरम् अपि तु प्रयोजनान्तरत्वमपीत्यभिप्रायवानाह—बुद्ध्वापीति । परमात्मानं बुद्ध्वापि तत्तत्कर्माराध्यं तत्तद्देवतान्तर्यामिणं ज्ञात्वा विद्यमानानामपि कामिनां प्रयोजनान्तरार्थिनां कर्म अशुद्धं परमात्मानं बुद्ध्वा अकामानामनन्यप्रयोजनानां सर्वं शुद्धम् एतत्परमं मतं परमरहस्यमित्यर्थः ॥ २६ ॥

नानाफलक्रियायोगदेवताव्याकुलात्मभिः ।
दुर्ज्ञानं दुरवाप्यञ्च दास्यं विष्णोः परं पदम् ॥ २७ ॥

भगवत्कृपाविधुराणां पुंसां प्रयोजनान्तरोपायान्तरदेवतान्तरव्याकुलचित्तत्वात्तैः स्वयं पुरुषार्थरूपं भगवद्दास्यं ज्ञातुं प्राप्तुं च न शक्यमित्याह—नानेति । नानाफलैर्बहुविधैः प्रयोजनान्तरैर्नानाप्रयोगैः क्रियात्मना नानोपायान्तरैः अनेकविधैः क्रियात्मनोपायान्तरैर्नानाविधैर्दैवतैरनेकदेवतान्तरैश्च व्याकुलात्मभिर्व्याकुलचित्तैश्च परं पदं मोक्षरूपं स्वयं पुरुषार्थमित्यर्थः । विष्णोर्दास्यं दुर्ज्ञानं दुरवाप्यञ्च ज्ञातुं प्राप्तुञ्चाशक्यमित्यर्थः ॥ २७ ॥

यत्तु विश्वपतेर्विष्णोर्नित्यं दासत्वमात्मनः।
तज्ज्ञानन्तत्क्रिया वा तत्प्रसादादेव सिध्यति ॥ २८ ॥

भगवत्प्रसादात्तेषां चित्ते ज्ञानादिकं सिध्यतीत्याह–यत्त्विति विश्वपतेः सर्वलोकानां नायकस्य विष्णोः प्रतिसम्बन्धिनः आत्मनोऽधिकरणस्य स्वस्य यत्तु नित्यं दासत्वं तज्ज्ञानं तस्य दासस्य ज्ञानं तत्क्रिया तदनुगुणकैङ्कर्यं वापि तत्प्रसादात् विष्णोः प्रसादादेव सिध्यति। विश्वपतेरित्यनेन पतिं विश्वस्यैतत्प्रमाणमित्ययम्, आत्मनो दास्यत्वमित्यनेन आत्मेश्वरमित्ययमंशः स्मारितः ॥ २८ ॥

प्रसादनानामीशस्य श्रेयसी शरणागतिः।
तत्प्रधाना हि सिध्यन्ति यथान्याः सकलाः क्रियाः २९

ननु तत्प्रसादादेवेत्युक्तम्। प्रसादनोपायश्च कः ? इत्याह–प्रसादनानामिति। ईशस्य प्रसादनानां प्रसादनोपायानां मध्ये शरणागतिः श्रेयसी परमप्रसादनोपास्तिरस्तीत्यर्थः। तद्वास्यात्सकलाः क्रियाः तत्प्रधाना हि सिध्यन्ति उपायान्तराण्यपि हि अङ्गभावेन प्रपत्त्यनुष्ठानादेव सिद्ध्यन्तीत्यतः श्रेयसी शरणागतिरिति भावः ॥ २९ ॥

यश्चायमात्मनिक्षेपः क्रियते परमात्मनि।
तेनैव हि भरन्यासस्तथा फलसमर्पणम् ॥ ३० ॥

आत्मनिक्षेपापरपर्य्याया शरणागतिः। भरसमर्पणेन फलसमर्पणेनाविनाभूतेत्याह–येनेति। येन येन मन्त्रेण परमात्मन्यात्मनिक्षेपः क्रियते तेन मन्त्रेणैव भरन्यासः कार्यः। तथा फलसमर्पणं कर्त्तव्यमिति शेषः ॥ ३० ॥

य: शरण्यमशेषाणां प्राप्नोति शरणं हरिम् ।
स मुक्तः सर्वपापेभ्यः स्वकुलञ्च समुद्धरेत् ॥ ३१ ॥

भगवन्न्यस्तभरस्य कुलमपि कृतार्थमित्याह य इति । अशेषाणां शरण्यमित्यनेन प्रपत्तेः सर्वाधिकारितोक्ता 'समुक्तः सर्वपापेभ्य' इत्यनेन 'सर्वपापेभ्यो मोक्षयिष्यामि' इति भगवद्वचनं स्मारितम् ॥ ३१ ॥

न तथा विविधैर्दानैर्न तपोभिर्न चाध्वरैः ।
यथैव गुरुतां यान्ति नरा नारायणाश्रयात् ॥ ३२ ॥

सत्कर्मनिरताः शुद्धाः सांख्ययोगव्यवस्थिताः। नार्हन्ति शरणस्थस्य कलां कोटितमामपीत्यभिप्रायेणाह—न तथेति। यज्ञाः पञ्चमहायज्ञाः । अध्वराः ज्योतिष्टोमादयः । गुरुतामुत्कर्षम् ३२

यथैव भगवान्विष्णुर्देवानां परमो गुरुः ।
तथैव हि मनुष्याणां वैष्णवः परमो गुरुः ॥ ३३ ॥

यथैवेति । परमः परमार्थः परा मास्मादिति परमः वैष्णवः परमैकान्ती सामान्यपरत्वेऽपि प्रपन्नविषयेषु गुरुत्वं किं पुनर्न्यायसिद्धमिति भावः ॥ ३३ ॥

न परीक्ष्य वयो वन्द्या नारायणपरायणाः ।
अपि स्युर्हीनजन्मानो मान्या निघ्नेन चेतसा ॥ ३४ ॥

नेति । वयः परीक्ष्य वन्द्याः न स्युर्वयसो नापि वन्द्या एवेत्यर्थः । हीनजन्मानोऽपि स्युरपकृष्टजातिजाता अपि भवन्तु निघ्नेन आयत्तेन चेतसा मान्याः उत्कृष्टजन्मप्रयुक्तमहङ्कारं विहाय प्रतिपत्तिं कुर्यादित्यर्थः ॥ ३४ ॥

समर्पितात्मनः श्रीशे सत्त्वयुक्तेन चेतसा ।
नापायोऽभिभवेत्सन्तं सद्यः प्रशमयेदपि ॥ ३५ ॥

समर्पितेति । सत्त्वयुक्तेन सत्त्वगुणयुक्तेन चेतसा श्रीशे समर्पितात्मनः न्यस्तात्मभरन्यासात् अपायो नाभिभवेत् सत्त्वप्राचुर्य्येण प्रपन्नतया उत्तमाधिकारित्वान्नापायस्तेषु प्रवर्त्तेत इत्यर्थः । सन्तं दैवात्प्राप्तमपायं सद्यः प्रशमयेत । प्रपत्तेर्हि प्रामादिकन्त्वपायम् अपायः प्रपत्तिमाहात्म्यादेव अश्लिष्टो भवतीत्यर्थः । यद्वा, सन्तमित्यनेन कादाचित्कुबुद्धिपूर्वापराध उच्यते । सद्य इति पदञ्चाविलम्बपरम् । अचिरादेव यथोचितप्रायश्चित्तान्वये सद्यः प्राप्तमपायं नाशयतीत्यर्थः । अस्मिन्व्याख्याने तु प्रशमयेदिति स्वरसम् (१) पूर्वव्याख्याने तु सद्य इति पदम् । प्रशमयेदित्यस्य कर्त्ता उत्तरश्लोकस्थमाधवो द्रष्टव्यः । नापायोऽभिभवेदित्यनेन उत्तमाधिकारिणः अपायेष्वन्वय एव नास्तीत्युक्तम् ॥ ३५ ॥

प्रपन्नमपि यं कञ्चित्प्रसक्तं पापकर्मणि ।
चिरात्संयोज्य विनयैः परिगृह्णाति माधवः ॥ ३६ ॥

प्रपन्नमिति । प्रकर्षेण सक्तमनेन बुद्धिपूर्वकोत्तराद्यसंपत्तिरुच्यते । विनयैः काणत्वखञ्जत्वादिशिक्षाभिः संयोज्य सम्यग्योजयित्वा चिरात् परिगृह्णाति चिरात्संयोज्येति यथाश्रुत एवान्वयः । बहुकालानुवर्तिक्लेशैरपायान् कृत्वा परिगृह्णातीत्यर्थः ॥ ३६ ॥

पूर्वेषामुत्तरेषां च न्यासो न्यासाय पाप्मनाम् ।
सर्वेषामपचाराणामयं हि क्ष्मापणं परम् ॥ ३७ ॥

बुद्धिपूर्वोत्तराघे प्राप्तेऽपि अशक्तस्तत्प्रायश्चित्तत्वेन न्यासमेवानुतिष्ठेदित्याह—पूर्वेषामिति । पूर्वेषां न्यासात्पूर्वमनादिकालार्जितानां प्रारब्धव्यतिरिक्तानाम् उत्तरेषां न्यासानिर्वृत्त्यनन्तरं कृतानां प्रामादिकानां पाप्मनाञ्च नाशाय न्यासो

---

(१) बहुव्रीहिः । विधेयतया बलवद्विवक्षितमित्यर्थः ।

भवत्ययमेव न्यासः । सर्वेषामुपर्युपरि प्राप्तानां समस्ताना मपचाराणां च क्षमापणमशक्तस्य बुद्धिपूर्वोत्तराद्यमपि तान्निमित्तकृतो न्यासो निवर्त्तयतीत्यर्थः । हिशब्देन शक्तौ प्रतिपदोक्तं स्यादशक्तौ शरणागतिरित्यादि प्रसिद्धिर्द्योत्यते । समर्पितात्मनः श्रीशे इत्यादिनोक्तानर्थान् आचार्य्याः संगृहीतवान् । प्रारब्धेतरपूर्वपापमखिलं प्रामादिकं चोत्तरं न्यासेन क्षपयन्ननभ्युपगतप्रारब्धखण्डश्च नः धीपूर्वोत्तरपाप्मनामजननाज्जातेऽपि तन्निष्कृते कौटिल्ये सति शिक्षयाप्यनघयन् क्रोडीकरोति प्रभुरिति ॥ ३७ ॥

नारी वा पुरुषो वापि प्रपद्य शरणं हरिम् ।
तत्र चैकान्त्यवृत्त्यैव गच्छेतां भुवि भाव्यताम् ॥ ३८ ॥
सकृदेव कृतो न्यासो वृत्तिर्भवति शाश्वती ।
तथापि तन्मूलतया तस्यास्तादात्म्यमीरितम् ॥ ३९ ॥

नारीति । सकृदेवेति च । न्यासः प्रपत्तिः सकृदेव भवेत् । आवृत्तिर्नास्तीत्यर्थः।वृत्तिस्तु शाश्वती विहिताचाराद्यात्मिका वृत्तिस्तु आप्रयाणादावर्तनीया । एवमनुवृत्तितया च भिन्नयोरैक्यव्यपदेशो मूल आविर्भावविनिबन्धन इत्याह । तथापीति तन्मूलतया न्यासमूलतया तस्या वृत्तेस्तादात्म्यं न्यासरूपत्वमीरितम् ॥ ३८ ॥ ३९ ॥

ईशे न्यस्तभराणां हि कर्त्तव्यं नास्ति किंचन ।
यद्यस्ति शुद्धमैच्छन्तत्सामान्यमिति यौक्तिकाः ॥४०॥

वृत्तेरवश्यकर्त्तव्यतामुक्त्वा प्रपन्नस्य कृतकृत्यत्वात् कर्त्तव्यत्वं न किञ्चिदस्तीति मतं कुतर्कमूलमित्याह–ईश इति।ईशे न्यस्त भराणां किञ्चन कर्त्तव्यं नास्ति भगवन्न्यस्तभरतया कृतकृत्य-

त्वात् कर्त्तव्यमेषां नास्तीत्यर्थः। यद्यस्ति अस्ति चेव, शुद्धं तत्राप्यैच्छमेव। सामान्यं सर्वसाधारणं देवतान्तर्याम्याराधनरूपम् अकरणे प्रत्यवायरहितं सर्ववर्णाश्रमसाधारणं दीपारोपणमालाकरणादिरूपमिति पदत्रयार्थः। इति यौक्तिका वदन्ति न प्रामाणिका इत्यर्थः। व्यामिश्रान्वयेऽपि पारमैकान्त्यभङ्गाभावात्। नित्यनैमित्तिकानुष्ठानस्य उपायत्वाभावेन कृतकृत्यताभङ्गाभावात्। अननुष्ठाने च तेषां चित्तकालुष्यजननेन तदजननार्थमवश्यानुष्ठाने उपायत्वाच्च वृत्त्यादेरप्यकरणप्रसङ्गात्। तदकरणे तन्मूलतया सर्वासामपि क्रियाणां मूलाकरणादवद्यानन्वयप्रसङ्गादितः पूर्वं कैश्चिदपि वैष्णवमर्य्यादानुप्रविष्टैरकृतशौचाचमनैर्भगवदाराधनकरणाद्यदर्शनात्प्रत्युतनियतैरेव, न हीनवर्णानधिकृतकल्पेन भगवदाराधनाद्यनुष्ठानदर्शनाच्च नित्यनैमित्तिकाद्यनुष्ठानस्य सम्यङ्नयनिर्णीतार्थप्रमाणमूलत्वात्।केवलं युक्तिमूलं यद्यस्ति शुद्धमैच्छं तत्समान्यमिति मतमनादरणीयमित्यर्थः॥ ४०॥

हताः प्रपद्य लक्ष्मीशं चपला मुक्तमानिनः।
प्राप्यान्तमपि देहस्य च्यवन्त्युज्झितवृत्तयः॥ ४१॥

निर्भरत्वानुसन्धानजनितौद्धत्येन परित्यक्तवृत्तीननुशोचति–हता इति। चपलाः विषयान्तरमनोरथाः। लक्ष्मीशं प्रपद्य हताः भरन्यासबलानुसन्धानेन अकुतोभयाः। मुक्तमानिनः मुक्तानात्मनो मन्यमानाः।उज्झितवृत्तयोऽसन्तः। देहानामन्तं प्राप्यापि च्यवन्ति च्युता भवन्ति॥ ४१॥

अथैतत्परमर्षीणां ज्ञेयं तत्त्वविदां मतम्।
दास्यं हि शुद्धं मिश्रं वा व्यामिश्रं चोदितं पृथक्॥४२॥

अतो यावद्देहं यथाधिकारं शुद्धं व्यामिश्रं भगवदाराधनात्मकं कर्मावश्यमनुष्ठेयमित्याह–अथेति । तत्त्वविदां परमर्षीणां मतमेतत् ज्ञेयमवश्यं ज्ञातव्यम् । तत्किमित्यत आह । दास्यमित्यादिना शुद्धं व्यामिश्रं वा दास्यम् । आमुक्ति मोक्षपर्य्यन्तं पृथक् चोदितमेकायनैः शुद्धं त्रैविद्यैर्व्यामिश्रं यथासम्बन्धं शुद्धं भगवद्दास्यात्मकं यावद्देहपातमनुवर्त्तनीयमित्यर्थः ॥४२॥

सामान्या च विभक्ता च वृत्तिः सर्वस्य देहिनः ।
दुस्त्यजां नियतामेवमिमां प्रत्यवधार्य्यताम् ॥ ४३ ॥

सामान्येति।सामान्यादिर्देहिनः वृत्तिः सामान्या देहसाधारणी विभक्ता वर्णाश्रमप्रतिनियता च भवति । एवंभूतां नियताम् अवश्यं कर्त्तव्यम् अत एव दुस्त्यजाम् इह वृत्तिं प्रति अवधार्य्यताम् ॥ ४३ ॥

यथा यथा निषेवेत सतो वृद्धान्निरन्तरम् ।
तथा तथास्य वै वृत्तिर्निरपाया हि वर्द्धते ॥ ४४ ॥

वृत्तिवैकल्याभावश्च सत्सेवया भवतीत्याह–यथेति । सतः परमैकान्तिनो वृद्धान्नियतमविच्छेदेन यथायथा येनयेन प्रकारेण सेवते तथातथा तेनतेन प्रकारेण अस्य वृत्तिर्निरपाया अपायरहिता सती अभितो वर्द्धते स्वस्य स्वाभिमतानाञ्च वर्द्धत इत्यर्थः ॥ ४४ ॥

वीर्य्यं स्वकर्मधीर्दृष्टिस्तेजोऽङ्कः शक्तिरर्चनम् ।
बलं वैराग्यमैश्वर्य्यं सत्सङ्गः षड्गुणा हि सा ॥ ४५ ॥

विरुद्धवर्जनसहितानां वृत्तीनां षाड्गुण्यभेदं निरूपयति वीर्य्यमिति । स्वकर्म्म विहिताचारो वीर्य्यम् । दृष्टिः धीर्ज्ञानम् अंको लक्ष्मतेजः । अर्चनं भक्तिः । शक्तिर्वैराग्यम् । निन्द्यवर्जनम्

बलम् । सत्सङ्गः सतां सेवा । ऐश्वर्यमेवं सा वृत्तिः षड्गुणा हि अतो वृत्तिमाश्रितः षाड्गुण्यपरिपूर्ण इत्यर्थः ॥ ४५ ॥

सेव्योऽयं कर्महस्तांघ्रिर्ज्ञानदृष्टिर्भजाननः ।
सत्सेवनाशिरा धर्मो वैराग्यौजाः सुलक्षणः ॥ ४६ ॥

सेव्य इति । कर्मविहिताचार एव हस्तावङ्घ्री पादौ च यस्य स तथोक्तः । ज्ञानं दृष्टिरेव दृष्टी नेत्रे यस्य स तथोक्तः । भजो भक्तिरेवाननं मुखं यस्य स तथोक्तः । सत्सेवनं सतां सेवनमेव शिरो यस्य ससत्सेवनशिराः वैराग्यं निन्द्यवर्जनमोजो यस्य स वैराग्यौजाः । सुलक्षणः शोभनं लक्षणं लक्ष्म यस्यासौ सुलक्षणः । श्लिष्टरूपकमिदम् । अयं धर्मः सेव्य अनेनाराध्यत्वेन रूपणं कृतमित्यर्थः ॥ ४६ ॥

वदन्तोऽपि गुणान्विष्णोः कुर्वन्तोऽपि च तत्क्रियाः ।
मन्दपुण्या न विन्दन्ति पारमैकान्त्यसम्पदम् ॥ ४७ ॥

वदन्त इति । तत्क्रियाः भगवद्धर्मान् सत्यपि भगवद्गुणे सद्धर्मानुष्ठाने च सति पुण्यवन्तः पारमैकान्त्ये तिष्ठन्तीत्यर्थः ॥ ४७ ॥

सम्भूय च कुले श्लाघ्ये सर्वान्वेदानधीत्य च ।
विधाय च महत्कर्म विष्णोर्दास्यं हि दुर्लभम् ॥ ४८ ॥

सम्भूयेति । विशिष्टकुले जन्म सर्ववेदाध्ययनं दुष्करधर्मानुष्ठानं वा न पारमैकान्त्यप्रयोजकमित्यर्थः ॥ ४८ ॥

सतां निषेवणं वापि जननं वा सतां कुले ।
विविक्तमथवा ज्ञानं विष्णोर्दास्यावलम्बनम् ॥ ४९ ॥

किं तर्हि पारमैकान्त्यनिमित्तमित्यत आह—सतामिति । सतां निषेवणं सतां परमैकान्तिनां कुले जन्मनिमित्तसंशय-

विपर्ययेभ्यो व्यावृतं ज्ञानं वा विष्णोर्दास्यावलम्बनमाधारः कारणमिति यावत ॥ ४९ ॥

अस्वतन्त्राः सदा नार्य्यः स्थिता गुर्वादिशासने ।
वर्जयेयुर्विरुद्धानि यत्किंचिद्धर्मसंश्रयाः ॥ ५० ॥

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपासन(१)मित्यादिभिः स्त्रीणां पृथग्धर्मनिषेधात् अस्वतन्त्रतया आचार्यनियमने स्थित्वा विरुद्धवर्जनपूर्वकं स्वोचितयत्किञ्चिद्धर्मानुष्ठानेनापि वृत्तिः पूर्णा भवतीत्याह–अस्वतन्त्रा इति । नार्य्यः स्त्रियः गुर्वादिशासन इत्यत्रादिशब्देन पतिपित्रादयो गृह्यंते ॥ ५० ॥

तूष्णीं प्रायाः क्रियाः स्त्रीणां मन्त्रश्रावणबोधने ।
वाचनञ्च परेऽन्येऽपि धारणं चार्चने पुनः ॥ ५१ ॥

तूष्णीं प्राया इति । स्त्रीणां क्रियाः तापादिसंस्काराः तूष्णीं प्रायाः अमन्त्रका होमादिशून्या इत्यर्थः । मन्त्रश्रावणबोधने मन्त्रस्य श्रावणं तदर्थज्ञापनञ्च ऋषय इच्छन्तीति शेषः । परे केचन ऋषयस्तु वाचनमपीच्छन्ति । अन्ये तु मन्त्रस्य धारणमपीच्छन्ति । अर्चने पुनः आराधने तु प्रकारभेदोऽस्तीति शेषः ॥ ५१ ॥

भर्तुरासनदानाद्यैः स्नापनालंक्रियादिभिः ।
यथा चाभ्यवहाराद्यैः परिचर्य्या हरेस्तथा ॥ ५२ ॥

प्रकारभेदमाह–भर्तुरिति । भर्तुः पत्युः आसनदानाद्यैः आसनप्रदानादिभिः स्नापनालंक्रियादिभिश्च यथा परिचर्य्या भवति तथैवाभ्यवहाराद्यैरुपचारैश्च परिचर्या भवति । स्त्रीणामिज्या तु अमन्त्रकैः केवलोपचाररूपैरित्यर्थः ॥ ५२ ॥

(१) नाप्युपोषितमिति पाठान्तरम् मनु ५ अ० १५५ श्लो० ।

यद्वा परमसंस्काराः प्राप्या गुणसमानतः ।
सर्वत्र हरिरेवार्च्यो नाग्निकर्मेति केचन ॥ ५३ ॥

एवं पुंसां समं त्रिकालाग्निकर्म पूर्वोक्तास्तापादिसंस्काराः स्त्रीणां तूष्णीं प्राया इत्युक्त्वा इदानीं सर्वेषामपि सर्वेष्वपि संस्कारेषु भगवदर्चनमेव पूर्वं कर्त्तव्यं न होमादिकमिति केषाञ्चित् पक्षमाह—यद्वेति । परमसंस्काराः तापादयः सर्वत्र सर्वेष्वपि संस्कारेषु ॥ ५३ ॥

परमैकान्तिनां नित्या या वृत्तिर्विहिता गुरौ ।
तदभावे तु तत्पुत्रे गुर्वर्चा दैवतेषु सा ॥ ५४ ॥

परमैकान्तिनामिति । परमैकान्तिनां आचार्य्यविषये या वृत्तिर्विहिता सा वृत्तिस्तदभावे गुर्वभावे तु तत्पुत्रगुर्वर्चादैवतेषु विहिता आचार्ये विहितावृत्तिराचार्य्याभावे आचार्य्यपुत्रे आचार्यस्याचार्य्ये आचार्याराध्यभगवद्विग्रहे वा कर्त्तव्येत्यर्थः।५४।

सर्वेषां याग एवायं सामान्यो मुनिभिः स्मृतः ।
अभ्येत्यप्रणिपत्याग्रे देवायात्मनिवेदनम् ॥ ५५ ॥

सर्वेषामिति । अभ्येत्य आभिमुख्येनागत्य भगवतः पुरस्तात्प्रणम्य देवाय भगवतो आत्मनिवेदनम् आत्मसमर्पणमितियत् अयं सर्वेषां वर्णानां सामान्यः साधारणो यागो यजनं यथा ॥ ५५ ॥

सर्वेषामुपचाराणामर्घ्यं परममुच्यते ।
कृतेनैकेन तेनैव सर्वमेव कृतं भवेत् ॥ ५६ ॥

सर्वेषामिति । सर्वेषामप्युपचाराणां मध्ये अर्घ्यं परमं श्रेष्ठमुच्यते । कृते समर्पिते सति । तेनार्घ्येणैकेनैव सर्वमप्युचारजातं कृतं भवेत् देशकालकरणादिवैगुण्यादशक्त्या अज्ञानेन वा

पूर्णानुष्ठानासमर्थानामपि आराधनैकदेशभूतकेवलार्घ्यदानमात्रेणापि आराधननिष्पत्तिर्भवितीत्यर्थः ॥ ९६ ॥

अर्च्योऽर्चायां हरिर्नित्यं तदभावे तु कुत्रचित् ।
पुष्पेणार्घ्येण हविषा नत्या स्तुत्यापि वा परम् ॥९७॥

अर्च्य इति । हरिरर्चायामेव नित्यमर्च्यः । तदभावे अर्चाबिम्बाभावे कुत्रचिदग्निसूर्याम्बुगगनादिष्वर्च्यः । केन प्रकारेणेत्यत आह पुष्पेणेति । परमिति पदं केवलार्थकं पुष्पेणेत्यादिना तृतीयान्तेन सर्वेणाप्यन्वेति पुष्पादिहविःस्तुतिनत्यादिष्वेकमेव तदाराधनमित्यर्थः । अनेन भगवतः स्वाराध्यतोक्ता ॥ ९७ ॥

शालग्रामशिलायांतु पूजनं स्नापनादपि ।
सा हि दिव्या हरेर्मूर्त्तिर्दर्शनादेव सिद्धिकृत् ॥ ९८ ॥

शालग्रामेति । शालग्रामशिलायां स्नापनादिकं पूजनं स्नानप्रदानमाराधनमित्यर्थः । अन्यत्सुगमम् ॥ ९८ ॥

प्राप्त्याभिगमनं दृष्ट्योपादानं नमसार्चनम् ।
स्वाध्यायः कीर्तनाद्योगः स्वार्पणादपि केवलम् ॥९९॥

पूर्णाभिगमनाद्यनुष्ठानासमर्थं प्रत्याह—प्राप्त्येति । प्राप्त्या भगवत्सन्निधिप्राप्त्या वापि केवलम् अभिगमनं कृतं भवतीति शेषः । दृष्ट्या ज्ञानेन वापि केवलमुपादानं कृतं भवति । आराधनार्थपदार्थसंग्रहरूपत्वादुपादानस्य आत्मगुणानामप्याराधनौपयिकत्वात्तेषु ज्ञानस्य प्राधान्यादिति भावः । नमसा नमस्कारेण वापि केवलम् अर्चनमिज्या कृता भवति । कीर्तनाद्भगवन्नामकीर्त्तनादपि वा केवलं स्वाधायः कृतो भवति । स्वार्पणादात्मसमर्पणादपि केवलं योगः कृतो भवति 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' । इत्युक्तं भगवद्धर्ममाहात्म्यमनुसन्धेयम् ॥ ९९ ॥

एवं विद्वानेकदापि कुर्वन्सन्पाञ्चकालिकः।
कृतम्भवति वा सर्वमिज्ययैव हि केवलम् ॥ ६० ॥

एवमिति। एवमुक्तप्रकारेण एकदा एकस्मिन्काले दिवसे वापि पञ्चकाले सर्वेषां वर्णानां सामान्यः पाञ्चकालिको भवति अपाञ्चकालिकप्रयुक्तास्पृश्यत्वादिरहितो भवतीत्यर्थः। पूजयैव केवलं केवलभगवदिज्ययैव वा सर्वमभिगमनादिकं कृतं भवति। इज्यायामेवाभिगमनस्य प्रथमाङ्गतयानुप्रविष्टत्वात् भूतशुद्ध्यादिना आराधनोपयुक्तशरीरादिसम्पादनेन उपादानस्याप्यनुप्रविष्टत्वात्। मन्त्रानुसन्धानरूपेण स्वाध्यायस्याप्यनुप्रविष्टत्वात् तमेव भगवन्तं सर्वेश्वरमात्मनः स्वामित्वेनानुसन्धायात्यर्थप्रियविशदतमप्रत्यक्षरूपानुध्यानेन ध्यायन्नासीतेति नित्योक्तप्रक्रियया योगस्यापि प्रविष्टत्वाच्चेति भावः। एकदापि कुर्वन्नित्यस्यैवं वार्थः। तत्तत्कालविभागेनाभिगमनाद्यनुष्ठानाशक्यत्वावस्थायां पञ्चसु कालेष्वेकस्मिन्नेव काले अभिगमनादिपञ्चकं कुर्वन्नपि पाञ्चकालिको भवति ॥ ६० ॥

स्वाध्यायेनापि विदुषा सर्वं योगेन वा कृतम्।
पूजनेन गुरोर्वापि सताञ्चापि निषेवणात् ॥ ६१ ॥

स्वाध्यायेनापीति। विदुषा इत्यस्यायं भावः। सकलेतरप्रतिनिधितया सङ्कल्पेतरप्रतिनिधिस्वाध्याययोगगुरुपूजनसत्सेवास्वन्यतरानुष्ठानेनापि अभिगमनादिकं सर्वमनुष्ठितकल्पं भवति ॥ ६१ ॥

विशुद्धं वैष्णवं बिम्बं गृहीत्वा न्यासतत्त्ववित्।
सलिले देवमावाह्याभिषिञ्चेत्स्थापनं हि तत् ॥ ६२ ॥

गुरुकल्पाशक्तानां स्थापने लघुकल्पमाह–विशुद्धमिति। न्यासतत्त्वविदाचार्यः सलिले देवं नारायणमावाह्य तेन सलि-

लेन अभिषिञ्चेदिति यत्तत्स्थापनमित्यन्वयः । विशुद्धमित्यनेन द्रव्यशुद्धिरुच्यते । यद्वा, अम्लादिना पञ्चगव्यस्थापनादिना आधेया शुद्धिरुच्यते । न्यासतत्त्वविदित्यनेन बिम्बे योगोपनिषदादिन्यासः मन्त्रन्यासश्चाभिप्रेतः ॥ ६२ ॥

महाभागवतो मन्त्रैः शुद्धैर्यदभिषिंचति ।
बिम्बं सर्वापचाराणां प्रायश्चित्तमिदं परम् ॥ ६३ ॥

संप्रोक्षणे लघुकल्पमाह—महाभागवत इति । महाभागवतः शुद्धैरव्यामिश्रैर्मन्त्रैः विम्बमभिषिञ्चतीति यत्सर्वापचाराणामिदं परं प्रायश्चित्तं सर्वेषु संप्रोक्षणनिमित्तेष्विदं श्रेष्ठं प्रायश्चित्तमित्यर्थः ॥ ६३ ॥

न परैः सङ्करं कुर्यात्पात्राणां यज्ञकर्मणि ।
कांस्यानां भोजने पाके मृन्मयानां विशेषतः ॥ ६४ ॥

नेति । यज्ञकर्मणि भगवदाराधने भोजने पाके च विनियुक्तानां कांस्यानां विशेषतो मृन्मयानाञ्च पात्राणां परैरन्यत्र विनियुक्तैः पात्रैः सह सङ्करं न कुर्यात् ॥ ६४ ॥

शुद्धव्यामिश्रपात्राणां न कुर्याच्च परस्परम् ।
व्यामिश्रे शुद्धशेषं स्यात्तच्छेषं न शुचौ क्वचित् ॥ ६५ ॥

शुद्धेति । शुद्धक्रियाविनियुक्तानि पात्राणि शुद्धपात्राणि व्यामिश्रक्रियाविनियुक्तानि पात्राणि व्यामिश्रपात्राणि तेषां परस्परं सङ्करं न कुर्यात् । व्यामिश्रे व्यामिश्रक्रियाविनियुक्तपात्रे शुद्धशेषं स्यात् प्रक्षेप्यमिति शेषः । तच्छेषं व्यामिश्रशेषं शुचौ शुद्धक्रियाविनियुक्तपात्रे क्वचिदपि प्रक्षेप्यं न स्यात् । शुद्धशेषं शुद्धक्रियाशेषभूतं पात्रं व्यामिश्रं व्यामिश्रकर्मणि विनियोक्तव्यं स्यात्तच्छेषं व्यामिश्रक्रियाशेषभूतं पात्रं शुचौ शुद्धकर्मणि क्वचिदपि न विनियोक्तव्यं स्यादित्यर्थः ॥ ६५ ॥

सतां पादोदकं पात्रे काञ्चने मृन्मयेऽपि वा।
पावनं धारयेन्नित्यं प्रच्युताद्यैरदूषितम् ॥ ६६ ॥

सतामिति। प्रच्युताद्यैर्यद्दूषितं प्रच्युतादीन्वक्ष्यति। तैरदूषितम् अस्पृष्टं प्रच्युतादि पादोदकामिश्रितमिति वार्थः॥ ६६॥

सन्तोनुपनतारब्धविलयात्यन्तनिर्मलः।
अशुद्धैरतथाभावान्नाश्लिष्येयुः कथञ्चन ॥ ६७ ॥

न केवलं शुद्धपात्राणामेव तदन्यैः सङ्करः परिहर्त्तव्यः अपि तु सतामसद्भिः सङ्करः परिहर्त्तव्य इत्याह–सन्त इति। अनुपनतस्य सञ्चितस्य प्रारब्धस्य च विलयेन अत्यन्तनिर्मलाः। प्रारब्धविलयोऽप्यत्र अनभ्युपगतप्रारब्धप्रतियोगिको मन्तव्यः अन्यथा देहिनः सहवर्त्तमानानां यावत्प्रारब्धविलयायोगात्। अनुपनतारब्धविलयात्यन्तनिर्मलाः सन्तोऽपि अशुद्धैर्नाश्लिष्येयुः। कुतः ? अतथाभावात् अशुद्धानां तथाभूतत्वादनुपनतारब्धविलयात्यन्तनिर्मलत्वाभावादित्यर्थः। कथञ्चनेत्यनेन नवधा सङ्करोऽपि परिहर्त्तव्य इत्युच्यते चेदित्युक्तं 'नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सहेति'। अनुपनतारब्धेत्यत्र अनुपनतशब्दश्च गोबलीवर्दन्यायात्प्रारब्धेतरपूर्वपापपरः प्रामादिकोत्तराद्यपरो वा ॥ ६७ ॥

कृत्वा मन्त्रान्वयं तत्र विवाहं परिवर्जयेत्।
वैवाहिकोऽन्वयः पूर्वो न तु मन्त्रं निवारयेत् ॥ ६८ ॥

कृत्वेति। मन्त्रान्वयं कृत्वा आचार्यात् मन्त्रं गृहीत्वेत्यर्थः। तत्र आचार्य्यगृहे विवाहं परिवर्जयेत्। तत्कन्याप्रतिग्रहादि वर्जयेदित्यर्थः। पूर्वमन्त्रं प्रतिग्रहात्पूर्वो वैवाहिकः सम्बन्धस्तु मन्त्रं न निवारयेत्। मन्त्रसम्बन्धानन्तरं विवाहो न कर्त्तव्यः विवाहानान्तरं तु मन्त्रे सम्बन्धो न निषिद्ध इत्यर्थः ॥ ६८ ॥

न्यासस्य सर्वयोगस्य शुद्धस्यात्यन्तिकस्य च ।
अन्यादृशस्य च विधेर्नानुबन्धं परे विदुः ॥ ६९ ॥

मतान्तरमाह–न्यासस्येति । सर्वयोग्यस्य सर्वाधिकारिकस्य शुद्धयोगस्य व्यामिश्रस्य अनात्यन्तिकस्य चेत्यर्थः । विधेर्वैवाहिकविधेश्च परे केचिन्मुनयः अनुसम्बन्धं न विदुः । विवाहानन्तरमपि न मन्त्रपरिग्रहः कर्त्तव्य इति परेषां मतम् । अन्ये तु पुनरप्यस्य श्लोकस्य परमर्थं वर्णयन्ति न्यास वैवाहिकयोः परस्परनिरपेक्षत्वेन प्रतिबन्ध्यप्रतिबन्धकाभावरूपाद्यनुबन्धो नास्ति इति मन्त्रपरिग्रहानन्तरमपि विवाहो न निषिद्ध इति परेषामिति अत्र यत्प्रमाणाविरुद्धं तद्ग्राह्यम्॥६९॥

प्राप्तुं लक्ष्मीपतेर्दास्यं शाश्वतं परमात्मनः ।
तमेव शरणं प्राप्य गच्छेदात्मविदं गुरुम् ॥ ७० ॥

प्राप्तुमिति । परमात्मनो लक्ष्मीपतेः शाश्वतं नियतं दास्यं कैङ्कर्यं प्राप्तुं लब्धुं तमेव लक्ष्मीपतिमेव शरणं प्राप्तुमिच्छुः आत्मविदम् आत्मज्ञं गुरुं गच्छेत् अभिगच्छेत् 'तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति' श्रुतिरत्रानुसन्धेया ॥ ७० ॥

संवत्सरमुपासीत तमेव सुसमाहितः ।
वर्षवातातपादीनां सोढा युक्तोऽस्य कर्मसु ॥ ७१ ॥

संवत्सरमिति । संवत्सरमित्यत्यन्तसंयोगे द्वितीया । अस्य गुरोः कर्मसु कैङ्कर्येषु युक्तो निरतः ॥ ७१ ॥

गुरुरस्य परं स्थैर्यं शौचमास्तिक्यमार्जवम् ।
ज्ञात्वा चान्यगुणान्सम्यक्संस्कारैर्योजयेत्ततः ॥ ७२ ॥

तस्मै स विद्वानुपसन्नाय सम्यक्शान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति श्रुत्यर्थमाह। गुरुरिति। स्थैर्यमापत्स्वप्यविकलचित्तत्वम्। शौचं बाह्याभ्यन्तरशुद्धिः। आस्तिक्यं वेदोक्तेष्वर्थेषु दृढप्रत्ययशालित्वम्। आर्जवं वाङ्मनःकायानामैकरूप्यम् अन्यान् गुणान् 'अमानित्वमदम्भित्व' मित्यादिना गीतोक्तान् गुणाँश्च सम्यक् ज्ञात्वा ततस्तापादिभिः संस्कारैर्योजयेत्॥ ७२॥

अथ कश्चिदनुग्राह्यमबुद्धं स्वयमेव वा।
परिगृह्य परं प्राज्ञः प्रापयेच्छरणं हरिम्॥ ७३॥

एवं प्रपन्नं शिष्यं तापादिसंस्कारैर्योजयेत्; इत्युक्त्वा अवश्यानुग्राह्यं कश्चित् उपसत्तिं कर्तुमजानन्तं कृपयाचार्य्यः स्वयमेव परिगृह्य भगवन्तं शरणं प्रापयेदित्याह—अथ कश्चिदिति। अबुद्धम् अज्ञमुपसत्तिं कर्तुमजानन्तमित्यर्थः। परिगृह्य कृपया दृष्ट्वा परमत्यर्थं परिगृह्येत्यर्थः॥ ७३॥

क्रमाच्च बुद्ध्यमानन्तं बोधनीयानि बोधयेत्।
कारयेत्करणीयानि प्रापयेत्परमां स्थितिम्॥ ७४॥

क्रमादिति। क्रमात्कालक्रमेण बुद्ध्यमानं जानन्तं पूर्वोक्तं शिष्यं बोधनीयान्याज्ञापनीयानि बोधयेत्। करणीयानि कर्त्तव्यानि कारयेत्। परमाम् उत्कृष्टां स्थितिमवस्थां प्रापयेत्। परिग्रहदशायामबुद्धमपि शिष्यं परिगृह्य भगवन्तं शरणं प्रापयेत्। अनन्तरं क्रमेण शिष्यबुद्ध्युन्मेषानुसारेण अर्थपञ्चकविषयकं ज्ञानमुत्पाद्य वृत्तिमप्युपदिश्य अविकलतदनुष्ठापनेन तं परमैकान्तिनामग्रेसरं कुर्यादिति निर्गलितार्थः॥ ७४॥

आजिह्मा सात्त्विकी बुद्धिर्येषां शास्त्रावगाहिनी।
तेषां नारायणे भक्तिर्भवत्यव्यभिचारिणी॥ ७५॥

अवश्यानुग्राह्यत्वेऽपि भगवद्भक्त्युपयुक्तयथार्हज्ञानार्हत्वात्सात्त्विकमेव परिगृह्णीयादिति आशयेनाह-अजिह्मेति । अजिह्मा अवक्रा यथार्थेत्यर्थः । सात्त्विकी सत्त्वगुणजन्या शास्त्रावगाहिनी शास्त्रार्थग्राहिणी अव्यभिचारिणी देवतान्तराराध्याविषयतया बुद्धिः सत्त्वमूलतया शास्त्रतः सर्वस्मात्परं नारायणमवगम्य तत्रैवाव्यभिचारिणीं भक्तिं करोतीत्यर्थः । नारायण इत्यनेन गतिसामान्यनयेन सदात्मादिशब्दानां नारायणे पर्य्यवसानं सूच्यते ॥ ७५ ॥

येषां शास्त्रेषु गाढापि राजसी कुटिला मतिः ।
तेषां न जायते भक्तिर्हरौ जातापि च स्खलेत् ॥ ७६ ॥

येषामिति । येषां प्रतिशास्त्रेषु गाढा शास्त्रार्थविषयिण्यपि राजसी रजोमूला अत एव कुटिला अन्यबुद्धिरूपा तेषां हरौ भक्तिर्न जायते । जातापि उत्पन्नापि स्खलेदेव । च त्वेवकारार्थः । रजोमूलाया बुद्धेरन्यथा शास्त्रावगाहित्वादव्यभिचरितं भगवद्भक्तिजनकत्वं नास्तीत्यर्थः ॥ ७६ ॥

तमसाभिप्लुता येषां शास्त्रेषु क्रमते न धीः ।
न ते स्वात्मानमीशं वा बुध्यंते देहबुद्धयः ॥ ७७ ॥

तमसेति । तमसाभिप्लुता येषां धीः शास्त्रेषु न क्रमते न चरति तेन स्वात्मानमीशं परमात्मानं वा बुद्ध्यन्ते कुतः देह बुद्धयः देहमात्रपर्य्यवसितज्ञानत्वात्तदतिरिक्तं स्वात्मानं तदीशितारं भगवन्तं च न जानन्तीत्यर्थः ॥ ७७ ॥

लोभाद्वा यदि वा मोहाच्छिष्यं शास्ति न यो गुरुः ।
नास्मात्संशृणुते यश्च प्रच्युतौ तावुभावपि ॥ ७८ ॥

एवं नत्वस्य यथार्थशास्त्रार्थविषयकज्ञानजनकत्वं शास्त्रार्थ विषयकान्यथाज्ञानजनकत्वं विपरीतज्ञानस्याशास्त्रस्पर्शि-

तया तमसः शास्त्रसंस्पर्शिविपरीतज्ञानजनकत्वं चोक्तम् । सात्त्विक एव शिष्यतया परिग्राह्यो नेतरोऽपीति ज्ञापनाय लोभादिना स्खालित्ये शासितृत्वाभावे आचार्य्यस्य तच्छासनलङ्घने शिष्यस्य च प्रत्यवायमाह—लोभाद्वेति । यो गुरुर्न शास्ति यः शिष्यः अस्माच्छासितुराचार्य्यात् न शृणोति तावुभावाचार्य्यशिष्यौ प्रच्युतौ ॥ ७८ ॥

अपरीक्ष्य चिरं क्षेत्रं यः परं ज्ञानमावहेत् ।
प्रमाद्यतः सुगोप्तव्ये परमार्थोऽस्य हीयते ॥ ७९ ॥

अपरीक्ष्य मन्त्रप्रदानादिकं न कर्त्तव्यमित्याह—अपरीक्ष्येति। क्षेत्रं शिष्यरूपं ज्ञानबीजाधानस्थलं चिरं बहुकालमपरीक्ष्य परं तत्त्वं हितपुरुषार्थतया उत्कृष्टज्ञानमावहेत् ज्ञानरूपबीजावापनं कुर्यादित्यर्थः । सुगोप्तव्ये अत्यन्तगोपनीये मोक्षोपायभूते ज्ञान प्रमाद्यतः परमरहस्यमनधिकारिभ्य उपदिशत इत्यर्थः । अस्य उपदेष्टुराचार्यस्य परमार्थो हीयते अयं परमप्रयोजनाच्युतो भवतीत्यर्थः ॥ ७९ ॥

न्यासे हि देहिनोऽपायैर्जायते प्रच्युतिः फलात् ।
वारयत्याप्रशमनात्सा हि सद्व्यवहार्य्यताम् ॥ ८० ॥

प्रपन्नस्याप्यपायान्वये अत्र कैङ्कर्य्याख्यपुरुषार्थे अनधिकारी भवतीत्याह—न्यास इति । देहिनो न्यासे कृते सत्यपि अपायैः प्राकृतसंसर्गादिभिः फलात् अत्रत्यकैङ्कर्यफलात्प्रच्युतिर्भवेत्सा प्रच्युतिः आप्रशमनात् प्रायश्चित्तादिना प्रशमनपर्यन्तं सद्व्यवहार्य्यतां वारयति प्रपन्नोऽप्यपायान्वितः भगवत्कैङ्कर्य्येष्वनधिकारी भूत्वा शिष्टबहिष्कार्यो भवतीत्यर्थः ॥ ८० ॥

यज्ज्ञानपूर्वं न्यसनं मन्त्रेण गुरुणा हरौ ।
स एव सर्वसंस्कारः प्राक्तस्मात्प्राकृता नराः ॥ ८१ ॥

प्राकृतसंस्पर्शादिकं परित्याज्यमिति वक्ष्यन्प्राकृतानां लक्षणमाह-यदिति । गुरुणा आचार्य्येण ज्ञानपूर्वकं मन्त्रार्थज्ञानपूर्वकं मन्त्रेण शरणागतिमन्त्रेण हरौ भगवति न्यसनं शिष्यस्वरूपभरसमर्पणमिति यावत् स एव सर्वसंस्कारः सर्वविधसंस्कारोऽपि सर्वविधः संस्कार इति वा तस्मात् संस्कारात् प्राङ्नरः प्राकृत इत्युच्यते ॥ ८१ ॥

प्राकृताद्यैः परिहृतो निवसेन्नासहायवान् ।
वसँश्चाभ्यन्तरान्प्राज्ञः संसर्गान्परिवर्जयेत् ॥ ८२ ॥

प्राकृताद्यैरिति । असहायवान् सहायरहितः प्राकृताद्यैः आदिशब्देन प्रच्युतपरिग्रहः । परिहृतः सह तैः न निवसेत् सर्वदेशकालविषयेण परिहृतः सन्नपि प्राज्ञो बुद्धिमानाभ्यन्तरान्संसर्गान् एकशय्यासनादीन् परिवर्जयेत् ॥ ८२ ॥

श्रद्धापूतमवैष्णस्याप्यन्नाद्यं तु कदाचन ।
इज्यासु विनियुञ्जीत न श्राद्धे सति किंचन ॥ ८३ ॥

श्रद्धेति अवैष्णस्य प्राकृतस्य श्रद्धापूतमप्यन्नाद्यं किंचन किंचिदपि अल्पमपि श्राद्धे सति अनापदि कदाचन कदाचिदपि इज्यासु न नियुञ्जीत । अन्नाद्यमित्यत्र अपक्वमेव विवक्षितम् । 'पानीयं पक्वमन्नं च विशेषेण विवर्जयेदिति' पक्वान्नस्यापद्यपि निषेधात् । श्रद्धापूतमित्यस्यायं भावः 'श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्द्धुषेः । मीमांसित्वोभयं देवाः सममन्नमकल्पयन् । तान् प्रजापतिरित्याह माकृध्वं विषमं समम् । श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतर' दित्यादिभिः श्रद्धापूतं पवित्रमित्युच्यते। तथाभूतमप्यवैष्णवान्नं परित्याज्यमिति ॥ ८३ ॥

गुणासहास्त्यजन्त्यार्य्या न सन्ताश्चिरमंहसे ।
दोषासहास्त्यजन्त्येव सन्तश्च श्रेयसे परान् । ८४ ॥

वैष्णवावैष्णवयोः परस्परत्यागे अविशेषेण शिष्टेऽपि हेतुफल भेदोऽस्तीत्याह–गुणेति। सतां श्रेयः फलमित्यर्थः ॥ ८४ ॥

धर्मच्छद्मभृतो धर्मान् घ्नन्ति वेदपराङ्मुखाः।
वैदिकाभास्तथा वेदान्कृष्णैकान्त्यपराङ्मुखाः॥८५॥

असतां त्यागे तद्दोषदर्शनं हेतुरित्युक्त्वा तेषां दोषमेवाह–धर्मेति। वेदपराङ्मुखाः वेदबाह्याः धर्मच्छद्मभृतः चैत्यवन्दनादिधर्मकारिणः धर्माञ्ज्योतिष्टोमादीन् घ्नन्ति अनेन वेदबाह्यानां दोषः उक्तः। अथ वेदेष्वेव कुदृष्टीनां दोषमाह। वैदिकाभा इति वैदिकाभा न परमार्थतो वैदिकाः कृष्णैकान्त्यपराङ्मुखाः भगवदैकान्त्यविद्वेषिणः। तथा धर्म्मच्छद्मभृतः धर्म्मानिव वेदान् घ्नन्ति इत्यर्थः ॥ ८५ ॥

य आत्मनां परो वेद्यस्तं विष्णुं वेदयन्ति यत्।
तद्वेदानां हि वेदत्वं यस्तं वेद स वेदवित् ॥ ८६ ॥

सकलवेदतात्पर्य्यविषयभूतं विष्णुमविदित्वा अतथाभूतार्थमेव जानन्तो वेदाघातका एवेत्याशयेन वेदशब्दार्थमाह–य आत्मनामिति। आत्मनां चेतनानां यः परमः उत्कृष्टवेद्यो ज्ञातव्यो विष्णुः तं विष्णुं यद्यस्मात् कारणाद्वेदयन्ति इति तत्तस्मात् कारणात् वेदानां वेदत्वम् विष्णुं वेदयन्ति वेदा इति व्युत्पत्तिरुक्ता भवति। यः पुमान् तं विष्णुं वेद स पुमान्वेदवित्। अन्ये तु वेदघातका एवेति भावः ॥ ८६ ॥

दर्शयन्त इव श्रेयो विप्लुतैर्हेतुभिर्बलात्।
च्यावयन्ति श्रुतिपथाद्दूरं बाह्याः स्थिरानपि ॥ ८७ ॥

बाह्याः कुदृष्टयश्च क्रमेण वेदविश्वासविरोधित्वात् भगवत्कैङ्कर्यरुचिविघातकत्वाच्च परित्याज्य इत्याशयवानाह–दर्शयन्त इति स्थिरानपि श्रुतिपथाद्दूरं च्यावयन्तीत्यन्वयः ॥ ८७ ॥

वैदिका इव चाप्यन्ये दर्शयन्तोऽन्यथा श्रुतेः ।
अर्थमच्युतकैङ्कर्य्याच्च्यावयन्ति कुदृष्टयः ॥ ८८ ॥

वैदिका इति श्रुतेः अन्यथा अर्थं दर्शयन्तीत्यन्वयः ॥ ८८॥

तस्मात्कुदृष्टिभिर्बाह्यैरप्रकम्प्यो गतव्यथः ।
ऐकान्त्यममलं विष्णोरातिष्ठेत्परमं सुधीः ॥ ८९ ॥

तस्मादिति । अप्रकम्प्यः स्वधर्म्माच्चालयितुमशक्यः । परमं सर्वोत्कृष्टं विष्णोरैकान्त्यमातिष्ठेत् ॥ ८९ ॥

नास्तिकः संशयी मूढ इत्यदूरतरा नराः ।
विज्ञाय लक्षणैस्तास्तु सम्यग्व्यवसितस्त्यजेत् ॥९० ॥

नास्तिक इति । अदूरतराः सन्निकृष्टाः नास्तिकसंशयिमूढानामति भेदो नास्तीत्यर्थः । सम्यग्व्यवसितः समीचीनव्यवसायवान् ॥ ९० ॥

मत्प्रत्यक्षन्तदेवास्ति नास्त्यन्यदिति निश्चिताः ।
अर्थकामपराः पापा नास्तिका देहकिङ्कराः ॥ ९१ ॥

नास्तिकानाह-मदिति निश्चिताः निश्चयवन्तः देहकिङ्कराः देहपोषणमात्रनिरता इत्यर्थः ॥ ९१ ॥

नानाविधेषु ज्ञानेषु नराः संशयिनोऽधमाः ।
निश्चयं नाधिगच्छन्ति लिङ्गमात्रधराः क्वचित् ॥९२॥

संशयिन आह-ज्ञानेति ज्ञानेषु करणव्युत्पत्त्याज्ञानकरण साधनेषु वाक्येष्वित्यर्थः । क्वचिदपि विषये निश्चयन्नाधिगच्छन्ति निश्चयं न प्राप्नुवन्ति । लिङ्गमात्रधराः वेषमात्रभूषणाः ९२

देहात्मस्वर्गनरकपुण्यपापाविमर्शिनः ।
गतानुगतिका मूढा नश्यन्ति पशुबुद्धयः ॥ ९३ ॥

मूढानाह-देहेति । देहात्मेत्यादि अयं देह एतद्विलक्षण आत्मा एतादृशः अयं स्वर्ग ईदृशश्च नरकः । इदं पुण्यम् इदं पापमिति परामर्शशून्याः । गतानुगतिकाः पूर्वाचरितं दुर्वर्त्मनीमनुसंरताः ॥ ९३ ॥

कुदृष्टयो बहुविधा वृथा वैदिकमानिनः ।
तथा मिथ्यादृशो बाह्याः सर्वैरेवावृतञ्जगत् ॥ ९४ ॥

कुदृष्टय इति। बहुविधाः निरीश्वराः, निर्द्धमाः, निर्गुणब्रह्मवादिनः, ब्रह्मविकारवादिनः, ब्रह्मण उपादानत्वमनिच्छन्त इत्यादयो बहुप्रकाराः । वृथा वैदिकमानिनः वृथैव आत्मनो वैदिकान्मन्यमानाः। तथा तद्वदुपहताः मिथ्यादृशो बाह्या वेदबाह्याश्चेत्येतैः सर्वैरेव जगदावृतम् । अतः सम्यक् परीक्ष्य तैः सङ्गं वर्जयेदिति भावः ॥ ९४ ॥

वेदवेदाङ्गतत्त्वज्ञा नारायणपरायणाः ।
धन्याः केचन तेभ्योऽपि तेषामादेशवृत्तिनः ॥ ९५ ॥

नास्तिकादीनां बाह्यान्तानां पापिष्ठत्वं ज्ञापयितुं नारायणपरायणानां तदादेशवर्त्तिनां धन्यत्वं धन्यतमत्वञ्च दुर्लभत्वञ्चाह–वेदवेदाङ्गेति । साङ्गवेदतत्त्वज्ञानस्य फलं नारायणपरायणा इत्यनेनोच्यते। साङ्गानां वेदानां नारायणे निष्ठां ज्ञात्वैतज्ज्ञानगुणं तस्मिन्नेव परिनिष्ठिताः धन्याः केचनेत्यनेन दुर्लभत्वमुच्यते ॥ ९५ ॥

आदिष्टाः पुण्ड्रमन्त्रार्चानामतापपराङ्मुखाः ।
धूतावधूतनिर्द्धूतविधूतोद्धूतसंज्ञकाः ॥ ९६ ॥

अथ विकलानाह–आदिष्टा इति। पुण्ड्रपराङ्मुखा धूताः। नामपराङ्मुखाः अवधूताः। अर्चापराङ्मुखा निर्धूताः। मंत्र पराङ्मुखा विधूताः तापपराङ्मुखाः उद्धूताः । आदिष्टा उक्ताः पञ्चस्वपि परमसंस्कारेष्वेकैकविकलानामेव उक्ताः संज्ञा वेदितव्याः॥९६॥

आदिष्टा एव चान्यार्चामन्त्रपुण्ड्राङ्कनामकाः ।
राक्षसासुरवेतालव्यालप्रेता नराधमाः ॥ ९७ ॥

परमसंस्कारविरुद्धान्वयिनां नामान्याह-आदिष्टा एवेति । अन्यार्चनपराः राक्षसाः । अन्यमन्त्रनिरताः असुराः । अन्यपुण्ड्रधरा वेतालाः । अन्याङ्कधारिणो व्यालाः । अन्यनामधारिणः प्रेताः एते सर्वे नराधमा इत्यर्थः । भूतव्रता इत्यपरः पाठः ॥ ९७ ॥

तथा स्वकर्मशास्त्रेशगुरुसत्सङ्गवर्जिताः ।
ऊना हीनाः स्रस्ता नष्टा दग्धा ज्ञेयास्समाख्यया॥९८॥
भिन्नोऽन्यनाथो भिन्नोऽन्यफलो भिन्नोऽथनिन्द्यकृत् ।
भग्नोऽन्यदेशिकादेशोऽनृतोऽन्यजनसंश्रयः ॥ ९९ ॥

तथेति । स्वकर्मविहिताचारः तद्विवर्जिता ऊनाः । शास्त्रं दृष्टिः । तद्वर्जिता हीनाः । ईशवर्जिताः स्रस्ताः । गुरुवर्जिता नष्टाः । सत्सङ्गवर्जिता दग्धाः । समाख्यया नाम्ना ज्ञेयाः । स्वकर्मविवर्जितानामनादिसंज्ञा इत्यर्थः ॥ ९८ ॥ ९९ ॥

निहीनान् प्राकृतेभ्योऽपि प्रच्युतान्परिवर्जयेत् ।
भक्तानाराधयन्विष्णोः प्राप्नोति परमम्पदम् ॥ १०० ॥

इति श्रीनारदपञ्चरात्र भारद्वाजसंहितायां परिशिष्टे
तृतीयोऽध्यायः ॥ ३ ॥

---

निहीनानिति । प्राकृतेभ्यो निहीनानपकृष्टान्प्रच्युतान्परिवर्जयेत्सवासनं त्यजेत् । प्राकृतान्प्रच्युताँस्त्यक्त्वा विष्णोर्भक्तानाराधयन् परमम्प्राप्नोति ॥ १०० ॥

इति श्रीभारद्वाजसंहितायां परिशिष्टटीकायां तृतीयोऽध्यायः ॥ ३ ॥

---

पुनरेव मुनिश्रेष्ठं पप्रच्छुस्ते महर्षयः ।
कथं निक्षेपजा वृत्तिर्विस्तारोऽस्याश्च कीदृशः ॥ १ ॥

प्रपन्नानुष्ठेयां वृत्तिं विस्तरेण प्रपंचयिष्यन् तद्विषयकमृषिप्रश्नमाह–पुनरेवेति । निक्षेपजा आत्मनिक्षेपान्तरमनुष्ठेयत्वतज्जन्यत्वोक्तिरुपचारात् कथं कीदृक्प्रकारा । अस्यावृत्तेर्विस्तारः कीदृशः कथंभूत इत्यर्थः ॥ १ ॥

भरद्वाजो महातेजाः श्रुत्वा तेषामिदं वचः ।
प्रत्युवाच परं हृष्टो भगवद्दास्यतत्ववित् ॥

भरद्वाज इति परं हृष्टः अतिसंहृष्टः ॥ २ ॥

विशुद्धज्ञानसलिलां भक्तिकल्लोलमालिनीम् ।
सत्सेवनस्वादुरसां दिव्यलक्षणवारिजाम् ॥ ३ ॥
वैराग्यतीरसुभगामाचारोपवनावृताम् ।
वृत्त्यापगां निषेवध्वं विष्णुसागरगामिनीम् ॥ ४ ॥

सकलार्तिहरतया वृत्तिं नदीत्वेन रूपयति–विशुद्धेति । विशुद्धज्ञानं दृष्टिरेव सलिलं यस्यास्ताम् सत्सेवनं सतां सेवैव स्वादुरसो यस्यास्ताम् । दिव्यलक्षणानि तापपुण्ड्रादीनि पङ्कजानि यस्यास्ताम् । वैराग्यं निषिद्धवर्जनमेव तीरं रोधः तेन सुभगां रम्याम् । आचारो विहिताचार एव उपवन्तेनावृताम् । विष्णुरेव सागरः तद्गामिनी तद्विषयावृत्तिरेवापगा नदी तां निषेवध्वं नितरां सेवध्वम् ॥ ३ ॥ ४ ॥

न्यासस्तीर्थाभिगमनं सुदृष्टिर्यजनं हृदि ।
स्वकर्मारण्यासनाविधिर्लक्ष्मावाहनसत्क्रिया ॥ ५ ॥
भक्तिस्तु विविधा भोगाः सत्सेवा हविरुत्तमम् ।
वैराग्ययोगनिर्विघ्ना यजध्वमनयेज्यया ॥ ६ ॥

भगवदाराधनात्मकतया वृत्तिमिज्यात्वेन रूपयति—न्यासेति न्यासः प्रपत्तिरेव तीर्थाभिगमनन्तीर्थाभिगमनशब्देन स्नानादिहव्यागपर्य्यन्तमङ्गमुच्यते । सुदृष्टिरेव हव्यजनं हव्यागाख्यमङ्गम् । स्वकर्माणि विहिताचारः आसनविधिः मन्त्रस्नानालङ्कारभोग्यपर्य्यङ्कार्पणरूपः सत्कारः । लक्ष्म चक्रादिधारणम् । आवाहनं मन्त्रयोगसमाह्वानं परपुष्पोपदर्शनम् । विविधाः नाना विधाः गन्धमाल्यादिभोगाः । सत्सेवा सतां सेवा उत्तमं श्रेष्ठतमं हविः । वैराग्यं निन्द्यवर्जनम् । एवं योगो ध्यानं तेन निर्विघ्नाः । यद्वा वैराग्ययोगेन वैराग्यसम्बन्धेन निर्विघ्नाः वैराग्यमेव योग उपायस्तेन निर्विघ्ना इति वा । अनया वृत्त्याख्यया इज्यया यजध्वम् ॥ ५ ॥ ६ ॥

भूमाविव परे पुंसि न्यस्तबीजवदात्मनि ।
विज्ञानमूलसन्तानः क्रियाचारनिबन्धनः ॥ ७ ॥
भक्तिप्रकाण्डविस्तारो वैराग्यरसपेशलः ।
नानालक्षणपुष्पाढ्यः सत्सेवनमहाफलः ॥ ८ ॥
उच्चैस्तरोऽतिविपुलः सर्वसन्तापनाशनः ।
सम्भवेत सदा सेव्यो हरिकैंकर्यपादपः ॥ ९ ॥

अथ परमपुरुषं भूमित्वेन तत्र न्यस्तम् आत्मानं बीजत्वेन दृष्टिं मूलसन्तानत्वेन विहिताचारं मूलबन्धनत्वेन भक्तिं स्कन्धत्वेन लक्ष्म पुष्पत्वेन सतां सेवां महाफलत्वेन एवं वृत्तिं तरुत्वेन रूपयति—भूमाविवेत्यादिभिः श्लोकैः । बीजवदात्मनि न्यस्ते सतीत्यर्थः । विज्ञानमूलसन्तानः विज्ञानं दृष्टिः मूलसन्तानः मूलपरम्परा । स्वक्रियामूलबन्धनः स्वक्रिया, विहिताचारः मूलबन्धनं नाम दार्ढ्यार्थं मूले मृदारूपाषाणादिभिर्वेद्यादिरूपेण विधीयमानो बन्धविशेषः । भक्तिप्रकाण्डविस्तारः प्रकाण्डः ।

स्कन्धः। वैराग्यरसपेशलः वैराग्यं निन्द्यवर्जनं तदेव रसः तेन पेशलः सनालः ससारः। नानालक्षणपुष्पाढ्यः लक्षणानि तापपुण्ड्रादिलक्ष्माणि तान्येव पुष्पाणि यस्य। सत्सेवनबृहत्फलः सतामाचार्यमुख्यानां सेवैव बृहत्फलं यस्य स तथोक्त उच्चैस्तरः परमपदप्रयाणपर्यन्तमनुवर्त्तनीयत्वादिति भावः। अतिविपुलः सर्वदेशानुष्ठेयत्वादिति भावः। सर्वसन्तापनाशनः इति तरुत्वानिरूपणम् ॥ ७ ॥ ८ ॥ ९ ॥

आदौ गुरूणां विज्ञानमथ तन्त्रार्थचिन्तनम्।
तत एवात्मनो ज्ञानं तद्धर्माणां च सर्वशः ॥ १० ॥
परस्य पुंसः श्रीशस्य परेशस्य परात्मनः।
स्वरूपरूपविभवगुणव्यापारचिन्तनम् ॥ ११ ॥
परिबर्हविभूषास्त्रपत्नीपरिजनात्मनाम्।
सर्वेषां चैव दिव्यानां गुणानामनुचिंतम् ॥ १२ ॥

आदावित्यादि। गुरूणां विज्ञानं तदुपसत्तिपर्यवसितमाचार्यत्वेन ज्ञानमित्यर्थः। आचार्याणामसावित्यारभ्याभगवत इति वक्ताचार्यपरम्परा ज्ञानादीनां परसम्प्रतिपन्ना परमपुरुषस्य परस्य ब्रह्मरुद्रादिनायकस्य परात्मनः सर्वान्तरात्मनः स्वरूपं दिव्यं तत्त्वरूपम्। रूपं विग्रहः। विभवो विभूतिर्गुणा ज्ञानादयः। आत्मगुणाः सौंदर्यादयः विग्रहगुणाश्च व्यापारा हिरण्यकशिपुरावणशिशुपालादिनिबर्हणादयः। दिव्यानां नित्यानां ये गुणास्तेषामनुचिन्तनमित्यन्वयार्थः॥१०॥११॥१२॥

विमानमण्डपोद्यानवापीकूपादिशालिनः।
नानाश्चर्यमयानन्तदिव्यप्रासादमालिनः ॥ १३ ॥

साप्सरो भूरिसङ्घस्य सदिव्यमृगपक्षिणः ।
पुरस्य दिवि लोकानां लोकस्य परिचिन्तनम् ॥ १४ ॥
तथा भगवतो व्यूहविभवार्चाव्यवस्थितेः ।
अन्तःस्थितेश्च जगतां सृष्ट्यादेश्च विचिन्तनम् ॥१५॥

विमानेत्यादि । विमानेत्यादिपुरविशेषणानि । वचनव्यत्ययेन तदव्यत्ययेन च दिव्यदेशदिव्यकालयोरपि विशेषणानि वा। देशा दिव्यजनपदाः। व्यूहा वासुदेवादयः। विभवा रामकृष्णादयः । अर्चाः श्रीवैकुण्ठनाथादयः । अन्तःस्थितेरन्तर्यामित्वस्य । सृष्ट्यादेरित्यत्रादिशब्दस्य स्थितिप्रलयार्थः ॥ १३ ॥ १४ ॥ १५ ॥

प्रधानमहदादीनां तत्त्वानामवबोधनम् ।
अण्डानां कालतत्त्वानां लोकानां भूतसंहतेः ॥ १६ ॥

प्रधानमिति । महदादीनामित्यत्रादिशब्देन इन्द्रियपञ्चतन्मात्राणां ग्रहणम् । भूतसंहतेः पञ्चमहाभूतानामित्यर्थः । जन्तुजालस्येति वार्थः । कार्यवर्गस्येतिवार्थः ॥ १६ ॥

परसम्बन्धविज्ञानं प्रकृतेः पुरुषस्य च ।
कर्मयोगस्य विज्ञानं धर्माणां चाप्यशेषतः ॥ १७ ॥
ज्ञानयोगस्य विज्ञानं भक्तियोगस्य चाखिलम् ।
तथैव न्यासयोगस्य साङ्गस्य परिचिन्तनम् ॥ १८ ॥

परेति । प्रकृतेः प्रधानस्य पुरुषस्य जीवस्य च परसम्बन्धविज्ञानं भगवच्छरीरस्वरूपसम्बन्धस्मृतिविशेषणज्ञानमित्यर्थः ॥ १७ ॥ १८ ॥

इहैव फलरूपाया वृत्तेः सम्यक् प्रदर्शनम् ।
देहान्निष्क्रमणस्यापि मार्गस्य च विचिन्तनम् ॥ १९ ॥

इहेति । देहनिष्क्रमणस्य उत्क्रान्तेर्मार्गस्य अर्चिरादिमार्गस्य ॥ १९ ॥

दिव्यलोकस्य संप्राप्त्या भर्तुरालोकनार्चया ।
निरस्तातिशया प्रीतिः सदा तस्याश्च भावना ॥ २० ॥

दिव्येति । दिव्यमार्गस्य परमपदस्य सम्प्राप्त्या भर्तुः परमपदसाधनस्य आलोकनाच्च या निरस्तातिशया प्रीतिः तस्याश्च भावना बोधना चिन्तनमित्यन्वयः ॥ २० ॥

भगवच्चरणाम्भोजानुभवप्रीतिजन्मनः ।
कैङ्कर्यस्य परा काष्ठा या तस्याश्च विचिन्तनम् ॥२१॥

भगवदिति । पराकाष्ठा भागवतपर्यन्तकैङ्कर्यम् ॥ २१ ॥

अनादेर्मोहकलनात्संसारावृत्तिहेतवः ।
प्रभवन्त्यात्मनां कर्मवासनारुचयो यथा ॥ २२ ॥

अनादेरिति । अनादेर्मायाकलनात् । अनाद्यविद्यासम्बन्धात्संसारावृत्तिहेतवः संसारचक्रपरिवृत्तिहेतवः । कर्माणि वासनारुचयश्च आत्मनां यथा येन प्रकारेण प्रभवन्ति तथा मतिरित्युत्तरेणान्वयः ॥ २२ ॥

यथा रागादयो दोषा नित्यं चात्मगुणच्छिदः ।
कारणान्यपचारेषु क्षिपन्ति च तथा मतिः ॥ २३ ॥

यथेति । आत्मगुणच्छिदः अहिंसाद्यध्यात्मगुणविरोधिनः कारणानि पुण्यपापकर्मद्वारा संसारबीजानि।रागादयो दोषाः अपचारेषु यथा क्षिपन्ति येन प्रकारेण पातयन्ति तथा मतिः तत्प्रकारस्य चिन्तनमित्यर्थः ॥ २३ ॥

विमर्श इह दुःखानां यातनानां परत्र च ।
विषयाणां च हेयत्वदर्शनं वृष्टिरुच्यते ॥ २४ ॥

विमर्श इति। इहास्मिँल्लोके दुःखानां परत्र लोके यातनानां विमर्शः चिन्तनम् ॥ २४ ॥

सैषा सुदृष्टिर्वृत्त्याख्यतरोर्मूलमुदाहृता।
अतोऽन्यथा कुदृष्टिर्हि तस्य सा मूलघातिनी ॥ २५ ॥

सैषेति। तस्य वृत्त्याख्यतरोः ॥ २५ ॥

प्रथमासनसंस्कारो निषेको विधिपूर्वकः
संस्कारास्त्वाव्रतादेशात्तत्र भोगक्रमा हरेः ॥ २६ ॥

अथ स्वाक्रियामूलबन्धन, इति वृत्त्याख्यतरुमूलबन्धनत्वेन निरूपयितुं विहिताचारं भगवदिज्यात्वेन रूपयन् विशदयति नवभिश्लोकैः—प्रथमेति। विधिपूर्वको निषेकः यथाशास्त्र-मनुष्ठितो गृहाश्रमः प्रथमासनं संस्कार इत्यर्थः। आव्रतादेशा-त्संस्कारा उपनयनपर्यन्तसंस्काराः पुंसवनसीमन्तोन्नयनजा-तकर्मनामकरणान्नप्राशनचौलरूपाः। तत्र प्रथममासने हरे-र्भोगक्रमा उपचारक्रमा इत्यर्थः ॥ २६ ॥

द्वितीयमासनं विष्णोरस्योपनयनक्रिया।
स्नानान्तास्तत्र संस्कारा बोद्धव्या भोगसम्पदः ॥ २७ ॥

एवं निषेकं प्रथमासनत्वेन उपनयनपर्य्यंतसंस्कारान् तदासनकर्त्तव्योपचारत्वेन च रूपयित्वा उपनयनं द्वितीयासन-त्वेन समावर्त्तनपर्य्यन्तान् संस्कारान् तत्रत्योपचारत्वेन रूपयति द्वितीयमिति। अस्य उपनयनक्रिया विष्णोः तद् द्वितीयासनं ज्ञानासनमित्यर्थः ॥ २७ ॥

वैवाहिको विधिर्धर्मो यस्तृतीयं तदासनम्।
गृहस्थधर्मा ये तत्र ते प्रसाधनविग्रहाः ॥ २८ ॥

अथ विवाहमलङ्कारासनत्वेन गृहस्थधर्मास्तत्रत्योपचारत्वेन च रूपयति-वैवाहिक इति। तृतीयमासनमलङ्कारासनमित्यर्थः। प्रसाधनविग्रहा उपचाररूपा इत्यर्थः॥ २८॥

योगक्षेमविधिर्नित्यस्तच्चतुर्थमिहासनम्।
ततः परेऽखिला यज्ञा हविषां विनिवेदनम्॥ २९॥
वनस्थाश्रमसम्प्राप्तिर्हरेः पञ्चममासनम्।
नियमा ये च तत्र स्युस्ते वै भोगास्तदाश्रयाः॥ ३०॥

अथार्थार्जनं भोज्यासनत्वेन अग्निष्टोमादियज्ञान् हविषां समर्पणत्वेन च तदाश्रमनियमान् तदासनकर्त्तव्योपचारत्वेन च रूपयति-योगेति। वनस्थेति पञ्चममासनं पुनर्मन्त्रासनमित्यर्थः। तत्र वनस्थाश्रमे ये नियमाः स्मृतास्ते नियमास्तदाश्रयाः पञ्चमासनकर्त्तव्या भोगा उपचारा इत्यर्थः॥ २९॥ ३०॥

यत्प्रव्रजन्ति तत्षष्ठमासनं परमात्मनः।
योगाख्यमतुलं शुद्धं तद्धर्मास्तत्र सत्क्रियाः॥ ३१॥

अथ चतुर्थाश्रमपर्यन्तं षष्ठासनत्वेन तदाश्रमप्रतिनियतधर्मास्तदासनकर्त्तव्यत्वोपचारेण च रूपयति-यदिति। यत्प्रव्रजन्ति संन्यस्यन्तीति यत् तत्संन्यसनं परमात्मनो नारायणस्य योगाख्यं योगापरनामधेयं षष्ठमासनम्। तद्धर्माः संन्यासधर्माः। तत्र योगासने कर्त्तव्याः सत्क्रिया उपचारा इत्यर्थः॥ ३१॥

सतामुत्क्रमणादेश्च कर्त्तव्या विधयः परे।
उद्वासनोपचारा वै भवन्ति दिवि शार्ङ्गिणः॥ ३२॥
अग्नौ तु परमे व्योम्नि ध्यायेतां नित्यमच्युतम्।
वैश्यत्वे चार्णवगतं शूद्रत्वे च भुवि स्थितम्॥ ३३॥

सतामिति । उत्क्रमणादिविहिताः कर्तव्याः परे उपरितना विधयः शार्ङ्गिण उद्वासनोपचारा भवन्ति ॥ ३२ ॥ ३३ ॥

इत्थं वर्णाश्रमादीनां नित्यनैमित्तिकादिकम् ।
विहितं कर्म सकलं विष्णोराराधनं परम् ॥ ३४ ॥

इत्थमिति । वर्णाश्रमादीनामित्यत्रादिशब्देन अबद्धो गृह्यते ॥ ३४ ॥

निबोधत महाप्राज्ञास्तदेतदखिलं पुनः ।
वृत्त्याख्यस्य तरोरेव सुदृढं मूलबन्धनम् ॥ ३५ ॥

निबोधतेति । 'निबोधत महाप्राज्ञा' इत्यनेन निर्णयोपयुक्ता प्रश्नोक्ता ॥ ३५ ॥

त्यागेन कर्मणां स्वस्य निषिद्धकरणेन च ।
आज्ञातिक्रमणं यत्तन्मूलबन्धोपघातकम् ॥ ३६ ॥

विहिताचारान्मनोवृत्त्याख्यतरुमूलबन्धनस्य अकृत्यकरणकृत्याकरणाभ्यां भगवदाज्ञाविलङ्घनं मूलबन्धोपघातकमित्याह—त्यागेनेति स्वस्य कर्मणां स्ववर्णाश्रमविहितकर्मणामित्यर्थः ॥ ३६ ॥

विहितैवमुपावृत्तिर्विशुद्धपरिवारके ।
विशुद्धे ब्रह्मणि परे प्रीत्या सा भक्तिरुच्यते ॥ ३७ ॥

अथ भक्तिकाण्डं विस्तारयति । वृत्त्याख्यतरुस्कन्धत्वेन रूपितां भक्तिं प्रपञ्चयति दशश्लोक्या—विहितैवेति । विशुद्धपरिवारके अशुद्धपरिवाररहिते विशुद्धे देवतान्तर्यामिभावमन्तरेण स्वस्वरूपेणावस्थिते परे ब्रह्मणि या वृत्तिराराधनात्मिका विहिता विधिना बोधिता सैव प्रीत्या कृता भक्तिरु

च्यत इत्यर्थः। विहितेत्यनेन प्रीतिमूलाया अप्यशास्त्रीयवृत्ते-र्भक्तित्वव्युदासः। विशुद्धपरिवारक इत्यनेनाशुद्धपरिवारकवि-षयिकाया वृत्तेः, विशुद्ध इति देवतान्तर्य्यामिविषयिकाया वृत्तेः प्रीत्यतिशयेन कृतायाश्च भक्तित्वं व्युदस्तमिति वेदितव्यम् ३७॥

श्रुतिस्मृतीतिहासाद्यैर्दिव्यार्षागमविस्तरैः।
ब्रह्मसूत्रपदैर्मन्त्रैः सन्निबन्धैः सुयुक्तिभिः॥ ३८॥

श्रुतीति। इतिहासाद्यैरित्यत्राद्यशब्दः पुराणपरः। दिव्या-र्षागमविस्तरैः दिव्यागमविस्तरैरार्षागमविस्तरैश्चेत्यर्थः। साक्षाद्भगवन्मुखोद्गततया रत्नत्रयमिति प्रसिद्धा संहिता लक्ष्मी-तन्त्रादयश्च दिव्यागमविस्तरा आर्षागमविस्तरा ऋषिमुखा-त्प्रवर्तिता अपि संहिताः। ब्रह्मसूत्रपदैः अथातो ब्रह्मजिज्ञासे त्यारभ्यानावृत्तिः शब्दादित्यन्तैः तत्तन्मन्त्रकल्पैः सन्निबन्धैः सद्भिः प्रणीतैः निबन्धैः न्यायतत्त्वप्रभृतिभिः सतर्कसुयुक्तिभिः बलैः साधनैः॥ ३८॥

नाथस्य रूपविभवस्वरूपगुणकर्मणाम्।
कीर्त्तनं ख्यापनं चिन्ता भृशं व्यक्तिषु चादरः॥ ३९॥

नाथस्येति। नाथस्य शेषिणो भगवतः रूपविभवस्वरूपगुण-कर्मणां विग्रहविभूतिस्वरूपगुणचेष्टानां चिन्ताविमर्शनमित्य-न्वयः। कीर्त्तनमुच्चारणं ख्यापनं परस्मै प्रतिपादनं व्यक्तिषु अर्चावतारेषु॥ ३९॥

स्तुतिर्नतिः परिक्रामः प्रीतिरात्मनिवेदनम्।
उपहाराच्छेषरतिः समीपपरिवर्त्तनम्॥ ४०॥

स्तुतिरिति। स्तुतिः स्तोत्रम्। नतिः साष्टाङ्गादिरूपः प्रणा-मः। परिक्रमः प्रदक्षिणम्। प्रीतिः स्तुत्यादिजनितः सन्तोषः।

प्रेम्णा आत्मनिवेदनमात्मसमर्पणम् । उपहारः नैवेद्यसमर्पणम् शेष इति भगवद्भक्तोत्तारितान्नादिषु रतिः । समीपपरिवर्तनम् अर्चावतारं विहाय गन्तुमशक्ततया तत्समीप्रदेश एव सञ्चारणम् ॥ ४० ॥

दिव्यार्चायतनग्रामपुरराष्ट्रादिसम्पदाम् ।
निष्पादनं तथारामतटाकादिप्रकल्पनम् ॥ ४१ ॥

दिव्येति । दिव्यार्चायतनग्रामपुरराष्ट्रादिसम्पदाम् । निष्पादनम् इत्यत्र दिव्यार्चादीनां प्रत्येकं निष्पादनेनान्वयः । दिव्यार्चानिष्पादनं नाम अर्चाविग्रहराहिते तत्सम्पादनम्।जीर्णोद्धारः आयतनं विष्ण्वालयः। ग्रामादीनां भगवदर्चा ग्रामादीनां निष्पादनं सम्पादनमित्यर्थः । आरामतटाकादिप्रकल्पनमित्यत्रापि भगवदर्चारामादिकल्पनं मन्तव्यम् ॥ ४१ ॥

स्थापनार्चनयात्रादिमङ्गलानां प्रवर्तनम् ।
आस्थानासनयोग्यानां पात्रोपकरणस्य च ॥ ४२ ॥

स्थापनेति । स्थापनं विग्रहप्रतिष्ठापनम् । अर्चनं नित्याराधनम् । यात्रा पक्षोत्सवमासोत्सवादिषु भगवतो ग्रामप्रदक्षिणादिरूपा । आस्थानासनयोग्यानामास्थाने आसनदाने च योग्यानां चोपकरणानामिति शेषः ॥ ४२ ॥

स्नानप्रसाधनहविःशय्यान्तःपुरसंपदाम् ।
संग्राममृगयाणाञ्च क्रीडोपकरणस्य च ॥ ४३ ॥

स्नानेति । प्रसाधनमलङ्कारः ॥ ४३ ॥

दिव्यानां मानुषाणां च सेवकानां पृथक्पृथक् ।
अन्येषां चैव भोगानां चेतनाचेतनात्मनाम् ॥ ४४ ॥

निष्पादनं रक्षणं च संस्क्रियोपनयादि च ।
भक्त्या च नियतौत्सुक्यं स्वयमाराधनक्रियाः ॥ ४५ ॥

दिव्येति । संस्क्रिया मालिन्याद्यपाकरणादिरूपः संस्कारः ॥ ४४ ॥ ४५ ॥

इत्येतत्सकलं काण्डस्कन्धशाखादलाङ्कुरम् ।
देवतान्तरभक्तिस्तु निरासस्तस्य हा शनिः ॥ ४६ ॥

इतीति । निर्गलितासङ्गसन्निर्गलितेतरसङ्गविषयसङ्घा-तस्य तस्य तरोः काण्डस्कन्धशाखादि यस्य तरोः ॥ ४६ ॥

अथ पुष्पं फलञ्चास्य लक्ष्म सत्सेवनन्तथा ।
युक्तोऽप्यन्यैर्विना पुष्पैः फलैरवति कस्तरुः ॥ ४७ ॥

'नानालक्षणपुष्पाढ्यः सत्सेवनबृहत्फल' इति वृत्त्याख्यतरोः पुष्पतया रूपितानां लक्ष्मणां फलतया रूपितस्य सत्सेवनस्य च प्रपञ्चनमधिकरोति–अथेति । लक्ष्म पुष्पं सत्सेवनं फलमित्य-न्वयः ॥ ४७ ॥

प्रतप्तैर्भगवद्दिव्यायुधैर्गात्रेषु लाञ्छनम् ।
सततं च हरिक्षेत्रोद्धृतमृत्स्नोर्द्ध्वपुण्ड्रकः ॥ ४८ ॥
पद्मबीजमयी माला तुलसीदिव्यचूर्णकम् ।
पवित्रञ्चाथ कौपीनं व्यतिस्यूता च मेखला ॥ ४९ ॥

अथ लक्ष्म चतुःश्लोक्या प्रपञ्चयति–प्रतप्तैरिति । गात्रेषु भुज-द्वयललाटशिरोहृदयेषु, बाह्वोर्ललाटे शिरसि हृदये चाग्रजन्म-नामिति प्रागुक्तत्वात् । तुलसीदिव्यचूर्णकं तुलसीहारिद्राचूर्णम् । ततो दिव्यञ्च हारिद्रं सहेम तुलसीदलम् । मन्त्रेण धारयेच्चूर्णं ललाटे मस्तके तथेति प्रागुक्तत्वात् । पवित्रमिति न कौपीन-

विशेषणं किन्तु भगवता पवित्रारोपणोत्सवे धृतपट्टकार्प्पासादितन्तुनिर्मितमूलादिशेषपरम् । व्यतिस्यूता व्यत्यासेन स्यूता मेखला कटिसूत्रम् ॥ ४८ ॥ ४९ ॥

पञ्चायुधाब्जतार्क्ष्यादिलक्षणाभरणादिकम् ।
वेषश्चानुल्बणः शौक्ल्यं दन्तहृत्पुण्ड्रवाससाम् ॥ ५० ॥

पञ्चायुधेत्यादि । पञ्चायुधलक्षणम् अब्जलक्षणं तार्क्ष्यादिलक्षणं चाभरणं यथोक्तलक्षणरूपशब्दचिह्नपरपंचायुधादिचिह्नितपराभरणमित्यर्थः । आभरणादिकमित्यत्रादिशब्देन उष्णीषादिग्रहणम् । वेषश्चानुल्बण इति अतिशब्दायमानातिसूक्ष्मवस्त्रादिधारणादिकमुल्बणवेषतया स्मृतिप्रसिद्धं तच्चिह्नवेषा इत्यर्थः । शौक्ल्यं दन्तहृत्पुण्ड्रवाससामिति अत्र वैरूप्याय शुक्लशब्दः शुद्धिपरः । पुण्ड्रादेः शुभ्रत्वं वचनान्तरसिद्धम् । वैरूप्यायेति हृदि शुद्धिरित्यादि ॥ ५० ॥

विष्णोस्तत्संश्रयाणाश्च चेतनाचेतनात्मनाम् ।
आख्ययाव्यपदेशश्च लक्षणानि सतां विदुः ॥ ५१ ॥

विष्णोरित्यादि । विष्णोराख्यया भगवन्नाम्ना चेतनाचेतनात्मनाश्चेतनरूपाणामचेतनरूपाणां तत्संश्रयाणां विष्णुसंश्रयाणाम् आख्यया परांकुशः, परकाल इत्यादिकया श्रीरङ्गवेङ्कटाद्रिर्हस्तिगिरिरित्यादिकया व्यपदेशश्चेत्येतानि सतां लक्षणानि विदुरित्यर्थः ॥ ५१ ॥

लक्ष्मणामपचारेण विरुद्धानाञ्च धारणात् ।
कैंकर्य्यामोदसम्पत्तिर्नश्येन्मोहश्च जायते ॥ ५२ ॥

पुष्पत्वेन लक्ष्मणां रूपितत्वात्तद्धारणे कैङ्कर्यामोदनं वृत्तिर्नास्तीत्याह-लक्ष्मणामिति । अपचारेण लक्ष्मणां भगवल्लक्ष्मा

धारणेनाविरुद्धानां देवतान्तरचिह्नानां धारणात् । अपचारेण लक्ष्मणां भगवल्लक्ष्मधारणकैंकर्यामोदनवृत्तिनाशः अन्यलक्ष्म धारणे मोह इति विवेकः । उभयत्र वा द्रष्टव्यम् ॥ ५२ ॥

पत्युर्ज्ञानमयी वृत्तिर्विष्णोः प्रियमिहोच्यते ।
ये सन्ति तत्र निरतास्ते सन्त इति कीर्त्तिताः ॥ ५३ ॥

अथ सच्छब्दार्थकथनपूर्वकम् सत्सेवां प्रपञ्चयति चतुर्दशभिः—पत्युरिति । पत्युः शेषिणः ॥ ५३ ॥

सर्वात्मना हि या वृतिस्तेषु भक्तिमयी परा ।
सा भक्तेः परमा काष्ठा वृत्तेश्च परमात्मनि ॥ ५४ ॥

सर्वात्मनेति । तेषु सत्सु भक्तिमयी सर्वात्मना परा उत्कृष्टा या वृत्तिः सा परमात्मनि भक्तेर्वृत्तेश्च पराकाष्ठा सत्सु भक्तिः परमात्मनि भक्तेः पराकाष्ठा, सत्सुवृत्तिः परमात्मनिवृत्तेः पराकाष्ठेत्यर्थः ॥ ५४ ॥

आचार्यवद्दैवतवन्मातृवत्पितृवत्स्ववत् ।
सुहृद्वत्स्वामिवत्सन्तो द्रष्टव्या राजवत्तथा ॥ ५५ ॥

आचार्यवदिति।स्ववदात्मवद् धनवदिति वा । आचार्य्यादिविषये यादृशी प्रीतिः तादृशी सत्सु कर्त्तव्येत्यर्थः ॥ ५५ ॥

श्रुत्वैव सहसोत्थानम्प्रत्युत्थानं सुदूरतः ।
दर्शनानुभवः प्रीतिः प्रणिपातोऽभिवादनम् ॥ ५६ ॥

श्रुत्वेति । सन्त आयान्ति इति श्रुत्वैवेत्यर्थः । सहसोत्थानम् अविलम्बेनोत्थानम् । दूरतः दूरादेव अभिगमनन्तदभिमुखेन गमनम् । निवदनं तवाहमस्तीत्यात्मनिवेदनम् ॥ ५६ ॥

नीचैः संश्लेषणं हस्तदानं मार्गप्रदर्शनम् ।
पश्चात्पार्श्वपुरोयानञ्चयालोकाभिभाषणम् ॥ ५७ ॥

नीचैः संश्लेषणम् अहङ्काराभावाद्यो नतिकारेण संगमः शेषत्वद्योतकमिति शेषः। पुरोयानं शेषत्वद्योतनङ्कीदृशमित्यपेक्षायामाह–नीचैरिति । जयालोकाभिभाषणमिति तदर्थे पुरोयानं शेषत्वद्योतकमिति भावः ॥ ५७ ॥

गृहोपनयनश्चान्तर्देशक्रमणमासनम् ।
पादावनेजनश्चार्घ्योपहारः स्वागतादि च ॥ ५८ ॥

गृहेति । गृहोपनयनं स्वगृहप्रापणम् । अन्तर्देशाक्रमणं तान्स्वगृहाभ्यन्तरे नीत्वा तैरन्तर्वेशसञ्चारणम् । उपवेशनम् आसनदानमित्यर्थः। पादावनेजनं पादप्रक्षालनम् ॥ ५८ ॥

प्रसादनं क्षमापणञ्च प्रीतिसंकथनानि च ।
उपासनं प्रश्रयणमात्मात्मीयनिवेदनम् ॥ ५९ ॥

प्रसादनमिति । प्रसादनं प्रसीदेत्युक्त्या प्रसादोत्पादनम् । क्षमापणं क्षमस्वेत्युक्त्या प्रीतिसंकथनानि प्रीतिमूलानि संकथानि संल्लापाः । उपासनं समीपेऽवस्थानम् । पादसंवाहनाद्यात्मकशुश्रूषा वा । प्रश्रयणं विनयः ॥ ५९ ॥

आज्ञाभ्यर्थनमालोकनिदेशवचनादरः ।
साधनं सम्पदामिष्टादरोऽनिष्टनिवर्त्तनम् ॥ ६० ॥

आज्ञेति । आज्ञाभ्यर्थनम् अभीष्टकर्मण्याज्ञापयेत्याज्ञार्थनम् । आलोकनिर्देशवचनादरः आलोके तत्कटाक्षे तन्निदेशवचने आज्ञावचने चादरः । कदा वा कटाक्षं मयि निक्षिपेत्कदा वा स्वकैङ्कर्ये आज्ञापयेदित्यभिरातिः।साधनं सम्पदां शाकफलादीनां तदभ्यवहारार्थानां पाचनम् । छत्रचामराद्युपकरणसम्पादनं वा । इष्टादरः तदिष्टसम्पादने आदरः ॥ ६० ॥

विरहानर्थपीडावमाननाद्यसहिष्णुता।
दास्याभिमानोऽनुव्रज्या श्रवणं कीर्त्तनं स्मृतिः ॥६१॥

विरहेत्यादि। विरहस्य तद्विश्लेषस्य अनर्थस्य तदर्थहानेः पीडायास्तद्दुःखस्य अवमानना परकृततदवमाननस्य चासहिष्णुता। दास्याभिमानः अस्याहं दास इति सुदृढनिश्चयः। अनुव्रज्या तेषु गच्छत्सु सत्सु अनुव्रजनम्। श्रवणं तद्योगक्षेमगुणानुष्ठानादिश्रवणम्। कीर्त्तनं स्वयमन्येभ्यस्तत्कथनं तन्नामकीर्त्तनं वा स्मृतिस्तत्स्मरणम् ॥ ६१ ॥

भक्तिज्ञानसमाचारवैराग्याद्यनुमोदनम्।
संगमेच्छोपगमनमन्वक्स्थानासनादिकम् ॥ ६२ ॥

भक्तीति। सङ्गमेच्छा समागमेच्छा उपगमनं तानुद्दिश्य तत्समीपगमनम्। अन्वक्स्थानादिकम् अन्वक्पश्चात्स्थानम्। उपस्थानम् आसनादिकमित्यत्रादिशब्देन गमनसंग्रहः ॥ ६२ ॥

समानसुखदुःखत्वं मिथश्चार्थविचिन्तनम्।
क्रियाकाले तु वरणं सदस्याग्रे तु पूजनम् ॥ ६३ ॥

समानमिति। समानसुखदुःखत्वं तत्सुखदुःखाभ्यां सुखदुःखत्वम्। मिथश्चार्थविचिन्तनन्तत्त्वार्थविचारणं वैदिकविचारे सहायकरणम्। क्रियाकाले स्वस्य यज्ञाद्यनुष्ठानकाले वरणम् ऋत्विगादीनां वरणम्। सदस्याग्रे तु पूजनं गरिष्ठे अग्रपूजा ॥ ६३ ॥

परिषत्सु च सान्निध्यं संविदाश्च प्रवर्त्तनम्।
तथाभ्यनुज्ञापूर्वं च सर्वार्थेषु प्रवृत्तयः ॥ ६४ ॥

परिषदिति। सान्निध्यं सन्निधाववस्थानम्। संविदां प्रवर्त्तनं तत्प्रतिज्ञापरिपालनं तत्सङ्कल्पपरिपालनं वा ॥ ६४ ॥

प्रच्छादनञ्च दोषाणां गुणानां ख्यापनन्तथा ।
क्वचिन्नैवाप्यधर्मेण कृच्छ्रेणाप्यर्थसाधनम् ॥ ६५ ॥

प्रच्छादनमिति । दोषाणान्तदीयानामिति शेषः एवं गुणानामित्यत्रापि क्वचिन्नैवेति । तेषामत्यन्तवृत्तिकर्शितत्वावस्थायामित्यर्थः । तेन 'विनैव प्रतिषिद्धेन सर्वार्थान्साधयेत्फल,मित्यनेन न विरोधः ॥ ६५ ॥

एताश्चान्याश्च विविधा वृत्तयो रसनिर्भराः ।
विष्णुभक्तेषु वृत्त्याख्यतरोर्हि फलसम्पदः ॥ ६६ ॥

एताश्चेति। रसनिर्भराः भक्तिपरिबृंहिताः । स्वयम्प्रयोजनभूता इति वा फलपक्षे रसपूर्णाः ॥ ६६ ॥

सतामाचार्यमुख्यानामपचाराः पृथग्विधाः ।
असतामिव संसर्गास्समूलफलनाशनाः ॥ ६७ ॥

सतामिति । सतां विषये अपचाराः असत्संसर्गाश्च एतत्फलनाशका इत्याह । सतामिति असतामिवेत्यत्र इवकारो भिन्नक्रमः । असतां संसर्गश्च एवेत्यर्थः ॥ ६७ ॥

दास्यामृतरसास्वादतर्षादत्यन्तमीशितुः ।
वैरस्येन विरुद्धानां हानं वैराग्यमुच्यते ॥ ६८ ॥

अथ तज्ज्ञानमूलसन्तानस्वक्रियाचारबन्धनः । भक्तिप्रकाण्डविस्तारो वैराग्यरसपेशल इति वैराग्यशब्देनोक्तं दृष्ट्यादिविरुद्धवर्जनमित्याह-दास्यामृतेत्यादि।ईशितुर्भगवतः दास्यमेवामृतरसः।तस्यास्वादे यस्तर्षस्तृष्णा तस्माद्धेतोः अत्यन्तवैरस्येन विरुद्धेषु नितरां वैरस्येन विरुद्धानां दृष्टिविहिताचार

भक्तिलक्ष्मसत्सेवाविरुद्धानां संत्यागो वैराग्यमुच्यते, वैराग्य रसपेशल इत्युक्तं वैराग्यं दृष्ट्याादिविरुद्धवर्जनमित्यर्थः ॥ ६८ ॥

श्रुतिभिः पञ्चरात्रेण स्मृतिभिस्तत्त्वदर्शिनाम्।
दर्शितान्यर्थतत्त्वानि न हि मन्दधियो विदुः ॥ ६९ ॥
ब्रह्मरुद्रमुखा देवा विविधाश्च महर्षयः।
मनुष्या नागयक्षाश्च सिद्धविद्याधरास्तथा ॥ ७० ॥
तत्तत्कार्योपपत्त्यर्थं शासनाच्च जगत्पतेः।
रजस्तमोऽभिभूत्या च जगुः शास्त्राण्यनेकशः ॥ ७१ ॥
विपरीतार्थतत्त्वानि क्षुद्रनानाफलानि च।
अपवर्गकथावन्ति मोहनान्यद्भुतानि च ॥ ७२ ॥

श्रुतिपञ्चरात्रमन्वादिस्मृतिसात्त्विकपुराणेतिहासदृष्टिः, तद्विरुद्धवर्जनं दृष्टिविरुद्धवर्जनमित्याह। श्रुतिभिरित्यादिभिः पञ्चदशभिः श्लोकैः। श्रुतिभिरिति। श्रुतिशब्देन वेदः। वेदार्थस्मरणमूलतया इतिहासपुराणयोरपि संग्रहः। तत्त्वदर्शिनां स्मृतिभिरित्यनेन रजस्तमोमूलव्यावृत्तिः। तत्तत्कार्योपपत्त्यर्थम्। असुरमोहनादिकार्यसिद्ध्यर्थम्। 'शासनाच्च जगत्पतेरि'त्यनेन 'सत्त्वं हि रुद्रमहाशास्त्रादिकारये'त्यादिकं स्मारितम् विपरीतान्यर्थतत्त्वानि येषामिति बहुव्रीहिः। क्षुद्रनानाफलानि क्षुद्राणि शिशुभावे नानाविधानि फलानि येषां तानि। अपवर्गकथावन्ति मोक्षप्रस्तावन्ति मोक्षकथनमात्रमेव न मोक्ष इति भावः। मोहनानि मोहाविपरीतभूतानि विशेषेण पाषाणभेदनाद्यद्भुतकार्यकरत्वाद्वा आश्चर्यकथायुतत्वाद्वा अद्भुतत्वम् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

अपरेषामपि पुनस्तत्तन्मार्गानुसारिणाम्।
धर्मवादच्छलोपेता ये च स्युर्ग्रन्थविस्तराः ॥ ७३ ॥

अपरेषामिति। परेषां ब्रह्मरुद्रादिव्यतिरिक्तानां तत्तन्मार्गानुसारिणां हैरण्यगर्भपाशुपतादिमतानुसारिणां धर्मवादच्छलोपेताः धर्मवाद एव च्छलं कपटं तेनोपेताः। धर्मवादव्याजेन मोहनाद्यर्थप्रवृत्ता इत्यर्थः ॥ ७३ ॥

हरेरालोकहीनानामद्यापि किल पश्यत।
तेषु तेष्ववगाहेन भवन्ति ज्ञानविप्लवाः ॥ ७४ ॥

हरेरिति। हरेरालोकहीनानां जायमानदशायां भगवत्कटाक्षरहितानामपरेषां ये प्रबन्धविस्ताराः सन्ति तेष्वलगाहेन ज्ञानविप्लवो भवति, पश्यतेत्यन्वयः ॥ ७४ ॥

वेदानां सोपनिषदां पौरुषेयत्वचिन्तनम्।
पञ्चरात्रे च सकले तन्त्रान्तरसमत्वधीः ॥ ७५ ॥

वेदानामिति। पश्यतेत्यस्य एतद्ग्रन्थविस्तारावगाहिनः ते विप्लुतज्ञाना एवं वर्त्तन्ते, ते भवद्भिरपि साक्षात्कर्त्तुं शक्याः॥ तेन मया वक्तव्यमस्तीति भावः। पौरुषेयत्वचिन्तनं पुरुषप्रणीतत्वमतिः सकले कृत्स्ने एतेन पञ्चरात्रे एकदेशे प्रामाण्यं नास्तीत्युक्तं भट्टपाराशरपादैः। पञ्चरात्रे सर्वत्रैव प्रमाणं तदिदमवगतं पंचमी देवदेवादिति। तन्त्रान्तरसमत्त्वधीः पाशुपतादितन्त्रसाम्यबुद्धिः समताबुद्धिः ॥ ७५ ॥

वृद्धानां चैव मुक्तानां नित्यानां च तथात्मनाम्।
अच्युतादन्यशेषत्वशंका च समताभ्रमः ॥ ७६ ॥

वृद्धानामिति। शिवादिष्वच्युतसाम्यबुद्धिः ॥ ७६ ॥

तस्य चान्येशितव्यत्वबुद्धिर्विश्वपृथक्त्वधीः।
विभूतिगुणरूपादिविशेषविरहभ्रमः॥ ७७॥

तस्येति। तस्याच्युतस्य अन्येशितव्यत्वस्य बुद्धिः। विश्वस्य बुद्धिः विश्वस्यापृथक्त्वधीः॥ ७७॥

अन्यतो जगदुत्पत्तिस्थितिप्रलयचिन्तनम्।
योगानां चैव सर्वेषां नित्यादेः कर्मणस्तथा॥ ७८॥

अन्यत इति। अन्यतो जगदुत्पत्तिस्थितिप्रलयचिन्तनम् जगतो भगवतोऽन्यस्माद्दुत्पन्नत्वादिचिन्तनमित्यर्थः। योगानां कर्मयोगभक्तियोगानामनित्यादेरित्यादिशब्देन नैमित्तिककाम्ययोर्ग्रहणम्॥ ७८॥

ज्ञानभक्त्यंकसत्सेवातत्त्वानां चाविचिन्तनम्।
विरुद्धानां च सर्वेषामपायत्वविमर्शनम्॥ ७९॥

ज्ञानेति। ज्ञानं दृष्टिः अङ्को लक्ष्म। ज्ञानभक्त्यङ्कसत्सेवारूपाणां तत्त्वानां तत्त्वशब्देन महदादीनि तत्त्वानि विवक्षितानि। विरुद्धानां दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धानाम्॥७९॥

तथानादेरविद्यायाः स्वरूपस्यानिरूपणम्।
हरेरालोकनान्तायास्तस्याश्चान्यनिवर्त्यधीः॥ ८०॥

तथेति। हरेरालोकनान्तायाः भगवत्कटाक्षैकनिवर्त्यायाः भगवद्दर्शनेन निवर्त्यायाः इति वा। तथा च श्रुतिः। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि यस्मिन्दृष्टे परावर' इति। दर्शनं च प्रत्यक्षसमानाकारा ध्रुवा स्मृतिः। सत्त्वशुद्धौ च ध्रुवा स्मृतिः। स्मृति

(१) उपनिषदि तु तस्मिन्निति पाठान्तरम्।

लम्भे सर्वग्रन्थीनां विप्रमोक्ष, इति ग्रन्थिभेदनस्य ध्रुवानुस्मृति कार्यरूपतया श्रुत्यैव प्रतिपादनात् । सर्वस्यामेवश्रुतौ स्मृति समानाकारदर्शनमेव विधीयत इति न वाच्यम्। अतिशयाभाव प्रसङ्गात दर्शनस्य स्मृतिपदेनोपचारे अपिशाब्दत्वमेव लभ्यते दर्शनपदेन स्मृतेरुपचारे तु विशदतमत्वं तस्या लभ्यत इत्यस्यैवोपपन्नत्वादिति एतस्मादपि व्याख्यानात् भगवत्कटाक्ष निवर्त्याया इति व्याख्यानमेव साधीयः । अन्यथा प्रपदनासंग्रहात् । उपासनेन प्रपदनेन वा यथाधिकारमनुष्ठितेन प्रीतो भगवान्संसारसागरान्निर्गमनं सङ्कल्पयेदित्यस्य चेतनेक्षेति हि वेदान्तसिद्धान्तः । तथा चोक्तं वेदान्ताचार्यैर्यथा । ' हेमार्चना भरणासनप्रतिभिः समाराधितः फलं दिशति देहिना'मिति हि सम्प्रदायस्थितिः श्रुतिस्मृतिगुरुयुक्तिभिर्नयदिति कराराधिति न इति हरेरालोकनं चात्र मोक्षयिष्यामीति सङ्कल्पः। तस्या अविद्यायाः अन्यनिवर्त्यधीः भगवत्कटाक्षभिन्ननिवर्त्यबुद्धिः ॥ ८० ॥

फलानां चान्यतः प्राप्तिश्चिन्ता निःश्रेयसस्य च ।
हरेः कैङ्कर्य्यसम्प्राप्तिर्व्यतिरिक्तामृतत्वधीः ॥ ८१ ॥

फलानामिति । फलानां निःश्रेयसः मोक्षस्य चान्यतः भगवद्व्यतिरिक्तात्प्राप्तौ चिन्ता लाभबुद्धिः। भगवद्व्यतिरिक्तः कर्मफलानां मोक्षस्य च प्रदातेति बुद्धिरित्यर्थः । अन्योपासकानामपि चेतनानां तदादिचेतनानां तदादिदेवतान्तर्यामितयावस्थाय तैराराधितः स एव भगवान् तद्धृदयेप्सितानि प्रयच्छति ॥ ८१ ॥

---

( १ ) आदर्शपुस्तकान्तरालाभाच्छोधयितुमेतद्वचनमशक्तोऽस्मि संवृत्तः । ( शोधकः ) ।

विशेषेणाप्यनर्थेषु देहादिष्वर्थतामतिः।
इत्यादयो वहुविधा महापापाः कुदृष्टयः ॥ ८२ ॥
हरेः प्रियतमं ज्ञानं सन्तो ज्ञानधना ह्यतः।
तथैव चापचाराणां काष्ठा ज्ञानविपर्य्ययः ॥ ८३ ॥
ज्ञानस्य कर्मणा गुप्तिर्हतं ज्ञानमकर्मणा।
प्रवृत्त्या प्रतिषिद्धेषु ज्ञानं कर्म च नश्यति ॥ ८४ ॥
अचिन्ता च विनिन्दा च मतिपूर्वं च वर्जनम्।
विहितानाञ्च धर्माणां सर्वज्ञात्मावघातकम् ॥ ८५ ॥
स्वरूपस्य विनाशाय रुचिर्निन्द्येषु कर्मसु।
विषयेषु च सर्वेषु लौल्यं विषमधुस्पृहा ॥ ८६ ॥
विष्णोर्विद्वेषयुक्तस्य वैमुख्यं प्रतिपत्तिषु।
प्रवृत्तिश्चापचारेषु सम्यगात्मविनाशनम् ॥ ८७ ॥
अन्यतान्त्रिकदेवानां संसर्गप्रतिपत्तिषु।
प्रवृत्तिरच्युतैकान्त्यनियमाध्वरनाशिनी ॥ ८८ ॥
लक्षणानि हि पुष्पाणि मुकुन्दचरणार्चने।
तदभावपरीभावौ प्रध्वंसनकरावुभौ ॥ ८९ ॥
अन्यपुण्ड्राङ्कनादीनां धारणं दृष्टिनाशनम्।
परचिह्नव्रणं गात्रे भ्रंशाय नरकाय च ॥ ९० ॥
सतामसेवनान्नित्यमसताञ्च निषेवणात्।
क्षीयन्ते चाथ नश्यन्ति ज्ञानवैराग्यभक्तयः ॥ ९१ ॥
महापचारो देवस्य भक्तानाम्भुवि शार्ङ्गिणः।

धर्मरक्षानियुक्तानां समयस्य व्यतिक्रमः ॥ ९२ ॥
एते चान्ये च विविधा ह्यपचाराः सुदुःसहाः ।
वैराग्यं वर्जनं तेषां लज्जामानमदादिभिः ॥ ९३ ॥
वृत्तेर्हि जीवितं गुप्तिः सारो वैराग्यमुच्यते ।
वैराग्ययुक्ता हि नरा यजन्त्यप्रच्युतान्तराः ॥ ९४ ॥
अनुज्झितक्रियायोगा ज्ञानवैराग्यशालिनी ।
इति भक्तिमयी वृत्तिः पुनरेव प्रपञ्चिता ॥ ९५ ॥
इत्थं किलात्मनो न्यासाज्जातो वृत्त्याख्यपादपः ।
असौ फलमयः[1] सेव्यस्तेन्न चोत्पद्यते विना[2] ॥ ९६ ॥
सुसूक्ष्मत्वाद्दुरापत्वान्महत्त्वाद्गौरवादपि ।
मयायं परमो धर्मः प्रोक्तः स्थित्यै पुनः पुनः ॥ ९७ ॥
वृत्तिं सन्तोऽनुभूयेमामनुरूपहिमात्मनः ।
परत्र चानुमोदन्ते परमेण विपश्चिता ॥ ९८ ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे चतुर्थोऽध्यायः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ।

---

( १ ) तृत्फलम् । ( २ ) उत्तरान्वयि ।

पुस्तकमिलनेकाठिकाना-खेमराजश्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालय-बंबई.



श्रीवेङ्कटेशाय नमः ।

# नारदपञ्चरात्र-

## ( भारद्वाजसंहिता )

प्रयागराजप्रान्तवर्ति-पं० सरयूप्रसादमिश्रकृत-

टीकासहिता ।






सेयम्


खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रागारे

मुद्रयित्वा प्रकाशिता ।





कार्तिक संवत् १९६२, शाके १८२७.






B4

# भूमिका।



असारेऽस्मिन्संसारे धर्मार्थकाममोक्षसाधनैकेहेतुरिदमतिदुर्लभं नरशरीरं पूर्वार्जितपुण्यपुञ्जेनैव लभ्यते । तत्रापि धर्मार्थकाममोक्षेषु धर्मार्थकामास्तु कथंचिदपि सिध्यंत्येव परं च मोक्षसिद्धिस्तु कलिकलुषितान्तःकरणात् दुर्लभतरा जाता। अतः करुणार्द्रचित्तैर्भरद्वाजादिभिर्महर्षिभिर्नारदपंचरात्रांगभूतनिजनामप्रख्यापितसंहितायां हरिशरणागतिरेव मोक्षसाधनभूता घोरकलिदावानलशांतकरणे वारिदायते इति प्रतिपादितम् ''हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा'' ॥ ''कृते तपः प्रशंसन्ति त्रेतायां ज्ञानमंडज ॥ द्वापरे यज्ञचर्या च कलौ केशवकीर्तनम्'' इत्यादिवाक्यान्यपि हरिभक्तिमेव दृढीकुर्वन्ति । अतो हरिभक्तिबोधकमिदं पुस्तकं भक्तजनमनोरंजनाय मया स्वीये ''श्रीवेङ्कटेश्वर'' मुद्रणालये मुद्रयित्वा प्रकाशितमिति शिवम् ॥

आपका कृपाकांक्षी–

खेमराज श्रीकृष्णदास,

" श्रीवेङ्कटेश्वर " ( स्टीम् ) यन्त्रालयाध्यक्षः–मुंबई.

# नारदपञ्चरात्र-भारद्वाजसंहिता ।

## सटीका ।

श्रुत्वा तु सकलान्धर्मान्सिद्धिमेषां च शाश्वतीम् ।
भूय एव मुनिश्रेष्ठमिदमूचुर्महर्षयः ॥ १ ॥

श्रीकृष्णाय नमः ॥ अथ तत्रभगवान् भरद्वाजो महामुनिः संसाराग्निसंविदीपनव्यपगतप्राणात्मसंजीवनेच्छया सकलवेदान्तेषु प्रतिपन्नन्यासाख्ययोगसकलधर्मोपदेशानन्तरमुपनिषत्कल्पेन संहिताशेषेणोपादिशत् । तत्र सम्यगुपपन्नानां शिष्याणां महर्षीणां प्रश्नकालप्रतीक्षाणां तादृशोपायश्रवणकौतूहलवतां प्रश्नश्लोकोऽयं श्रुत्वेत्याद्यः धर्मशब्दः अलौकिकश्रेयःसाधनपरः । यद्यप्यसौ सामान्यपरः तथापि प्रकरणवशात् निःश्रेयससाधनं परं वक्ति तच्च तत्तद्विद्याप्रतिनियतपरमेश्वरतत्तद्गुणविशेषविषयविशदतमाविच्छिन्नप्रियश्रुतिसन्ततिरूपविद्याबहुत्वाभिप्रायेण बहुवचनम् । सकलशब्देनावान्तरभेदभिन्नतदङ्गभूतकर्मज्ञानोक्तिः-श्रुत्वेति।न्यासाख्ययोगश्रवणप्रतिबन्धकनिवृत्तिसूचनम् । क्त्वाप्रत्ययस्तूपायान्तरश्रवणस्य तद्दौष्कर्म्यानुसन्धानद्वारा अव्यवहितानन्तरभाविन्यासाख्ययोगाविषयप्रश्नव्यवहितपूर्वभावित्वमाह । तुशब्देन पूर्वश्रुतधर्मदौष्कर्थ्यानुसन्धानजनितवैक्लव्यरूपो विशेषो द्योत्यते । एषां धर्माणां शाश्वतीं तत्तद्धर्मप्रतिनियतां सिद्धिं फलरूपाम् । भक्तिस्त्वव्यवधानेनापवर्गं प्रतिनियता सिद्धिः । ज्ञानयोगस्य भक्तियोगः । कर्मयो-



गस्य ज्ञानयोगः । यद्वा, तृतीयाध्यायोक्तप्रक्रियया विशिष्टतया व्यपदिष्टानां ज्ञानयोगव्यवधानमन्तरेणापि कर्मयोगद्वारा साक्षादेवात्मावलोकनम् । भूय इत्याचार्यवचनश्रवणात् तृतीय एवकारेण मुनिश्रेष्ठामिति परमाततमत्त्वमभिप्रैति । इदमूचुर्महर्षय इति । तादृशोपायश्रवणेन सर्वेषामैककण्ठ्यं व्यञ्जयति । मुनिश्रेष्ठं महर्षय इति, शिष्याचार्यसमाजोऽतिरमणीय इति भावः ॥ १ ॥

केनोपायेन भगवन्निह सर्वेऽपि जन्तवः ।
प्राप्नुयुः परमां सिद्धिं सद्यो विगतकल्मषाः ॥ २ ॥

केनोपायेनेति । इह अस्मिन् लोके सर्वेऽपि जन्तवः अत्रैवर्णिका अपि जन्तवः सद्यो विगतकल्मषाः सन्तः परमां सिद्धिं निःश्रेयसं प्राप्नुयुः । सर्ववर्णाधिकारिकः अपेक्षितकालमोक्षफल उपायः क इति प्रश्नार्थः । सद्यो विगतकल्मषा इत्यस्यायं भावः । आर्त्यतिशये सति यः सद्यो मोक्षं साधयति तादृशोपायः क इति ॥ २ ॥

तेषां तद्वचनं श्रुत्वा भरद्वाजो महामनाः ।
सस्मार परमं गुह्यं पुनश्चेदमभाषत ॥ ३ ॥

तेषामिति । तेषामृषीणां तद्वचनं सर्ववर्णाधिकारिकक्षिप्रमोक्षफलदोपायविषयकं वचनं श्रुत्वा महामनाः प्रादिशतु भगवानशेषपुंसां हरिरपि जन्मजरादिकां समृद्धिमित्यादिप्रकारेण श्रीपराशरादिवत् सर्वेषामपि निरतिशयपुरुषार्थप्रतिलम्भकसाधनोपदेशौपयिकमानसौदार्यवान् भरद्वाजः परमं गुह्यं परमं रहस्यं सस्मार स्मृतवान् । पुनश्च पुनरिदं वक्ष्यमाणमभाषत ॥ ३ ॥

---

(१) अनन्तरमिति शेषः । (२) वार इति शेषः ।

श्रूयतां सम्प्रवक्ष्यामि न्यासाख्यं योगमुत्तमम् ।
सिद्धिं चैवास्य परमां द्वयमेतच्छ्रुतं यथा ॥ ४ ॥

श्रूयतामिति । श्रूयतामित्यनेन श्रवणस्यार्थसिद्धत्वादन्यपरित्यागो लक्ष्यते । इदं परतया श्रोतव्यमित्यर्थः । न्यासाख्यं योगमुपायं संप्रवक्ष्यामि संप्राभ्यामुपसर्गाभ्यां न्यासोपदेशस्य तदङ्गतदवान्तरभेदविषयत्वं द्योत्यते ।उत्तमं भक्तियोगादप्यधिकं न्यासाख्यं योगम् अस्य न्यासाख्ययोगस्य परमां निरतिशयां सिद्धिम् एतद्द्वयं यथाश्रुतं आचार्यसकाशात् येनप्रकारेणाधीतं तथा संप्रवक्ष्यामीत्यर्थः ॥ ४ ॥

अयं च योगो वेदेषु वेदान्तेषु च गीयते ।
तथैव धर्मशास्त्रेषु दिव्यशास्त्रगणेषु च ॥ ५ ॥

न्यासयोगप्रमाणं निदर्शयति–अयमिति । अयं योगः वेदेषु कर्मभागेषु वेदान्तेषु ब्रह्मभागेषु तथैव धर्मशास्त्रेषु मन्वादिस्मृतिषु दिव्यशास्त्रगणेषु श्रीपञ्चरात्रसंहितासु च गीयते 'तस्माद्वध्यं प्रपन्नं न प्रयच्छन्ति' इत्यादिभिर्वेदेषु 'ब्रह्मणेत्वा महसेओमित्यात्मानं युञ्जीत'इत्यादिभिर्वेदान्तेषु 'शरणागतबालस्त्रीहिंसकान् संवसेन्नतु'इत्यादिभिर्धर्मशास्त्रेषु ' प्रपत्तिं तां प्रयुञ्जीतस्वाङ्गैः पञ्चभिरावृताम् 'इत्यादिभिर्दिव्यशास्त्रगणेषु च प्रतिपाद्यत इत्यर्थः ॥ ५ ॥

अनेनैव हि कर्माद्या योगाः सिध्यन्ति योगिनाम् ।
सिद्धिर्न तद्व्यपेक्षास्य तस्मादेनं परं विदुः ॥ ६ ॥

अनेनेति । न्यासाख्यं योगमुत्तममिति पूर्वोक्तमुत्तमत्वं हेतुद्वयेनोपपादयति हिशब्दः प्रमाणप्रसिद्धिं द्योतयति । अनेन न्यासेन योगिनां कर्माद्या योगाः कर्मज्ञानभक्तियोगाः



सिद्ध्यान्ते। अस्य न्यासस्य सिद्धिर्न तद्यपेक्षा न कर्मादिसकांक्षा तस्मात् कर्मयोगादिनिष्पत्तिहेतुत्वात् स्वयं तन्निरपेक्षत्वाच्च एवं न्यासं परं कर्मयोगादिभ्य उत्कृष्टं विदुः वृद्धा इति शेषः ॥ ६ ॥

निश्चितेऽनन्यसाध्यस्य परत्रेष्टस्य साधने ।
अयमात्मभरन्यासः प्रपत्तिरिति चोच्यते ॥ ७ ॥

न्यासस्वरूपमाह—निश्चितेति। अयं न्यासाख्ययोगः अनन्यसाध्यस्य न्यासव्यतिरिक्तोपायान्तरासाध्यस्य इष्टस्य फलस्य साधने निश्चिते साधनत्वेनावधृते परमात्मनि आत्मभरन्यासः आत्मभरसमर्पणम्। अयमेव भरन्यासः प्रपत्तिरिति चोच्यते। अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकमित्यादिकमत्रानुसन्धेयम् ॥ ७ ॥

प्रायो गुणवशादेष कृतः सर्वत्र देहिनाम् ।
सर्वेषां साधयत्येव तांस्तानर्थानभीप्सितान् ॥ ८ ॥

भगवदेकविषयत्वं न प्रपत्तिमात्रस्य लक्षणं किन्तु मोक्षसाधनत्वं प्रपत्तेरेव । रजस्तमोमूलानां निःश्रेयसव्यतिरिक्ताः तत्तत्कामफलार्थिनां प्रपत्तीनामन्येऽपि विषयास्सम्भवन्तीत्याह—प्राय इति। गुणवशात् रजस्तमःपारवश्यात्। सर्वत्र ब्रह्मरुद्रादिकेऽपि विषये कृत एष न्यासः सर्वेषां देहिनां तांस्तानभीप्सितानिष्टानर्थान्प्रायः साधयत्येव । एवकारेण सानुक्रोशसमर्थविषयायाःप्रपत्तेः फलाव्यभिचारो द्योत्यते।प्राय इत्यनेन क्वचिदसमर्थनिरनुक्रोशविषयायास्तस्याः फलव्यभिचारो द्योत्यते। मोक्षातिरिक्तपुरुषार्थपरायाः प्रपत्तेर्यः कश्चिदपि कारुणिकः समर्थो विषयो भवतीति श्लोकाभिप्रायः ॥ ८ ॥

अनन्तज्ञानशक्त्यादिकल्याणगुणसागरे ।
परे ब्रह्मणि लक्ष्मीशे मुख्योऽयं सर्वसिद्धिकृत् ॥ ९ ॥

मोक्षार्थस्य न्यासस्य तु भगवानेव विषय इत्याह—अनन्तेति। अनन्तज्ञानेत्यादिना अनन्तत्वमन्त्रेयत्ताराहित्यम्। तयोरनन्तत्वसामर्थ्ययोः सतोरपि ज्ञानाभावे इष्टानिष्टयोरपि ज्ञानाभावात तत्प्रापणनिर्वहणे न युज्येते। अत उक्तं ज्ञानेति। शक्तिः सामर्थ्यम् आदिशब्देन कारुण्यादिसंग्रहः आनन्त्यं ज्ञानादौ सर्वत्र द्रष्टव्यम् एतेन प्रपत्तव्यत्वपूर्त्तिरुक्ता। परे ब्रह्मणीति, परत्वविषयत्वात् मुख्यत्वं युज्यत इति भावः। मुख्यः श्रेष्ठः मोक्षोपाय इति यावत्। न केवलं भगवत्प्रपत्तेर्मोक्षमात्रफलकत्वम अपि तु तत्तदर्थिनां तत्तत्फलकत्वमपीत्याह। सर्वसिद्धिकृदिति सकलपुरुषार्थसाधनभूत इति भावः॥ ९॥

प्रशासितुरशेषाणामात्मनां परमात्मनः।
न हि प्रसादनं विष्णोरन्यदात्मार्पणादृते॥ १०॥

ननु निश्चितेऽनन्यसाध्यस्य परत्रेष्टस्य साधने इत्यनेन भगवत एवोपायत्वं कथितम्।तत्कथं प्रपत्तेरुपायत्वमिति शङ्कां वारयितुं प्रपत्तेः प्रसदनोपायत्वं तादृक् प्रसदनं प्रति निरतिशयोपायत्वं चाह-प्रशासितुरिति।अशेषाणामात्मनां प्रशासितुर्नियन्तुः तत्तत्कर्मानुरूपफलप्रदाननिरतस्येति यावत्।अनेन प्रसदनस्य साध्यत्वलाभाय कलुषोज्झितचित्तत्वमुक्तं परमात्मनो भगवतः अनेन प्राप्तिविषयकत्वात्प्रपत्तेः स्वरूपानुरूपत्वमुक्तम्।आत्मार्पणादृते आत्मसमर्पणमन्तरेणान्यत प्रसादनं प्रसदनसाधनं नह्यस्ति।यद्यप्युपासनस्यापि प्रसदनसाधनत्वमस्ति, प्रपत्त्यै तस्योक्तेः; प्रसदनसाधनं प्रपत्तिर्निदिध्यासनगत इत्याचार्योक्तेः।अथापि क्षिप्रमोक्षसाधनप्रश्नविषयत्वात् क्षिप्रप्रसदनसाधनं प्रपत्तेरन्यन्नास्तीत्यर्थः।प्रसदनद्वारामोक्षहेतुत्वान्न विरोध इति भावः॥१०॥

अहमस्मि तवैवेति प्रपन्नाय सकृत्स्वयम्।
देवो नारायणः श्रीमान्ददात्यभयमुत्सुकः॥ ११॥

प्रपत्तेर्भगवत्प्रसदनहेतुत्वं सकृदेव प्रपन्नायेत्यादिरूपशरण्यवचनप्रत्यभिज्ञापकेनोत्तरश्लोकेन द्रढयति–अहमिति । तवैवाहमस्मीति भरन्यासरूपं प्रपत्तिम् । सकृदेवकृतवते । अनेन जात्याद्यनियमसिद्धिः स्वयमित्यौत्सुक्यकार्यं स्वयं प्रपदनमाह भक्त्यादौ तु तेषामेवानुकम्पार्थमित्याद्युक्तरीत्या साहाय्यमात्रमेव न तु स्वयंप्रपदनमिति भावः । देव इत्यनेन प्रनष्टस्य यथालाभ इत्युक्तरीत्या अलभ्यलाभनिमित्तकविकासितमुखकमलत्वमुच्यते । नारायणः स्वाभाविकसम्बन्धबलेन चेतनलाभायावसरप्रतीक्षां कुर्वन्नित्यर्थः । श्रीमानित्यनेन तदिङ्गितपराधीनो विधाताखिलमित्युक्तप्रकारेण प्रपन्नाय अभयदानादिकमपि तत्प्रीत्यर्थमिति व्यज्यते । उत्सुकः अभयं भयाभावं सकृदेव ददाति प्रतिपादनान्तरराहित्येन सम्बन्धिपर्यन्तरक्षणं करोतीत्यर्थः । सर्वभूतेभ्य इति भावयन् ॥११॥

आत्यन्तिकीमनिष्टानां सद्यः शान्तिमभीप्सताम् ।
प्रपत्तिरञ्जसा कार्या न त्वशुद्धमुखी क्वचित् ॥ १२ ॥

क्षिप्रकारिण्या भगवत्प्रपत्तेर्विषयनियमोऽप्यस्तीत्याह–आत्यन्तिकीमिति । अनिष्टानामविद्याकर्मवासनारुचिप्रतिसम्बन्धसुखदुःखादीनाम् आत्यन्तिकीम् अनिष्टप्रागभावाक्षयसहचरितां सद्यः शान्तिमविलम्बितत्वध्वंसात्मिकामभीप्सतामभितः आकाङ्क्षमाणानां विलम्बसहानां प्रपत्तिर्भगवद्विषये अञ्जसा अव्यवधानेन कार्या । अशुद्धमुखी तु प्रतर्दनविद्यान्यायेन चेतनान्तरव्यवहिता न कार्येत्यर्थः । चेतनान्तरव्यवधाने तु तत्सायुज्यप्राप्त्यादिना प्राप्तिर्विलम्बिता भवेदिति भावः ॥ १२ ॥

प्राप्तुमिच्छन्परां सिद्धिं जनः सर्वोऽप्यकिञ्चनः ।
श्रद्धया परया युक्तो हरिं शरणमाश्रयेत् ॥ १३ ॥

प्रपत्तभक्त्यपदाभ्यां अधिकारान्तरमित्याह ...

सर्वोऽप्याकिञ्चनो जन इत्यनेन पपत्तेः सर्वाधिकारित्वम् आकिञ्चन्यरूपं मुमुक्षातिरिक्तं भक्त्यपेक्षया अधिकारान्तरं च कथितम्। श्रद्धया परया युक्त इत्यनेन महाविश्वासपूर्वकत्वमुच्यते। हरिं शरणमाश्रयेत भगवन्तमुपायत्वेन स्वीकुर्यात् ॥ १३ ॥

न जातिभेदं न कुलं न लिंगं न गुणक्रियाः ।
न देशकालौ नावस्थां योगो ह्ययमपेक्षते ॥ १४ ॥

जनः सर्वोऽप्यकिंचन इत्यत्रोक्तं सर्वाधिकारत्वं स्फुटयति-नेति। लिंगं ब्रह्मचर्यादिलिंगभूताजिनबन्धादि। गुणाः औदार्यादयः। क्रियाः योगादिक्रियाः। देशकालौ पुण्यदेशः पुण्यकालः अयं योगो न्यासः जातिभेदादिकं नापेक्षते ॥ १४ ॥

ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चान्तरजास्तथा ।
सर्व एव प्रपद्येरन्सर्वधातारमच्युतम् ॥ १५ ॥

नजाति भेदमित्युक्तमर्थं विवृणोति-ब्रह्मक्षत्रेति । सर्वधातारमच्युतमित्यनेन सर्वेषामप्याविशेषेण प्रपत्तृत्वं युक्तमिति युज्येत ॥ १५ ॥

प्रपत्तिं कारयन्त्येव सर्वभूतानि साधवः ।
अनपायहता सा तु तस्य तस्याशु सिद्धिदा ॥ १६ ॥

प्रपत्तेः सर्वाधिकारत्वे शिष्टाचारप्रमाणं दर्शयन् तस्या अपायैरनपहतत्वमपेक्षितमित्याह-प्रपत्तिमिति। अत्र पूर्वार्द्धेन शिष्टाचाररूपं प्रमाणमुत्तरार्द्धेन अनपायहतत्वं च प्रदर्श्यते । अपायांश्च अपायाधिकारे वक्ष्यति । आशु सिद्धिदेत्यस्यायं भावः । अपाया अपि न प्रपत्तिं स्वरूपेण नाशयन्ति, अपि तु कालविशेषनियतं फलोद्देशमन्तरेण प्रपत्तिमनुष्ठितवतः



पुंसः फलविलम्बं जनयन्ति। कालविशेषनियतफलोद्देशेनानुष्ठितवतस्त्वपाया एव न सम्भवन्ति।सम्भवन्तोऽपि वा त एव प्रपत्त्याः स्वार्हप्रायश्चित्तान्वयसम्पादनेन नाशयन्तीति ॥ १६ ॥

प्रपत्तिरानुकूल्यस्य सङ्कल्पोऽप्रतिकूलता ।
विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा ॥ १७ ॥
कृतानुकूल्यसंकल्पः प्रातिकूल्यं विवर्जयेत् ।
विश्वासशाली कृपणः प्रार्थयन् रक्षणं प्रति ॥ १८ ॥

अष्टाङ्गयोगन्यायेन प्रपत्तेरङ्गैः सह षाड्विध्यमाह–प्रपत्तीति । कृतेति च । आनुकूल्यस्य सङ्कल्पः अप्रतिकूलता प्रातिकूल्यवर्जनम् । विश्वासः रक्षिष्यतीति विश्वासः । वरणं गोप्तृत्ववरणम् । न्यासः आत्मभरन्यासः । कार्पण्यमाकिञ्चन्यानुसन्धानात्मकं कृपाजनककृपणवृत्तिनिरतत्वमित्येवं स्वाङ्गैः सह षड्विधा ॥ १७ ॥ १८ ॥

आत्मानं निक्षिपति यद्विप्रदेवस्य पादयोः ।
सा प्रपत्तिरियं सद्यः सर्वपापप्रमोचनी ॥ १९ ॥

आत्मानमिति–'आत्मानं निक्षिपेद्धीमान् धिया देवस्य पादयोः'आत्मानं निक्षिपतीति यत् सा प्रपत्तिरित्यन्वयः।आत्मनिक्षेपाङ्गीभूतानुकूल्यसङ्कल्पादीन्यङ्गानीत्यर्थः । 'निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः' इत्यादिकं प्रमाणमत्रानुसन्धेयम्॥ १९॥

आर्त्तानामाशु फलदा सकृदेव कृता ह्यसौ ।
दृप्तानामपि जन्तूनां देहान्तरनिवारिणी ॥ २० ॥

ननु सद्यः पापप्रमोचनीत्युक्तम् तत्कथं प्रपत्त्यनन्तरं प्रपन्नानां देहानुवृत्तिरित्याशङ्कायामाह–आर्त्तेति । आर्त्तानां क्षणमपि संसारसम्बन्धमसहमानानाम् आशु फलदा शीघ्रफलदा अनेन

प्रपन्नानां देहसम्बन्धानुवृत्तिरात्त्यंभावनिबन्धना न प्रपत्त्यसमर्थं-तानिबन्धना सत्यामार्त्तौ तदेव मोक्षं प्रयच्छतीति ज्ञाप्यते। तर्हि दृप्तानां कदा मोक्षः इत्यपेक्षायामाह। दृप्तानामपीत्यादि। देहान्तरनिवारिणीत्येतदप्युपलक्षणार्थं यावानंशः शोकविषयः तावन्तं वारयतीत्यर्थः ॥ २० ॥

एषा च त्रिविधा ज्ञेया करणत्रयभेदतः ।
गुणत्रयविभेदादप्येकैका त्रिविधा पुनः ॥ २१ ॥

एवमार्तदृप्तभेदेन भेदमुक्त्वा करणभेदेनापि भेदमाह-एषेति। एकैका, कायिकी, वाचिकी, मानसी च स्वमूलभूतसत्त्वरजस्तमोरूपगुणभेदेन प्रत्येकं पुनस्त्रिविधा भवति। एवं नवविधेत्यर्थः ॥ २१ ॥

प्रणामांकनमुख्येन न्यासलिंगेन केवलम् ।
गुर्वधीना हि भवति प्रपत्तिः कायिकी क्वचित् ॥ २२ ॥

तत्र कायिकीं प्रपत्तिमाह-प्रणामेति। प्रणामः साष्टाङ्गादिरूपः। अङ्कनं चक्रादिचिह्नधारणं मुख्यं प्रधानं यस्य। तेन ऊर्द्धपुण्ड्रादिधारणरूपेण न्यासलिङ्गेन गुर्वधीना आचार्यनियमनपूर्विका कायिकी प्रपत्तिर्भवति। आचार्यनियमनपूर्वकं क्रियमाणं प्रणामाङ्कनादिरूपं प्रपत्तिलिङ्गं कायिकी प्रपत्तिरित्यर्थः। प्रपत्तिलिङ्गे प्रपत्तिशब्दो गौणः क्वचिदित्यनेन वा तूलकादीनां प्रपत्तावनधिकारित्वात् तेष्वियमेव प्रपत्तिरित्यर्थः ॥ २२ ॥

अविज्ञातार्थतत्त्वस्य मन्त्रमीरयतः परम् ।
गुर्वधीनस्य कस्यापि प्रपत्तिर्वाचिकी भवेत् ॥ २३ ॥

अथ वाचिकीं प्रपत्तिमाह-अविज्ञातेति। अविज्ञातम् अर्थतत्त्वं मन्त्रार्थतत्त्वं येन तथोक्तस्य गुर्वधीनस्य आचार्यायत्तस्य



मन्त्रमीरयतः परं मन्त्रमात्रमुच्चारयतः कस्यचिद्वाचिकी प्रपत्तिर्भवति । आचार्योच्चारणपूर्वकप्रपत्तिमात्रोच्चारणं वाचिकी प्रपत्तिरित्यर्थः ॥ २३ ॥

न्यासलिंगवतांगेन धियार्थज्ञस्य मन्त्रतः ।
उपासितगुरोः सम्यक् प्रपत्तिर्मानसी भवेत् ॥ २४ ॥

अथ मानसप्रपत्तिमाह-न्यासेति । न्यासलिङ्गवता प्रपत्तिलिङ्गचक्रांकनादिमताङ्गेन उपलक्षितस्य उपासितगुरोः अर्थज्ञस्य मन्त्रार्थज्ञानवतः पुंसः धिया मन्त्रार्थविषयिण्या बुद्ध्या मन्त्रतः मन्त्रेण कृता सम्यक् प्रपत्तिः सङ्गभरन्यासात्मिका मानसी प्रपत्तिर्भवति । आचार्योपास्तिपूर्वकम् । आचार्यान्मूलमन्त्रार्थमवगत्य तदर्थानुसन्धानपूर्वकमाचार्यानुज्ञायां क्रियमाणानुकूल्यादिभिरङ्गैर्विशिष्टा प्रपत्तिर्मानसीप्रपत्तिरित्यर्थः ॥ २४ ॥

यदीच्छन्प्रातिकूलानि सर्वभूतानुकम्पिनम् ।
प्रपद्यते हरिं मोहात्सा प्रपत्तिस्तु तामसी ॥ २५ ॥

एतत्प्रपत्तित्रयस्यापि प्रत्येकं गुणभेदेनापि त्रैविध्यस्य विवक्षितत्वान्मोक्षप्रतिकूलप्रपत्तिस्वरूपमाह-यदीति । प्रतिकूलानि भूतहिंसादीनि इच्छन् आकाङ्क्षमाणः सर्वभूतानुकंपिनं सर्वजीवदयापरं हरिं मोहात् यदि प्रपद्यते सा प्रपत्तिस्तामसी सर्वभूतानुकम्पिनमित्यस्य न भूतद्रोहेच्छया तदनुकम्पिप्रपदनमिहकार्यमिति भावः ॥ २५ ॥

अभीप्सन्विविधान्कामान् यदकामैकवत्सलम् ।
प्रपद्यते हृषीकेशं तामिमां राजसीं विदुः ॥ २६ ॥

अथ राजसीं प्रपत्तिमाह-अभीप्सन्निति । विविधान्कामान् ऐहिकामुष्मिकभोगान् अभीप्सन् प्राप्तुमिच्छन् अकामैकवत्सलं

निष्कामैकप्रियं हृषीकेशम् इन्द्रियगणनियन्तारं हरिं प्रपद्यत इति यत् सा राजसी प्रपत्तिः । अकामैकवत्सलमित्यस्य पूर्ववदभिप्रायः । हृषीकेशमित्यस्य तस्यैव चरणग्रहणे न्यास एव भोगेच्छामपि निवर्त्तयतीति भावः ॥ २६ ॥

परित्यज्याखिलान् कामान् भक्त्यैवात्मेश्वरं हरिम् ।
प्रपद्यते दास्यरतिर्यदेषा सा तु सात्त्विकी ॥ २७ ॥

सात्त्विकप्रपत्तिस्वरूपमाह—परित्यज्येति।अखिलान् कामान् त्रैवर्गिकान् दास्यरतिः कैङ्कर्यरूपफलेच्छुः स्पष्टमुच्यते ॥ २७ ॥

हीनाहीनतमाश्चैव रजसा तमसा कृताः ।
सत्त्वेन याः प्रयुज्यन्ते मुख्यास्ताः परिकीर्तिताः॥२८॥

राजसतामसनिन्दापूर्वकं सात्त्विकप्रपत्तेरुत्कर्षमाह—हीनेति। याः प्रपत्तयः रजसा कृता हीनाः तमसा कृता हीनतमाः। सत्त्वेनप्रयुक्ता मुख्या इत्यर्थः ॥ २८ ॥

सत्त्वजा मानसी त्वेका तत्र मुख्यतमा मता ।
तया हि परमां सिद्धिं सद्यो यान्ति मनीषिणः ॥ २९ ॥

सत्त्वमूलानां प्रपत्तीनां मुख्यत्वमुक्त्वा तन्मूला मानसी प्रपत्तिर्मुख्यतमेत्याह—सत्त्वजेति । तत्र वाचिककायिकमानसप्रपत्तिषु सत्त्वजा सत्त्वमूला मानसी प्रपत्तिरेकैव मुख्यतमा सत्त्वमूलत्वान्मुख्यत्वम् । मानसत्वान्मुख्यतमत्वं फलाधिक्यं सम्भवति । हेत्वधीनत्वेऽपि तादृशहेतुं न्यस्य विलक्षणफलजनकत्वमन्तरेण न सम्भवतीति मत्वा सहजमानसप्रपत्तिविलक्षणफलहेतुत्वमाह । तया हि परमाम् आत्यन्तिकीं सिद्धिं सद्यो- यान्ति हि यतः ततो मुख्यतमेत्यर्थः ॥ २९ ॥

प्रणामः कीर्तनं वापि स्मरणं वापि केवलम् ।
एकैकमपि चांगानां प्रपत्तिः प्राज्ञसंश्रयात् ॥ ३० ॥

ननु प्रणामाङ्कनरूपस्य न्यासचिह्नस्य कायिकस्य प्रपत्तिमन्त्रोच्चारणस्य वाचिकस्य च कथं प्रपत्तित्वं तयोरेतल्लक्षणलक्षितत्त्वात् । न च प्रपत्तिकार्यकारित्वात् तत्र तद्व्यपदेशः अतल्लक्षणलक्षितस्य तत्कार्यकारित्वायोगात् न च तल्लक्षणत्वात्तन्मात्रं पाठान्तरम् । मन्त्रत्वाच्च गौणस्तद्व्यपदेशः तथा सति मोक्षार्थप्रपत्तेस्त्रैविध्यकथनमयुक्तं स्यात् । वाचिककायिकप्रपत्त्योर्मुक्तिं प्रति प्रपत्तिलक्षणलक्षितत्वेनासाधकत्वादित्याशङ्क्य प्रपत्तिकार्यकरत्वात्कायिकवाचिकप्रपत्त्योः प्रपत्तित्वमभिसन्धाय कायिकवाचिकमानसिकप्रपत्त्येकदेशः प्रणामादिरेव प्राज्ञसंश्रयात् प्रपत्तिकार्यकरत्वेसम्भवतीति वक्तव्यं कायिकवाचिकप्रपत्त्योः प्रपत्तिकार्यकरत्वमित्याभिप्रायेणाह-प्रणाम इति प्रणामः कायिकप्रपत्त्येकदेशः पूर्वं प्रणामांकनमुख्येनेति श्लोके अङ्कनस्याप्युक्तत्वात् । कीर्त्तनं वाचिकप्रपत्त्येकदेशः मन्त्रन्तरेणे केवलकीर्त्तनस्य तदेकदेशत्वात् स्मरणं मानसिकप्रपत्त्येकदेशः एकैकमपि चाङ्गानामिति मानसप्रपत्त्येकदेशकथनम् आनुकूल्यसंकल्पप्रभृत्यङ्गविशिष्टस्यात्मभरन्यासस्य मानसप्रपत्तित्वात् । ननु कथमेतावन्मात्रस्य प्रपत्तित्वमत आह ।प्राज्ञसंश्रयादिति । शिष्यार्थमपि प्राज्ञेनाचार्येणैव प्रपत्तेरनुष्ठितत्वात् । प्रणामादेस्तदन्वयज्ञापकत्वात्प्रपत्तित्वं युज्यते इति भावः ॥ ३० ॥

अन्वयादपि चैकस्य सम्यङ्न्यस्तात्मनो हरौ ।
सर्व एव प्रमुच्येरन्नराः पूर्वे परे तथा ॥ ३१ ॥

भगवन्न्यस्तभरस्य सम्बन्धिनोऽपि मोक्षं लभन्त इत्याह-अन्वयादिति।साङ्गमात्मात्मीयभरन्यासं कृतवत इत्यर्थः ॥३१॥

बालमूकजडान्धाश्च पंगवो बधिरास्तथा ।
सदाचार्येण संदृष्टाः प्राप्नुवंति परां गतिम् ॥ ३२ ॥

सदाचार्यकटाक्षविषयीकृतानामपि मोक्षः सम्भवति, तदुद्दृश्यानां मोक्षो भवतीति किमुत वक्तव्यमित्यभिप्रायेणाह–बालेति। संदृष्टाः मदीयत्वाभिमानपूर्वकं दृष्टा इति भावः॥ ३२॥

गुरुणा योऽभिमन्येत गुरुं वा योऽभिमन्यते ।
तावुभौ परमां सिद्धिं नियमादुपगच्छतः ॥ ३३ ॥

ननु बालादयो गुरुं गुरुत्वेनाभिमन्तुं न ज्ञास्यंति। ततः कथं तेषां मुक्तिरित्यत इत्याह–गुरुणेति । गुरुणा योऽभिमन्येत मदीयोऽयं मम रक्ष्य इत्यभिमानेन वा वीक्ष्येत । गुरुं वा योऽभिमन्यते । एकलव्यादिन्यायेन ममायं रक्षको गुरुरित्यभिमानेन गुरुं यः आचार्यस्यात्मीयभरन्यासवेलायामुभयविधाभिमानस्य गुर्वन्वयसम्पादकत्वेन नियमेन तत्प्रपत्तिद्वारा सिद्धिहेतुत्वं तत्प्रपत्तिवेलायामनन्वये पश्चाद्गुरुकर्तृकस्वप्रपत्त्यनुष्ठानपर्यवसाने न्याससिद्धिहेतुत्वमिति बहु मनुते । तावुभौ गुर्वभिमानविषयौ गुरुर्बहुमन्ताचेत्युभौ नियमात् अव्यभिचारेण परमां सिद्धिं मुक्तिम् उपगच्छतः ॥ ३३ ॥

ज्ञानतस्त्वनुपेतस्य ब्रह्मचर्यमभीप्सतः ।
वृथैवात्मसमित्क्षेपो जायते कृष्णवर्त्मनि ॥ ३४ ॥

पुस्तकनिरीक्षणादिना ज्ञानं सम्पाद्य आचार्य समाश्रयणमन्तरेण प्रपत्तिमनुतिष्ठतां वेषसंवादकत्वेन प्रपत्त्यनुष्ठानपर्यवसानेन सिद्धिहेतुत्वमिति न किञ्चित्फलमित्याह–ज्ञानेति । ज्ञानतः प्रपत्तिस्वरूपतदङ्गतत्प्रकारान् पुस्तकनिरीक्षणादिना सम्यग् ज्ञातवतोऽप्यनुपेतस्य आचार्योपसत्तिमकृतवतः ब्रह्म-

चर्यं परब्रह्मानुभवपूर्वकं तत्कैङ्कर्यमाप्तुमिच्छतः पुंसः कृष्ण इति वर्त्म उपायः तस्मिन्सिद्धोपाये कृतः आत्मसमित्क्षेपः । आत्मसमर्पणं वृथैव जायते न किञ्चित्फलमित्यर्थः । अर्थान्तरे अनुपेतस्य उपनयनकृतिशून्यस्य ब्रह्मचर्यकामस्य कृष्णवर्त्मनि वह्नौ आत्मनः समिधां क्षेपो वृथैव जायते तद्दृष्टान्तत्वेनान्वयः॥३४॥

शास्त्रादिषु सुदृष्टापि साङ्गा सह फलोदया ।
न प्रसीदति वै विद्या विना सदुपदेशतः ॥ ३५ ॥

उक्तमर्थं विशदयति-शास्त्रेति । विद्या ब्रह्मविद्या न प्रसीदति, प्रसन्ना न भवति, फलाय न भवतीत्यर्थः ॥ ३५ ॥

कामं लोकप्रमाणस्य कामाः सिध्यन्ति कामिनः ।
गृहीतसत्पदस्यैव निरपायफलोदयः ॥ ३६ ॥

ननु किमाचार्योपदेशेन कृष्णादाविव प्रमाणेन इष्टसाधनतां ज्ञात्वा तदनुष्ठाने फलावश्यंभावादित्याशङ्क्याह-काममिति । लोकप्रमाणस्य, लोकशब्दः प्रत्यक्षानुमानतन्मूललौकिकशब्दपरः प्रत्यक्षादिप्रमाणाधीनप्रवृत्तेः कामिनः प्रत्यक्षादिभिर्गृहीतेष्टसाधनतया कृष्यादिभिः कामं कामाः सिद्ध्यन्ति सिद्ध्यन्तु निरपायफलोदयः मोक्षस्तु गृहीतसत्पदस्यैव समाश्रिताचार्यचरणयुगलस्यैव । अयं भावः । लौकिकं हि प्रमाणं कृष्यादाविष्टसाधनतां कृष्यादित्वेनैव बोधयति । न त्वाचार्याधीनकृष्यादित्वेन । अलौकिकप्रमाणम् । आचार्याधीनब्रह्मविद्यात्वेनेष्टसाधनतामवगमयतीति अतन्मूलायास्तस्याः निष्फलत्वमेव युक्तमिति । गृहीतसत्पथस्येति पाठे सत्पथः शास्त्रम् । शास्त्रोक्तक्रमेण आचार्योपसत्तिं कृतवत इत्यर्थः । अभिप्रायस्तु पूर्ववत् ॥ ३६ ॥

न्यासे वाप्यर्चने वापि मन्त्रमेकान्तिनः श्रयेत्।
अवैष्णवोपदिष्टेन मन्त्रेण न परा गतिः ॥ ३७ ॥

एवमाचार्योपदेशस्यावश्यकत्वमुक्त्वा तत्र त्वेकान्तिन एवाचार्यत्वम् । न त्ववैष्णवस्येत्याह–न्यास इति । न्यासः प्रपत्तिः। अर्चनं भगवत्समाराधनम्। न्यासमन्त्रम् आराधनमन्त्रं च । एकान्तिनः अनन्ययाजिनः सकाशात् श्रयेत भजेतेति यावत्। स्पष्टमन्यत् ॥ ३७ ॥

प्रपित्सुर्मन्त्रनिरतं प्राज्ञं हितपरं शुचिम्।
प्रशान्तं नियतं वृत्तौ भजेद्द्विजवरं गुरुम् ॥ ३८ ॥

आचार्यलक्षणमाह–प्रपित्सुरिति । प्रपित्सुः प्रपत्तुमिच्छुः । मन्त्रनिरतम्–यद्वा मन्त्रानुसन्धानेन सहेतिवत् सर्वदा मन्त्रानुसन्धाननिरतं प्राज्ञं तदर्थाभिज्ञम्। हितपरं शिष्टशिष्यहितनिरतम्। शुचिम् अर्थाकाङ्क्षाद्यशुद्धिरहितम्। प्रशान्तं निगृहीतेन्द्रियग्रामम्। वृत्तौ वक्ष्यमाणविहिताचारादिरूपवृत्तौ नियतं द्विजवरं गुरुं भजेत् । गुरुत्वेन समाश्रयेदित्यर्थः॥ ३८ ॥

सप्तपूरुषविज्ञेये सन्ततैकान्तिनिर्मले।
कुले जातो गुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुः ॥ ३९ ॥

अयमेव गुरुः सत्कुलप्रसूतश्चेद श्रेष्ठतम इत्याह–सप्तपूरुषेति । पितृपितामहादिक्रमेण सद्वृत्तैः सप्तभिः पूरुषैः विज्ञेये ज्ञातुं योग्ये। सन्ततम् अविच्छिन्नम् एकान्तिनः नियमेन निर्मले शुद्धे तस्मिन्कुले जातः गुणैः पूर्वश्लोकोक्तमन्त्रनिरतत्वादिगुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुः पूर्वोक्तगुणैर्युक्तः शिष्टः स एवात्रोक्तकुले जातश्चेत् श्रेष्ठतम इत्यर्थः ॥ ३९ ॥

स्वयं वा भक्तिसम्पन्नो ज्ञानवैराग्यभूषितः।
स्वकर्मनिरतो नित्यमर्हत्याचार्यतां द्विजः॥ ४० ॥

सत्कुलप्रसूतत्वं तु आचार्यस्य अतिशयः आचार्यत्वप्रयोजको धर्मः। आचार्यत्वस्य तद्वद्भ्राप्तव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वाभावात्। सत्यपि तस्मिन् ज्ञानशक्त्यादिवर्जितत्वे आचार्यत्वाभावाच्चेति श्लोकद्वयेनाह। स्वयमिति। स्वयं वा भक्तिसम्पन्नः स्वपित्रादीनां भक्तिशून्यत्वेन अकुले जातोऽपि क्रमेण आचार्यताम् अन्यं प्रत्याचार्यतामर्हतीत्यर्थः॥ ४० ॥

नाचार्यः कुलजातोऽपि ज्ञानभक्त्यादिवर्जितः।
न च हीनवयोजातिः प्रकृष्टानामनापदि॥ ४१ ॥

नाचार्य इति। कुलजातोऽपि सप्तपूरुषविज्ञेयसन्ततैकान्तिनिर्मलकुलजातोऽपि ज्ञानभक्त्यादिवर्जितः आचार्यो न भवति। हीनवयोजातिः अपकृष्टवया अपकृष्टजातिश्च क्रमेण प्रकृष्टानाम् उत्कृष्टवयसाम् उत्कृष्टजातीनां च आचार्यो न भवति। अयं नियमः कालविशेषनियत इत्याह। अनापदीति। प्रकृष्टवयोजातित्वाचार्यलक्षणलक्षिताभावात्॥ ४१ ॥

न जातु मन्त्रदा नारी न शूद्रो नान्तरोद्भवः।
नाभिशस्तो न पतितः कामकामोऽप्यकामिनः॥४२॥

एवमापदि हीनजातीनामप्याचार्यत्वमनुज्ञातं तेन स्त्रीशूद्रादीनामपि प्राप्तमाचार्यत्वं निषेधति-न जात्विति। जातु कदाचिदपि आपद्यपीत्यर्थः। नारी जातु मन्त्रदा न भवति आचार्यत्वं नार्हतीत्यर्थः। शूद्रोऽपि मन्त्रदो न अन्तरोद्भवः प्रतिलोमजातोऽपि मन्त्रदो न। अभिशस्तः महापातकयो-

गवानपि मन्त्रदो न । पतितोऽपि न । अकामिनः निष्कामस्य कामकामोऽपि मन्त्रदो न भवतीत्यर्थः ॥ ४२ ॥

स्त्रियः शूद्रादयश्चैव बोधयेयुर्हिताहितम् ।
यथार्हं माननीयाश्च नार्हन्त्याचार्यतां क्वचित् ॥ ४३ ॥

अप्रधानहिताहितोपदेष्टृत्वस्य स्त्रीशूद्रादीनामप्यनिषिद्धत्वं तादृशहिताहितबोधकेषु तेषु कर्त्तव्यं वृत्तिविशेषं चाह-स्त्रिय इति । यथार्हं माननीयाः । उच्छिष्टाशनादिवर्जं माननीयाः स्पष्टमन्यत् ॥ ४३ ॥

किमप्यत्राभिजायन्ते योगिनः सर्वयोनिषु ।
प्रत्यक्षितात्मनाथानां नैषां चिन्त्यं कुलादिकम् ॥ ४४ ॥

पूर्वश्लोकद्वयेन स्त्रीशूद्रादीनामाचार्यत्वं निषिद्धमित्युक्तम् । इदानीं तु प्रत्यक्षितात्मनाथविषये तु निषेधो नास्तीत्याह किमिति । अत्र लोके योगिनः सर्वयोनिषु निकृष्टास्वपि योनिषु अभिजायन्ते किमपि किं वा कारणं प्रयोजनं नावजानीम इत्यर्थः । किमपि प्रतिसन्धाय सर्वयोनिषु अभिजायन्त इति वान्वयः । प्रत्यक्षितात्मनाथानां साक्षात्कृतभगवत्तत्त्वानाम् एषां योगिनां कुलादिकं न चिन्त्यम् एतेन हीनकुलजाताः आचार्यतां नार्हन्तीति न चिन्तनीयम् अपि तु तेऽपि तु आचार्यतामर्हन्तीत्यपीत्यर्थः ॥ ४४ ॥

विश्वात्मन्यात्मनो न्यासं धिया वृत्तिं च शाश्वतीम् ।
मन्त्रेणोच्चारयेद्यस्तु स आचार्यः परो मतः ॥ ४५ ॥

एवमाचार्यलक्षणमभिधाय यस्तु मन्त्रेण प्रपत्तिं कारयेत् वृत्तिं वक्ष्यमाणां विहिताचारदृष्टिभक्त्याद्यात्मिकां च मन्त्रे-

णोच्चारयेत् । स उपकारातिशयात् पर आचार्य इत्याह-विश्वात्मनीति । सर्वान्तर्यामिणि भगवति आत्मनः शिष्यस्य न्यासं रक्ष्यत्वेन समर्पणं प्रपत्तिमिति यावत् धिया ज्ञानेन शाश्वतीं वृत्तिं च यो मन्त्रेणोच्चारयेत् स पर आचार्यो मतः ॥ ४५ ॥

शान्तोऽनसूयुः श्रद्धावान् गुर्वर्थार्थात्मवृत्तिकः ।
शुचिः प्रियहितो दान्तः शिष्यश्चोक्तो मनीषिभिः ४६

अथ शिष्यलक्षणमाह-शान्त इति । शान्तः अचलितमनाः अनसूयुः गुणेषु दोषाविष्करणमसूया तद्रहितःश्रद्धावान् आस्तिक्यसम्पन्नः । अर्थाः धनानि,आत्मवृत्तयः स्वव्यापाराश्च गुर्वर्थाः यस्य सः गुर्वर्थार्थात्मवृत्तिकः। शुचिः शुद्धः । प्रियहित आचार्यविषये प्रियाहितपरः । नियमातिक्रमे रहसि बोधयेदित्यादिविधेः कदाचिद्रहसि हितोपदेशस्याभिमतत्वाद्धितपरत्वमविरुद्धम। दान्तः निगृहीतेन्द्रियः निषिद्धविषयेषु विमुखःविहितेषु च विषयेषु अत्यासङ्गरहित इत्यर्थः । वृत्त्यतिरिक्तलौकिकव्यापारेभ्य उपरतः । सुधीः उपदिष्टार्थग्रहणसमर्थबुद्धिः ॥ ४६ ॥

न मत्तोन्मत्तपतिताभिशस्तक्रूरनास्तिकाः ।
नानर्थिनो न चाज्ञाताः कर्तव्या मन्त्रगामिनः ॥ ४७ ॥

शिष्येषुवर्ज्यानाह-नेति । अज्ञाताः अपरीक्षिताः ॥ ४७ ॥

स्त्रीणां च पतिमित्रादीननतिक्रम्य सत्तमान् ।
अनुज्ञया वाप्यन्येभ्यः स्मृतो मन्त्रपरिग्रहः ॥ ४८ ॥

स्त्रीणांचेति । पतिश्च पिता चेति द्वन्द्वः । आदिशब्देन श्वशुरादिसङ्ग्रहः । पत्युः पिता श्वशुर इत्येके । सत्तमान् । उक्ताचार्यत्वलक्षणलक्षितान् उक्तलक्षणाभावे पतिपित्रादयोऽपिनाचार्या इति भावः। अनुज्ञया पतिपित्रादीनामनुज्ञया । वा-

शब्दो भिन्नक्रमः। अन्येभ्यो वा पतिपित्रादिव्यतिरिक्तेभ्योऽपि वा मन्त्रपरिग्रहः स्मृतः ॥ ४८ ॥

वैदिकास्तान्त्रिकाश्चैव यथार्था लौकिकास्तथा।
प्रपत्तौ विहिता मन्त्रास्तत्र तत्र व्यवस्थया ॥ ४९ ॥

पूर्वं 'विश्वात्मन्यात्मनो न्यासं धिया वृत्तिं च शाश्वतीम्। मन्त्रेणोच्चारयेद्यस्तु' इत्यत्र प्रपत्तेर्मन्त्रेणोच्चारणमुक्तम्। स मन्त्रो वैदिकस्तान्त्रिको वेत्यपेक्षायामाह—वैदिकास्त्विति। यथार्था वैदिकतान्त्रिकमन्त्रसदृशार्थास्तु तत्र व्यवस्थया त्रैवर्णिकानां वैदिकास्तान्त्रिकाश्चाशूद्रादीनां तान्त्रिकाः प्रतिलोमजानां वैदिकादिमन्त्रसमानार्था लौकिका इति व्यवस्था द्रष्टव्या ॥ ४९ ॥

न्यासिनो न्यास एव स्यान्निष्ठा तत्पूर्विकाः क्रियाः।
व्यापकैर्नैष्ठिकैर्वान्यैः कुर्यात्तेऽप्यर्पणे मताः ॥ ५० ॥

अथ कुत्र मन्त्रे निष्ठेत्यपेक्षायामाह—न्यासिन इति। न्यासिनः प्रपन्नस्य न्यास एव प्रपत्तिप्रतिपादकमन्त्ररत्न एव निष्ठा तस्यैव नित्यजप इत्यर्थः। क्रिया अर्चनादिक्रियास्तत्पूर्विकाः तन्मन्त्रपूर्विकाः कुर्यात्। व्यापकैः विष्णुगायत्र्यामाम्नातैः षडष्टद्वादशाक्षरैः नैष्ठिकैः निष्ठामन्त्रैरन्यैः मन्त्ररत्नव्यतिरिक्तैर्वा कुर्यात्। मन्त्ररत्नव्यतिरिक्तेष्वपि व्यापकेषु वा निष्ठा क्रियाश्च तत्पूर्विका भवितुमर्हन्तीत्यर्थः। ननु तेषां प्रपत्तिप्रतिपादकत्वाभावात्। प्रपन्नस्य कथं तेषु निष्ठा विधीयत इत्याह। तेऽप्यर्पणे मता इति तेषामपि नमःशब्दादिविशिष्टत्वात्प्रपत्तिप्रतिपादकत्वमस्तीत्यर्थः ॥ ५० ॥

करेण स्पर्शयन् गात्रं मन्त्रविद्भावयेद्दृशा।
एषा वा सर्ववर्णानां दीक्षेत्याह मुनिः स्वयम् ॥ ५१ ॥

अर्चनादिक्रियायाः मन्त्राणां च दीक्षितैरनुष्ठेयत्वाद्दीक्षा-स्वरूपमाह-करेणेति । मन्त्रविदाचार्यः करेण गात्रं शिष्यस्य देहं स्पर्शयन् स्पृशन् दृशा भावयेत्पश्येदिति यतः सर्ववर्णानां दीक्षेति मुनिर्भरद्वाजः स्वयमाह ॥ ५१ ॥

यां सिद्धिं वैष्णवैर्मन्त्रैराधत्ते वैष्णवो गुरुः ।
सर्ववेदधरोऽप्यन्यो नान्यैः कुर्वीत तादृशीम् ॥५२॥

वैष्णवेन गुरुणा मन्त्रैरपि वैष्णवैरेव भवितव्यमित्याह-यामिति । वैष्णवैर्मन्त्रैर्यादृशीं सिद्धिम् आधत्ते सर्ववेदधरोऽप्यन्यः अन्यैरवैष्णवैर्मन्त्रैः तादृशीं न कुर्वीत ॥ ५२ ॥

वैदिकास्तान्त्रिकाश्चैव द्वये मुख्या द्विजन्मनाम् ।
शूद्रानुलोमजातीनां मन्त्राः स्युस्तान्त्रिकाः परम् ॥५३
भाषाख्या लौकिका मन्त्राः प्रपत्त्यर्थविभावनाः ।
सर्वेभ्यः प्रतिलोमेभ्यो देयाः कामं द्विजातिभिः ॥५४॥

वैदिकास्तान्त्रिकाश्चैवेति श्लोकोक्तां मन्त्रे व्यवस्थां विशदयति-वैदिक इत्यादिश्लोकद्वयेन । भाषाख्या इतिलौकिकशब्दार्थो भाषारूपा इत्यर्थः । प्रपत्त्यर्थविभावनाः प्रपत्तिरूपमर्थं विभावयन्तीति प्रपत्त्यर्थविभावनाः प्रपत्तिप्रकाशका इत्यर्थः द्विजातिभिरिति भाषारूपमन्त्रदानमपि द्विजातिभिरेव कर्तव्यमिति भावः ॥ ५३ ॥ ५४ ॥

मन्त्रं नियतमग्र्याणां यो हीनाय प्रयच्छति ।
स वै हीनगुरुर्निन्द्यस्तेन सार्द्धं पतत्यधः ॥ ५५ ॥

अत्रैवर्णिकादिभ्यो वैदिकादिमन्त्रप्रदाने प्रत्यवायमाह-मन्त्रमिति । अग्र्याणां त्रैवर्णिकानां नियतं वैदिकादिकमित्यर्थः । हीनाय अत्रैवर्णिकाय वैदिकं प्रतिलोमजाय तान्त्रिकं च प्रयच्छन्पततीत्यर्थः ॥ ५५ ॥

तदेवं स्वोचितैरेव मन्त्रैर्मन्त्रविदाश्रयाः।
श्रयेयुः शरणं सर्वे सर्वभूतेश्वरं हरिम् ॥ ५६ ॥

तदेवमिति। मन्त्रविदाश्रयाः मन्त्रविदाचार्यसमाश्रयाः। सर्वभूतेश्वरमिति तस्य सर्वभूतेश्वरत्वात् सर्वेऽपि शरणं गन्तुमर्हा इत्यर्थः ॥ ५६ ॥

पुण्येऽनुकूले समये देशे भागवते शुभे।
निमज्य नियतस्तीर्थे प्रणिपत्याश्रयेद्गुरुम् ॥ ५७ ॥

पुण्येति। इदं च अनापद्विषयम्। आपदि तु न देशकालादिनियमः। 'स एष देशः कालश्च' इत्याद्युक्तेः। 'न देशकालौ नावस्थां योगोह्ययमपेक्षते' इति प्रागभिधानाच्च ॥ ५७ ॥

आचार्यश्चोपसन्नाय भक्त्याभ्यर्च्य जनार्दनम्।
गुरून्प्रणम्य मन्त्रेण प्रपत्तिं प्रतिपादयेत् ॥ ५८ ॥

अथाचार्यकृत्यमाह–आचार्यश्चेति। भक्त्या उपसन्नाय प्राप्ताय शिष्याय जनार्दनमभ्यर्च्य गुरून्प्रणम्य मन्त्रेण प्रपत्तिं प्रतिपादयेत् दद्यात् गुरुपरम्पराप्रणामपूर्वकं मन्त्रेण प्रपत्तिं कारयेदित्यर्थः ॥ ५८ ॥

अथ स्त्रीशूद्रसङ्कीर्णानिर्मलापतितादिषु।
अनन्येनान्यदृष्टौ च कृतापि न कृता भवेत् ॥ ५९ ॥

आचार्यत्वानर्हेणाचार्यत्वेन परिगृह्य कृता प्रपत्तिरकृतप्रायेत्याह–अथेति। सङ्कीर्णाअनुलोमप्रतिलोमजाताः अनिर्मलाः आचार्यसमाश्रयगरहिताः आपतिताः महापतकादियुक्ताः अन्यदृष्टिर्बाह्यकुदृष्टिर्यदि शास्त्रमात्रसम्पन्नज्ञानः। एतेष्वाचार्येषु सत्सु अनन्येन शिष्येण कृतापि प्रपत्तिः कृता न भवेत्

अन्यद्दृष्टाविति पदम् अपाञ्चरात्रादिकान्यभक्तालक्ष्यान्यसे-वकानामुपलक्षणम्॥ ५९ ॥

अतोऽन्यत्राशु विधिवत्कर्त्तव्या शरणागतिः ।
उपदेष्टा तु मन्त्रस्य मूढः प्रच्यवते ह्यधः ॥ ६० ॥

अतोन्य इति । अन्यत्र स्त्रीशूद्रादिव्यतिरिक्ते आचार्ये सति शरणागतिः कर्तव्या। मन्त्रस्य उपदेष्टा मूढः स्त्रीशूद्रादिः अधः प्रच्यवते च्युतो भवति । मूढः प्रच्यवतेऽधम इत्यपरः पाठः॥६०॥

अनादेर्वासनायोगाद्विपरीतादिहात्मनः ।
स्मृतिर्न जायते विष्णौ कुत एवार्पणे मतिः ॥ ६१ ॥

अतिसुकरोऽपि न्यासोपायः अनादिदुर्वासनाकलुषितानां दुरात्मनां दुर्लभ इत्याह–अनादेरिति । अनादेः अविच्छिन्न-प्रवाहात् विपरीताद्वासनायोगाद्विपरीतवासनासम्बंधाद्विष्णौ स्वान्तरवस्थितेऽपि भगवति विषये स्मृतिरपि न जायते अर्पणे आत्मरक्षाभरसमर्पणे मतिः कुतः ? रुचिर्दूरापास्तेत्यर्थः ॥६१॥

स्वपापसंभवादेव कुलात्संसर्गतोऽन्यतः ।
देशात्कालात्स्वभावाच्च प्रपद्यन्ते न केशवम् ॥ ६२ ॥

स्वपापेति । स्वपापसम्भवादेव स्वपापैकमूलात्कुलात् अन्यतः संसर्गाद्भगवद्विमुखैः संसर्गाद्देशात्पापदेशत्रासात्कालात् दुष्टकालात्स्वभावात्पापमूलदुःखस्वभावाच्च केशवं न प्रपद्यन्ते ॥ ६२ ॥

अविज्ञाय सदा शुद्धं नरा नारायणं प्रभुम् ।
अशुद्धानामहोऽन्येषां दास्यमिच्छन्त्यबुद्धयः ॥ ६३ ॥

पापमूलदुर्बुद्धिमहिम्ना भगवंतमविज्ञाय अन्यशेषत्वमप्यंगीकुर्वतीत्याह–अविज्ञयेति।नरा नारायणमित्यनेन स्वयं नरा अपि

नारायणं नराणामयनभूतमपि अविज्ञाय अन्यं प्रपद्यन्ते इत्यनौचित्यमुच्यते । अशुद्धानां कर्मवश्यानां रजस्तमोऽभिभूतानामपि अन्येषां ब्रह्मरुद्रादीनां दास्यमिच्छन्ति तत्र हेतुरसुद्धय इति ॥ ६३ ॥

केचित्सर्वेश्वरं विष्णुमशेषदुरितापहम् ।
कामकामाः प्रपद्यन्ते न ते दास्यं परं विदुः ॥ ६४ ॥

भगवंतं प्रपद्यापि केचिद्भाग्यहीना व्यर्था भवन्तीत्याह—केचिदिति । सर्वेश्वरमित्यनेन स्वामिविषये प्रपत्तिः स्वरूपान्तर्गतेति सूच्यते अशेषदुरितापहमित्यनेन सर्वपापनिवर्तकत्वे सत्यपि तदनपेक्ष्य कामानेव कामयन्ते दुर्भगा इति सूच्यते दास्यं भगवत्कैङ्कर्यं परं प्राप्यं न विदुः ॥ ६४ ॥

बहुजन्मकृतैः पुण्यैरात्मनः क्षीणकल्मषाः ।
हरिं सन्तः प्रपद्यन्ते तद्दास्यैकफलार्थिनः ॥ ६५ ॥

भाग्याधिकास्तु भगवद्दास्यमेवापेक्ष्य भगवन्तमेव प्रपद्यन्त इत्यत आह—बहुजन्मेति। सन्तः परस्वरूपाभिज्ञाः 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतिः ॥ ६५ ॥

कृतिनां वीतमोहानां केशवे निहितात्मनाम् ।
स्वदते केवलं दास्यं स्वधर्मकरणादिकम् ॥ ६६॥

प्रपन्नस्योत्तरकृत्यत्वेन वर्णाश्रमधर्माणां कर्तव्यत्वं महाभाग्यसम्पन्नानां तेषु भोग्यताबुद्धिसंभवं चाह—कृतिनामिति । केशवनिहितात्मनां भगवन्निक्षिप्तात्मस्वरूपाणाम् । अत एव कृतिनां वीतमोहानाम् । अर्थपञ्चकविषयकाज्ञानशून्यानां स्वधर्मकरणादिकं वर्णाश्रमादिनियतधर्मकरणादिकं केवलं पुंसाम् उपायत्वबुद्धिरहितं दास्यं स्वदते स्वादुत्वेन भाति ॥ ६६ ॥

वासुदेवं प्रपन्नानां तद्दास्यैकरसात्मनाम् ।
भेदो वीतभयानां हि नात्र कश्चित्परत्र वा ॥ ६७ ॥

भोग्यतया स्वधर्माननुतिष्ठन्तो मुक्तप्राया इत्याह-वासुदेवमिति । वीतभयानां 'न बिभेति कुतश्च न' इतिवदत्राप्यभयं प्राप्तानाम् । अत्र इह लोके परत्र परलोके ॥ ६७ ॥

इह श्रुत्यादिनियता वृत्तिरेव स्वयं फलम् ।
परत्र च परेशस्य कामात्कामप्रवृत्तयः ॥ ६८ ॥

उक्तमर्थं विशदयति-इहेत्यादि । इह अत्र लोके श्रुत्यादिविहिता श्रुतिस्मृतिचोदिता वृत्तिरेव स्वयं फलं परत्र परमपदे परेशस्य भगवतः कामात् नियमनरूपात् सङ्कल्पात्कामप्रवृत्तयः स्वच्छन्दकैङ्कर्यप्रवृत्तयः स्वयं फलं परमपदेऽपि हि स्वाम्यभिमतकैङ्कर्यं स्वयं फलं स्वाम्यभिमतस्तु मोक्षो मुक्तेन साक्षात्क्रियते । अत्र शास्त्रमुखेन ज्ञायते । कैङ्कर्यं तु उभयत्र तुल्यं फलम् । अतस्तथाविधकैङ्कर्यानुष्ठातॄणां मुमुक्षूणां मुक्तानां च न भेद इति भावः ॥ ६८ ॥

निक्षिप्यात्मानमात्मीयमशेषमखिलात्मनि ।
क्रियाश्च सकलास्तत्र वर्त्तन्ते वीतकल्मषाः ॥ ६९ ॥

एतावद्भिः श्लोकैरुक्तमर्थं सङ्गृह्याह-निक्षिप्येति । अत्र पूर्वार्द्धेन प्रपत्त्यनुष्ठानमुक्तम् । उत्तरार्द्धेन भगवत्कैङ्कर्यतया प्रपन्नस्य स्ववर्णाश्रमावस्थोचिताशेषधर्मानुष्ठानात्मकमुत्तरकृत्यमुक्तं तत्रेति परमात्मपरामर्शः सकलाः क्रियाश्च परमात्मनि निक्षिप्य परमात्मप्रीणनार्थतया सङ्कल्प्य वर्त्तते तत्र वर्त्तते च इति सन्मुख एव चान्वयः ।भगवदनुसंधानेन कालं नयन्तीत्यर्थः॥६९॥

मन्यन्ते च स्वकीयान्नः स्वप्रीत्यै स्वोचितां स्वयम् ।
नाथः स्वकीयसेवां तां वृत्तिं कारयतीति वै ॥७०॥

अथ प्रपन्नानां फलासंगतः अकर्तृत्वानुसंधानं चाह-मन्यन्ते चेति।स्वकीयान् स्वशेषभूतान्नः स्वप्रीत्यै स्वसन्तोषाय स्वोचितां स्वार्थां स्वकीयसेवां तां भगवतः दास्यपर्यंतां वृत्तिं स्वयं कारयतीति मन्यन्ते च ॥ ७० ॥ इति प्रपत्त्यधिकारः ॥

यथा प्रपत्तिर्विहिता भगवच्चरणाब्जयोः ।
तथैव तत्र वृत्तिश्च कार्या गुरुनिदेशतः ॥ ७१ ॥

" धिया वृत्तिं च शाश्वतीम् " इत्युक्तां वृत्तिं विधानप्रदर्शनमुखेन विशदयितुमारभते-यथेति । भगवच्चरणाब्जयोः । प्रपत्तिर्यथा विहिता । येन प्रकारेण षाड्विध्येन कृता तथैव षाड्विध्येनैव तत्र भगवच्चरणाब्जयोः गुरुनिदेशतः आचार्यानुज्ञया वृत्तिश्च कार्या ॥ ७१ ॥

वृत्तिश्च विहिताचारः प्रतिषिद्धविवर्जनम् ।
दृष्टिर्भक्तिस्तथा लक्ष्म सतां सेवेति षड्विधा ॥ ७२ ॥

षाड्विध्यमेवाह-वृत्तिरिति । विहितानामाचारः करणं विहिताचारः । दृष्टिर्ज्ञानम् । लक्ष्म भगवल्लाञ्छनादिकं भागवतचिह्नम् ॥ ७२ ॥

अनन्यरतिरत्यन्तं विहितानि समाचरन् ।
वर्जयन् प्रतिषिद्धानि वेदवेदांततत्त्ववित् ॥ ७३ ॥

अथ श्लोकद्वयेन पूर्वश्लोकार्थं विवृणोति-अनन्येति । अनन्यरतिः प्रयोजनान्तरेच्छारहितः । अत्यन्तमनन्यरतिरिति वान्वयः । अत्यन्तं वर्जयन्निति वान्वयः पूर्वश्लोकस्य दृष्टिरित्यस्य विवरणं 'वेदवेदान्ततत्त्ववि' इति । भक्तिरित्यस्य विवरणम् । अर्चादिष्वर्चयन्विष्णुमिति लक्ष्मेत्यस्य विवरणम् । 'अङ्कितो हरिलाञ्छनैः' इति। सतां सेवेत्यस्य विवरणम्। 'सेवते यद्गुरून् भक्त्या' इति यत सेयं वृत्तिरित्यन्वयः ॥ ७३ ॥

अर्चादिष्वर्चयन्विष्णुमङ्कितो हरिलाञ्छनैः ॥
सेवते यद्गुरून्भक्त्या सेयं वृत्तिः परा मता ॥ ७४ ॥

अर्चादिष्विति । अस्य श्लोकस्यापि पूर्वेणान्वयः ॥ ७४ ॥

स्वाभाविकोऽस्य सम्बन्धः पुंसो यः परमात्मना ।
तस्यैव बोधो न्यासाख्यः प्रथमं यात्युपायताम् ॥७५॥

प्रपत्तेर्वृत्तेश्चाभेदं वक्तुं न्यासस्वरूपं कथयन्नर्थात् अनुरूपस्वरूपवृत्तित्वेन प्रपत्तेः सकृत् कर्तव्यता न स्यादिति चोद्यं च परिहरति–स्वाभाविक इति । अस्य पुंसो जीवस्य परमात्मना समं यः स्वाभाविकः सम्बन्धः स्वस्वामिभावलक्षणः, तस्य बोध एव न्यासाख्यः न्यासशब्दवाच्यः सन् प्रथममुपायतां भगवद्वशीकरणोपायतां याति सम्बन्धबोधस्यन्यासत्वस्वरूपकभरसमर्पणभूतन्यासैकदेशस्वरूपसमर्पणात्मत्वात् ॥ प्रथमं यात्युपायतामित्यनेन उपायत्वेन सकृत्करणम् । आवृत्तिस्तु फलस्वरूपस्य तस्येति न विरोधः इति सूचितम् ॥ ७५ ॥

स एवोपर्युपर्यस्य परां प्रीतिमुपावहन् ।
वृत्त्याख्यां फलतां याति तदेवामृतमुच्यते ॥ ७६ ॥

सेति। स एवसम्बंधः स्वबोधस्वरूपोपन्यासः उपर्युपरि प्रथमानुष्ठानानंतरमुपर्युपरि अस्य परमात्मनः परां प्रीतिं हर्षमुपावहन् जनयन् वृत्त्याख्यं यत्फलं तत्स्वरूपतां याति अस्य परां प्रीतिमुपावहन्नित्यस्य प्रपन्नस्य भोग्यतया निरतिशयां प्रीतिं जनयन्निति भावार्थः ॥ ननु प्रपन्नस्य मोक्षफलं न वृत्तिरित्यत आह तदेवामृतमुच्यत इति । तद्वृत्त्याख्यफलमेव अमृतं मोक्ष उच्यते यद्वा जीवपरमात्मसम्बन्धज्ञानं प्रथममुपायः अनन्तरं वृत्त्याख्यं फलं भवति अनन्तरं मोक्षस्वरूपं भवति । 'बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः'। इत्यादिवत्स्वरूपाविर्भावस्यैव मोक्षत्वात्

शेषत्वस्यैव स्वरूपाच्चेति भावः ॥ तदिति नपुंसकलिंगनिर्देशः विधेयस्यामृतशब्दस्य नपुंसकलिंगत्वादुपपद्यते 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इत्यादितुल्यन्यायात् ॥ ७६ ॥

या स्वधर्मेष्वभिरतिः सा भवत्यनुकूलता ।
वर्जनं प्रतिषिद्धानां तथैषा प्रतिकूलता ॥ ७७ ॥
वेदवेदान्तविज्ञानं विश्वासो गोप्तरि स्वयम् ।
गोप्तृत्ववरणादन्यत्र विष्णोरर्चनादिकम् ॥ ७८ ॥
प्रपत्तेर्ह्यात्मनि क्षेपो दास्यचिह्नैकलक्षणः ।
सतां देशिकमुख्यानां सेवा कार्पण्यमुच्यते ॥ ७९ ॥

प्रपत्तिवृत्त्योः समभेदं श्लोकत्रयेण दर्शयति—यास्वधर्मेत्यादि। स्वधर्मेष्वाभिरतिर्वृत्तिश्च विहिताचार इत्यत्रोक्तो विहिताचारः, सा अनुकूलता भवति प्रपत्त्यङ्गभूत आनुकूल्यसङ्कल्पो भवति प्रातिकूल्यवर्जनं प्रतिषिद्धानां वृत्तिशरीरानुप्रविष्टं प्रतिषिद्धविवर्जनम् । अप्रातिकूलता प्रपत्त्यङ्गभूतप्रातिकूल्यवर्जनम् । भगवदनभिमतनिषिद्धवर्जनस्यैव प्रातिकूल्यवर्जनं वेदवेदान्तविज्ञानं वृत्त्यनुप्रविष्टा दृष्टिः । विश्वासः प्रपत्त्यङ्गभूतो रक्षिष्यतीति विश्वासः । विश्वासो हि रक्षकत्वाध्यवसायविशेषश्च । गोप्तरि भवति वेदवेदान्तविज्ञानम् अयमेव रक्षक इत्यध्यवसायात्मकमेवेत्यर्थः । विष्णोरर्चनादिकं वृत्त्यनुप्रविष्टभक्तिशब्दवाच्यम् अर्चनादिकं गोप्तृत्ववरणादन्यत्र भवति गोप्तृत्ववरणाय घटितत्वादिति भावः । आत्मनिक्षेपः अङ्गीभूतो न्यासः दास्यचिह्नैकलक्षणः प्रथते । तवैवाहमिति दास्यानुसन्धानात्मकत्वात् न्यासस्य चक्राङ्कनादिचिह्नानामपि तत्प्रवाहबाह्यरूपतया दास्याभि व्यञ्जकत्वाद्वृत्त्यनुप्रविष्टं लक्ष्म आत्मनिक्षेपान्नातिरिच्यत इत्यर्थः । देशिकमुख्यानाम् आचार्य-

मुख्यानां सतां सेवा वृत्तिशरीरानुप्रविष्टा प्रपत्त्यङ्गभूतकार्पण्यमुच्यते । सेवायाः कृपाजनककृपणवृत्तिरूपत्वात् आकिञ्चन्यानुसन्धानकार्यत्वात्तद्व्यभिचरितत्वाच्च कार्पण्यान्नातिरेक इति भावः ॥ ७७ ॥ ७८ ॥ ७९ ॥

अतः प्रपत्तिरेवेह वृत्तिर्भवति शाश्वती ।
तस्यैवास्मीति बोधात्मा प्रवृत्ति वृत्तिरेव च ॥ ८० ॥

वृत्तिप्रपत्त्योरभेदं निगमयति-अत इति । यतः प्रपत्तिर्वृत्तिरेव च तस्यैवाहमस्मीति बोधात्मा अतः प्रपत्तिरेव शाश्वती वृत्तिरित्यन्वयः ॥ ८० ॥

तदेवं भगवान्प्रीतः प्रपत्त्या साधनं परम् ।
तयैव वृत्तिवपुषा प्रीतः फलमपि स्वयम् ॥ ८१ ॥

ननु प्रपत्तेरेवोपायोपेयत्वे भगवत एवोपायत्वोपेयत्ववादो न स्यादित्यत आह-तदेवमिति । प्रपत्त्या प्रीतोभगवान् परं साधनं भवति; वृत्तिवपुषा तया प्रीतः फलमपि भवति; न स्वरूपेण प्रपत्तेरुपायत्वम् । अपि तु भगवत्प्रसादनद्वारा । नापि वृत्तिस्वरूपायास्तस्याः स्वरूपेण फलत्वमपि भगवत्प्रीणनहेतुत्वात् । अतः प्रपत्त्युपायोपेयभावस्य भगवदुपायोपेयभाव निबन्धनत्वात्साक्षादुपायोपेयभावो भगवत एवेत्यर्थः ॥ ८१ ॥

विहितांतर्गतान्येव इष्ट्यादीनि तथापि तु ।
तेषां विशेषमान्यत्वात्पृथक् चांगतया विधिः ॥ ८२ ॥

ननु वृत्तेः षाड्गुण्यमुक्तं तन्न युक्तं इष्ट्यादीनां विहिताचारान्तर्गतत्वादित्याशङ्क्याह । न्यायशास्त्रादिमे सूत्रे सर्वेषां प्रमेयान्तर्गतत्वेऽपि प्रकारातिशयेन पृथग्वक्तव्यत्वात्प्रमाणादीनामिव इष्ट्यादेरपि पृथगुपादानं युक्तमित्याह-विहितेति । इष्ट्यादी-

त्यादिशब्देन भक्तिसत्सेवयोः सङ्ग्रहात्तेषां दृढदृष्ट्यादीनां विशेषमान्यत्वात् विशेषतः प्राधान्येन ज्ञातव्यत्वात् ॥ ८२ ॥

निषिद्धांतर्गतान्येव विरुद्धान्यखिलान्यपि ।
हानं सर्वस्य चैकांगं पृथग्व्याचक्षते परे ॥ ८३ ॥

एवं वक्ष्यमाणदृष्ट्यादिविरुद्धपरित्यागोऽपि प्रतिषिद्धवर्जनान्तर्गत एव । तथापि विशेषतः परित्याज्यत्वात् दृष्ट्यादिविरुद्धानां पृथगुक्तिरित्याह-।निषिद्धेति । अखिलान्यपि विरुद्धानि दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धानि सर्वाण्यपि निषिद्धान्तर्गतान्येव षड्विधवृत्त्यन्तर्गतप्रतिषिद्धवर्जनप्रतियोगिप्रातिषिद्धान्तर्गतान्येव तथापि प्राधान्यात् पृथगुक्तिरिति भावः । यथा विहिताचारान्तर्गतानामपि दृष्ट्यादीनां पृथगङ्गत्वेन विधिः एवं प्रतिषिद्धवर्जनान्तर्गतस्यापि दृष्ट्यादिविरुद्धहानस्य पृथगङ्गत्वं केचिद्व्याचक्षत इत्याह । हानमिति । तस्य दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धस्य हानं वर्जनं पृथगेकाङ्गं परे व्याचक्षते।तन्मते वृत्तेः सप्तविधत्वमित्यर्थः । यद्वा सर्वस्य विहिताचारस्य दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धस्य सर्वस्यापि हानं पृथगेकांगं व्याचक्षते अस्मिन् व्याख्याने विहिताचारदृष्टिलक्ष्मसत्सेवा विरुद्धवर्जनरूपेण षाड्विध्यमेव द्रष्टव्यत्वात् ॥ ८३ ॥

आनुकूल्यस्य संकल्पात्प्रातिकूल्यस्य वर्जनात् ॥
प्राप्ते समस्तेऽपि तथा विश्वासादेः पृथग्विधिः ॥ ८४॥

सर्वेषामपि वृत्तिभेदानां विहिताचारप्रतिषिद्धवर्जनान्तर्गतत्वेऽपि दृष्ट्यादेः पृथगुपन्यासः आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनान्तर्गतत्वेऽपि प्रपत्त्यंगानां विश्वासादीनां पृथग्विधिरेव युज्यते इति ज्ञापयितुम् आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनयोरितरेषामंतर्भावमाह-आनुकूल्यस्येति। आनुकूल्यस्य सङ्कल्पात्

भगवदनुकूलशास्त्रविहितवृत्तानुवृत्तिसङ्कल्पात् प्रातिकूल्यस्य-भगवत्प्रातिकूलनिषिद्धानुवर्तनस्य वर्जनादपि समस्ते विश्वासादौ सर्वस्मिन् प्राप्ते सिद्धेऽपि विश्वासादेः पृथग्विधिः यथा आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनांतर्गतत्वेऽपि विश्वासादीनां पृथग्विधिः, तद्वद्वृत्तावपीति भावः यद्यपि आनुकूल्यसङ्कल्पेन विश्वासादेरंतर्भावः,तेषामानुकूल्यान्तर्गतत्वेऽपि तत्सङ्कल्पान्तर्गतत्वाभावात् अथापि सङ्कल्पविद्यानुकूलांतर्गतत्वात्तथोक्तिः ८४

न कर्म हीनं ज्ञानेन न तत्तेन न ते अपि ॥
भक्त्या ताभ्यां न सा तानि न वैराग्येण तन्न तैः॥८५॥

वृत्तिभेदाः षडपि परस्परेण विनाकृता न भगवत्प्रीणनाय प्रभवन्तीत्याह-नेति । ज्ञानेन दृष्ट्या हीनं कर्म विहिताचारः न भगवत्प्रीणनहेतुर्भवितीत्यर्थः । तत् ज्ञानं तेन कर्मणा हीनं न भवति । ते अपि कर्मज्ञाने अपि भक्त्या विना न भवतः । भक्तिशब्देन लक्ष्मसत्सेवयोरपि सङ्ग्रहः । ताभ्यां ज्ञानकर्मभ्यां हीना सा भक्तिर्न भगवत्प्रीणनाय भवति । तानि भक्तिकर्मज्ञानानि वैराग्येण विना न भवन्ति । तैर्भक्त्यादिभिर्हीनं विरुद्धवर्जनं न भगवत्प्रीणनाय भवतीत्यर्थः ॥ ८५ ॥

विहिताचरणं कर्म वैराग्यं निंद्यवर्जनम् ॥
ज्ञानं सुदृष्टिर्भक्तिस्तु हरिचिह्नसमाश्रया ॥ ८६ ॥

असङ्गत्वशङ्कामपाकर्तुं कर्मज्ञानादिशब्दानामर्थमाह-विहितेति । भक्तिस्तु हरिचिह्नसमाश्रयेति हरिचिह्नं वृत्त्यनुप्रविष्टं लक्ष्म सतां सेवेत्युक्ताः परमैकान्तिनः । ते आश्रया यस्याः सा भक्तिशब्देन लक्ष्मसत्सेवयोरन्तर्भावात्संग्रह इति भावः ॥ ८६ ॥

एवं चतुर्विधामेनां प्रीतिरूपां हरेः स्वयम् ।
यो वृत्तिमवमन्येत न हि तस्यास्ति निष्कृतिः ॥ ८७ ॥

वृत्त्यवमाने प्रत्यवायमाह—एवमिति। चतुर्विधां विहिताचारदृष्टिभक्तिविरुद्धवर्जनात्मकवैराग्यरूपां भक्तिशब्देन लक्ष्मसत्सेवयोरपि सङ्ग्रहात् चातुर्विध्यमविरुद्धम् । हरेः स्वयं प्रीतिरूपां साक्षाद्भगवत्प्रीणनहेतुभूतां वृत्तिं योऽवमन्येत तस्य निष्कृतिः प्रायश्चित्तं नास्तीति ॥ ८७ ॥

न देवतान्तरपरा न च कस्यापि साधनम् ।
परं प्रसाद एवैषा वृत्तिर्विश्वात्मनो हरेः ॥ ८८॥

परमैकान्तिनः कर्मणां त्यागे हि द्वौ हेतू। कर्मणां देवतान्तरसम्बन्धः काम्यरूपत्वं च । तद्द्वयस्यापि वृत्तावभावात् । केवलभगवत्प्रीणनत्वात् वृत्तिरवश्यमनुष्ठेयेत्याह-नेति ननु विहिताचारात्मकवर्णाश्रमधर्माणामग्नीन्द्रादिदेवतासम्बन्धित्वात्कथं देवतान्तरपरत्वाभाव इत्याशङ्क्याह । विश्वात्मन इति । तत्रापि तदन्तर्यामिण एव भगवत आराध्यत्वादिति भावः।ननु कस्यापि साधनं यदि न स्यात्तर्हि किं तदनुष्ठानेनेत्याशङ्कायामाह। परं प्रसाद इति । भगवत्प्रीतिहेतुत्वान्निषेधस्य तद्व्यतिरिक्तविषयत्वाच्चेति भावः ॥ ८८ ॥

देहस्यात्यन्तिकलये मोक्षाख्ये सति सा पुनः ।
निःश्रेयसं परं ब्रह्म निर्वाणमिति चोच्यते ॥ ८९ ॥

मुक्तिदशायामपि कैङ्कर्यस्यैव पुरुषार्थत्वात् वृत्तेरपि कैङ्कर्यत्वात् कदाचिदपि तत्र स्ववशायां पुरुषार्थभूतायां शैथिल्यं न सम्पादनीयमित्यभिप्रायेणाह—देहस्येति । मोक्षाख्ये देहस्यात्यन्तिकलये अपुनरसङ्कुरं विलये सति सा वृत्तिः पुनःनिरवधिकश्रेयोरूपकत्वात् निःश्रेयसमप्युच्यते। परब्रह्मविषयत्वात परब्रह्मेत्युच्यते । निरवधिकसुखरूपत्वात् सकलदुरितबन्धनिवृत्त्यनन्तरभावितत्त्वाच्च निर्वाणमिति चोच्यते । पश्चादनु-

भावस्यापि मोक्षस्य तद्रूपत्वात् मोक्षफलरूपेयं वृत्तिरवहेया न भवतीत्यभिप्रायः ॥ ८९ ॥ इतिवृत्त्यधिकारः ॥

प्रपन्नस्यापि हि पुनर्देहे कर्मकृते स्थिते ।
दुरितानि परां वृत्तिं दूषयन्ति मुहुर्बलात् ॥ ९० ॥

एवं वृत्तिं निरूप्य तद्विरुद्धानि विवक्षुस्तद्विरुद्धानां प्रपन्नेषु सम्भवबीजं तत्प्रशमनोपायं च श्लोकद्वयेनाह-प्रपन्नस्येति । देहे कर्मकृते स्थित इति अभ्युपगतप्रारब्धांशनिविष्टदुरितसंभावनाभिप्रायः ॥ ९० ॥

तानि सर्वाण्यशेषाणि पापानि प्रशमं नयेत् ।
पुनः प्रपदनेनाशु कर्मभिर्वापि तत्परैः ॥ ९१ ॥

तानीति। तत्परैः भगवत्परैः कर्मभिः वैष्णवेष्टयादिभिः॥९१॥

एकांती शक्तितः कुर्वन् विहितानि समुत्सुकः ॥
तथैव प्रतिषिद्धानि त्यक्त्वा याति परां गतिम् ॥ ९२ ॥

एवमुपायैरपराधारम्भकपापानि प्रशमय्य वृत्तिमनुतिष्ठन्मुक्तो भवतीत्याह-एकान्तीति । शक्तितः कुर्वन्विहितानीत्यनेनदृष्ट्यादेः संग्रहः । प्रतिषिद्धानीत्यनेन दृष्ट्यादिविरुद्धस्यापि संग्रहः ॥ ९२ ॥

पाखण्डशैवशाक्तादितंत्रार्चालोकनादिकम् ।
स्वतो ब्रह्मशिवादीनां बद्धानामर्चनादिकम् ॥ ९३ ॥

पाखण्डेति। पाखण्डाः वेदबाह्याः। तेषां तंत्रालोकनं च आदिशब्देन अनुमोदनादिसंग्रहः । इदं च दृष्टिविरुद्धम् । स्वतो ब्रह्मशिवादीनां बद्धानामर्चनादिकमित्यनेन भक्तिविरुद्धमित्युक्तम्। स्वतः अर्चनमित्यनेन नियतेषु तदन्तर्याम्याराधनमदोषावहमिति ज्ञाप्यते ॥ ९३ ॥

ऊनधीः समताशङ्का विष्णोर्विस्मृतिरेव च ।
अनादरश्चतन्मन्त्रलक्षणार्चाक्रियादिषु ॥ ९४ ॥

ऊनधीरिति। ऊनधीरित्यादिकं दृष्टिविरुद्धं भक्तिविरुद्धं चोक्तम्। अनादरश्च तन्मन्त्रलक्षणार्चाक्रियादिष्वित्यनेन लक्ष्मभक्तिविरुद्धे उक्ते ॥ ९४ ॥

तस्यैवात्यन्तिके दास्ये विमतिः कामकामिता ।
अविश्वासः प्रपदने साधनान्तरसंश्रयः ॥ ९५ ॥

तस्यैवेति। कामकामिता प्रयोजनान्तरपरता साधनान्तरसंश्रयः उपायान्तरान्वयः। इदं भक्तिविरुद्धम् ॥ ९५ ॥

साधनत्वाभिमत्या च निजधर्मस्य वर्जनम् ।
असच्छास्त्रेष्वभिरतिर्दिव्यशास्त्रावधीरणम् ॥ ९६ ॥

साधनेति। साधनत्वाभिमत्या निजधर्मानुष्ठाने साधनान्तरान्वयः स्यादित्यतिशङ्कया निजधर्मस्य स्ववर्णाश्रमोचितधर्मस्य वर्जनम्। इदं विहिताचारविरुद्धम्। असच्छास्त्रेष्वभिरतिः दिव्यशास्त्रं भगवच्छास्त्रम् इदं सर्वं दृष्टिविरुद्धम् ॥ ९६ ॥

अभागवतसंसर्गो रीढा भागवतेषु च ।
मर्त्यसामान्यभावेन गुरौ चानतिगौरवम् ॥ ९७ ॥

अभागवतेति। रीढा अवमानना। मर्त्यसामान्यभावेन मनुष्यत्वबुद्ध्यां अनतिगौरवमतिगौरवाभावः। इदं सत्सेवाविरुद्धम् ॥ ९७ ॥

इति भागवतस्योक्ताः प्रपन्नस्य विशेषतः ।
अपाया दुस्त्यजा ह्येते देहबन्धनिबन्धनाः ॥ ९८ ॥

इतीति । भागवतस्य भगवत्प्राप्त्युपायनिष्ठस्य प्रपन्नस्य तद्विशेषस्य देहबन्धनिबन्धनाः शरीरसम्बन्धमूलाः ॥ ९८ ॥

एतानन्याँश्च विविधानपचारान्विशेषतः ।
सर्वानप्यनपाकृत्य नाप्नोति मधुसूदनम् ॥ ९९ ॥

एतानिति । एतानन्याँश्च वक्ष्यमाणाननपाकृत्य आलयमेव सदा आवर्त्तयन् वृत्तिं विहिताचारादिलक्षणाम् अनिवर्त्य९९॥

अतो देहस्य कालुष्यान्मंत्रमर्थेन केवलम् ।
आवर्त्तयन्सदा वृत्तिं कुर्वन्कालं नयेत्सुधीः॥१००॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां न्यासोपदेशो नाम प्रथमोऽध्यायः ॥ १ ॥

---

अपराधप्रवेशावकाशसाहित्ये हेतुमाह—अत इति । देहस्य कालुष्यात्कलुषहेतुत्वात् । अर्थेन सह मन्त्रं केवलं द्वयमेव सदा आवर्त्तयन् वृत्तिं विहिताचारादिलक्षणां कुर्वन्कालं नयेत् ॥ १०० ॥ इति पापप्रशमनाधिकारः ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहिताटीकायां न्यासोपदेशो नामप्रथमोऽध्यायः ॥१॥

---

अथानुकूल्यमुख्यानि प्रपत्त्यङ्गानि विस्तरात् ।
धर्माणां तद्विरुद्धानां स्वरूपं च निबोधत ॥ १ ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां द्वितीयोऽध्यायः२ ॥

---

एवं प्रथमाध्याये प्रपत्तिस्वरूपमुक्त्वा तदभेदेनोपचरितवृत्त्यङ्गानि तद्विरुद्धानि चोक्त्वा प्रपत्त्यङ्गस्वरूपं तद्विरुद्धप्रपञ्चनम अवसरप्राप्तं द्वितीयाध्यायेन क्रियत इति प्रतिजानीते ॥

अथेति। आनुकूल्यमुख्यानि आनुकूल्यसङ्कल्पप्रभृतिप्रपत्त्य-

ङ्गानि । तद्विरुद्धानामानुकूल्यसङ्कल्पादिप्रपत्त्यङ्गविरुद्धानां धर्माणां स्वरूपं च विस्तरात्प्रपञ्चमानं निबोधतेत्यनेन अवहितेन मनसा श्रोतव्यमिति द्योत्यते ॥ १ ॥

अन्यत्सर्वं द्वितीयाध्यायवचनजातं विच्छिन्नसम्प्रदायम् ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहिताटीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

अथ स्वकर्मनिरतः प्राज्ञो भक्तः सुलक्षणः ।
सत्सेवाभिरतो ह्येव प्रपन्नः सिद्धिमाप्नुयात् ॥ १ ॥

तृतीयाध्याये वृत्त्यंगानि विस्तरेण प्रतिपिपादयिषुः प्रथमं वृत्तिमनुतिष्ठन् सिद्ध्यतीत्याह—अथेति । स्वधर्मनिरतःविहिताचारनिरतः प्राज्ञः दृष्टिसम्पन्नः भक्तः भक्तिसम्पन्नः सुलक्षणः भगवल्लाञ्छनलक्षितः सत्सेवाभिरतः सतां सेवायां निरत एव प्रपन्नः सिद्धिं निश्रेयसं प्राप्नुयात् अत्र प्रतिषिद्धविवर्जनस्य विहिताचारविवर्जनरूपत्वात् । तस्य विरुद्धाधिकारे प्रपञ्चयिष्यमाणत्वात् अस्मिन्नध्याये विहिताचारदृष्टिभक्तिलक्ष्मसत्सेवानामेव प्रपञ्चयमानत्वादेतस्य श्लोकस्यैतदध्यायसंग्रहरूपत्वात् विहिताचारदृष्ट्यादीन्येवोक्तानि सम्प्रति निषिद्धविवर्जनमिति द्रष्टव्यम् ॥ १ ॥

यथार्हं विहितैस्तैस्तैः संस्कारैः संस्कृतः क्रमात् ।
नयेदात्मगुणोपेतस्तानि तानि व्रतानि च ॥ २ ॥

अथ विहिताचारं प्रपञ्चयति—यथार्हमिति । तैस्तैर्विहितैः शास्त्रचोदितैः संस्कारैर्गर्भाधानादिभिः क्रमात्संस्कृतः आत्मगुणोपेतः सर्वभूतदयाक्षान्त्यनसूयार्जवशौचानायासमंगल्याकार्पण्यरूपैरष्टाभिरात्मगुणैरन्यैरत्यमानित्वादिभिरुपेतः तानि तानि

व्रतानि वेदव्रतानि नयेत् कुर्यादित्यर्थः। अत्र 'यस्यैते चत्वारिंशत्संस्कारा' इत्यादिना गौतमधर्मोक्तमनुसन्धेयम् ॥ २ ॥

ध्यात्वा नारायणं देवमादौ कर्माण्यशेषतः।
तस्यैवाराधनतया कुर्यात्सङ्कल्पपूर्वकम् ॥ ३ ॥

ध्यात्वेति। ध्यात्वेत्यादौ सर्वकर्मणामादौ देवम् अकर्मवश्यतया दीप्तिमन्तं नारायणं ध्यात्वा तस्यैव नारायणस्यैवाराधनतया सङ्कल्पपूर्वकमशेषतः कर्माणि सर्वाणि कुर्यात् ।भगवदाराधनतया इदं कर्म करिष्य इति सङ्कल्पं कुर्यादित्यर्थः। तस्यैवेत्येवकारेण कञ्चुकप्रायेष्वग्नीन्द्रादिषु न दृष्टिर्निधेयेत्युच्यते ३॥

समाप्तानि च कर्माणि तस्मिन्नेव समर्पयेत्।
आदावन्ते च मन्त्राणां योजयेद्व्यापकान्तरम् ॥ ४ ॥

समाप्तानीति। कर्मसु समाप्तेषु 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण' मित्येतानि भगवदर्पितानि कुर्यात् । गायत्र्यादिमन्त्राणाम् आदावन्ते च व्यापकान्तरं षडष्टद्वादशवर्णोयद्वात्यन्तमव्यापकं योजयित्वा जपेदित्यर्थः ॥ ४ ॥

प्रातरुत्थाय विधिवत्स्नात्वा नित्यं समाहितः।
यजेत कर्मभिस्तैस्तैर्विष्णुं देवादिसंज्ञितम् ॥ ५ ॥

प्रातरिति। विधिवत् यथाविधि उद्बोधमारभ्य स्नानपर्यन्तो विधिः श्रीपञ्चरात्रशास्त्रे विशदतममनुसन्धेयः। तैस्तैः कर्मभिः सन्ध्यावन्दनादिभिः। देवादिसंज्ञितं तत्कर्माराध्यदेवताशरीरकतया तत्तच्छब्दवाच्यं विष्णुं यजेत।तद्देवतावाचकशब्दवाच्यत्वे हेतुतया विष्णुमित्यनेन अन्तर्यामितया व्याप्तिरुक्ता ॥ ५ ॥

ततश्च देवदेवेशं भोगैरभ्यर्चयेद्धरिम्।
अशुद्धवर्जं सकलैः परिचारैः समन्वितम्॥ ६॥

ततश्चेति। ततश्चेत्यनेन सन्ध्यादीनां कर्म्मणां भगवत्कैङ्कर्ययोग्यतापादकत्वमभिप्रेतम्। अशुद्धवर्जम्। इन्द्राद्यशुद्धपरिवारं वर्जयित्वा सर्वैः परिवारैः सहितं नारायणं गन्धपुष्पनैवेद्यादिभिर्भोगैरभ्यर्चयेत्॥ ६॥

पूर्वमेव यथान्यायमभिगम्य जगद्गुरुम्।
उपादाय च यागार्थान् सम्भारान्नियतः स्वयम्॥ ७॥
यजेत पुरुषं साक्षाद्यथेच्छं प्रतिमादिषु।
पञ्चरात्रेण विधिना गुर्वधीनोऽपरेण वा॥ ८॥

पूर्वमिति। पूर्वं भगवदर्चनात्पूर्वमेव यथाशास्त्रमभिगम्य अभिगमनं कृत्वा योगः अर्थः प्रयोजनं येषां तान् योगसाधनानि उपादाय उपादानसङ्कल्पपूर्वकं सम्पाद्य नियतः सन् पुरुषं पुरुषसूक्तप्रसिद्धं नारायणं गुर्वधीनः आचार्यायत्तः तदनुज्ञापूर्वकं पञ्चरात्रेण विधिना श्रीपञ्चरात्रोक्तमार्गेण अपरेण वा स्मृतिपुराणाद्युक्तेन वा विधिना प्रतिमादिषु साक्षाद्देवतान्तरव्यवधानमन्तरेण स्वयं यजेत॥ ७॥ ८॥

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिस्तथा परैः।
यथार्हमर्च्यः सेव्यश्च नित्यं सर्वेश्वरो हरिः॥ ९॥

एवमभिगमनोपादानेज्यानां कर्त्तव्यतामुक्त्वा इज्यायां सर्वेऽप्यधिकारिण इत्याह ब्राह्मणैरिति इतरैरनुलोमप्रतिलोमजातैः यथार्हं यथोचितं चतुर्णां वर्णानां प्रतिमादिषु प्रतिलोमजातानां पादुकादिषु विभागेनेत्यर्थः इज्यः यष्टव्यः नित्यमित्यनेन भगवत्समाराधनस्य नित्यत्वमुच्यते तदाहुः-'नित्यंसदायावदायुर्न-

कदाचिदतिक्रमेत् ॥ इत्युक्त्यातिक्रमेद्दोषश्रुतेरप्यागचोदनात् ॥ फलश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्' सर्वेश्वर इति साभिप्रायं पदम्। भगवदीश्वरत्वस्य सर्वप्रतियोगिकत्वात् सर्वैरपि भगवानिज्य इति भावः यथार्हमितिपदेनाभिप्रेतमर्थं विशदयति ब्राह्मणैरिति चत्वारो वर्णाः प्रतिमादिषु जगद्गुरुं भगवन्तमर्चयेयुः चकारेण पादुकार्चनं समुच्चीयते अन्ये तु तद्व्यतिरिक्तास्तु तत्पादुकार्चनं तस्य जगद्गुरोः पादुकायामर्चनं कुर्युः ॥ ९ ॥

आधिकप्रीतिरर्चायामेकान्ती हरिमर्चयेत् ।
तदभावेऽग्निवत्सूर्यभूम्यम्बुगगनादिषु ॥ १० ॥

प्रतिमादि---त्यत्रादिशब्दाभिप्रेतं विशदयन् तस्य मुख्यत्वं चाह-अधिकेति एकान्तीअधिकप्रीतिः अतिशयितप्रेमा सन् अर्चायां प्रतिमायामेव हरिमर्चयेत् । तदभावे अर्चाभ वह्निमध्ये हृदयकमलमध्ये सूर्यमण्डले भूमौ अम्बुनि गगने च यथारुचि क्वचिदर्चयेत् । आदिशब्देन पादुकादिसंग्रहः ॥ १० ॥

भोजयेद्वैष्णवान्नित्यं पित्रर्थानतिथींस्तथा ।
वैष्णवानेव बिभृयात्पुत्रदारादिकान्निजान् ॥ ११ ॥

भोजयेदिति । नित्यं पित्रर्थान् अतिथींश्च वैष्णवानेव भोजयेत्। पितॄनुद्दिश्य तान्वैष्णवान्भोजयेत्। नाप्यवैष्णवानतिथीनित्ययमेवकारार्थः । निजान्स्वकीयान्पुत्रदारादीनपि वैष्णवानेव बिभृयात् । स्वकीयानामप्यवैष्णवत्वे भरणं न कर्त्तव्यमित्यर्थः ॥ ११ ॥

नातिसङ्गः परिचरेत्पुत्रादीनप्यवैष्णवान् ।
भिक्षेत वैष्णवेष्वेव ब्रह्मचारी यतिस्तथा ॥ १२ ॥

नोति । अवैष्णवान्पित्रादीनपि अतिसङ्गः न परिचरेत् किन्तु बिभृयादित्यभिप्रायः । ब्रह्मचारी तथा यतिरपि वैष्णवेष्वेव भिक्षेत परमैकान्तिष्वेव भिक्षाटनं कुर्यान्नावैष्णवेष्वित्यर्थः ॥ १२ ॥

असद्दार्ष्टिं परिहरेदच्युतस्य निवेदिते ।
दद्यादाचार्यमुख्येभ्यः स्वार्थं चात्र प्रकल्पयेत् ॥ १३ ॥

असदिति। अच्युतस्य निवेदिते अन्नादौ असद्दाष्टिम् अवैष्णवदृष्टिं परिहरेत् असद्भिर्दृष्टं भगवदर्पितमपि न भुञ्जीतेत्यर्थः। अच्युतस्य निवेदना इत्यपरः पाठः । तदा भगवन्निवेदनदशायामसतां दार्ष्टिं परिहरेदित्यर्थः। अथ संविभागमाह दद्यादिति। भगवन्निवेदितम् आचार्यप्रभृतिभ्यो दद्यात् समर्पयेत् अत्र आचार्यमुख्येभ्यो दत्तशिष्टे भगवन्निवेदिते स्वार्थञ्च किंचित्प्रकल्पयेत् ॥ १३॥

निवेद्य हृदि तद्भूयः परिषेकादिपूर्वकम् ।
जुहुयादाहुतीः पञ्च विष्णौ प्राणादिसंज्ञके ॥ १४ ॥

अथानुयागमाह-निवेद्येति। तद्भगवन्निवेदितं भूयः पुनरपि परिषिंचनादिपूर्वकं हृदि निवेद्य हृदयकमलवासिने भगवते निवेद्य प्राणादिसंज्ञके प्राणापानाद्यन्तर्यमितया तत्तच्छब्दवाच्ये विष्णौ पंचाहुतीर्जुहुयात् प्राणायस्वाहेत्यादिभिर्मन्त्रैर्जुहुयात् ॥१४॥

निवेदयेच्च भुञ्जानो मनसानागतं पुरः ।
मनो हि पूतमन्यत्र सूतोदक्याशवस्पृशः ॥ १५ ॥

भोजनमध्ये अपूर्वेषु पदार्थेष्वागतेषु तेषां भगवन्निवेदनप्रकारं निवेदनाधिकारसंपत्तिं चाह-निवेदयेदिति । भुञ्जानः अभ्यवहरन्नेव पुरा प्राङ्निवेदनदशायामनागतान्भोग्यान्मनसा भगवते निवेदयेत् । ननु भुञ्जानस्य मनोऽत्र कथं शुद्ध-

मित्यत आह । मनोहीति। सूतोदक्याशवस्पृशः अन्यत्र । मनः पूतं हि प्रमाणप्रसिद्धिं द्योतयति । सूतकिस्पृशः उदक्यास्पृशः शवस्पृशश्च मनः शुद्धं न भवति। तदन्येषां तु शुद्धमित्यर्थः। उदक्या रजस्वला ॥ १५ ॥

प्रशस्तं भगवद्भुक्तं पितृदेवादिकर्मसु ।
लब्धेन चान्यतस्तेन पुनर्यागोऽपि चोदितः ॥ १६ ॥

हव्ये कव्ये च भगवन्निवेदितं प्रशस्तमित्याह-प्रशस्तमिति । देवादीत्यादिशब्देन ऋषीणां संग्रहः । उक्तमर्थं कैमुत्यन्यायेन द्रढयति । यत्यादिभिर्भिक्षापन्नादिना अन्यतः अन्यस्माल्लब्धेन तेन भगवद्भुक्तेन पुनर्यागोऽपि चोदितः । पुनरिज्यापि विहिता। किं पुनः पितृदेवतादिकर्मणीति भावः ॥ १६ ॥

कृत्वानुयागं कुर्वीत स्वाध्यायं वैष्णवं परम् ।
ततो युञ्जीत चात्मानं पुरुषे पुष्करेक्षणे ॥ १७ ॥

कृत्वेति । अथ स्वाध्याययोगादिबाह्ययागं कृत्वा परं प्रधानं यागानन्तर्भाविनं वैष्णवं भगवन्मन्त्रविषयकं स्वाध्यायजपरूपं कुर्वीत । शाण्डिल्यादिभिः व्यापकमन्त्रानुसन्धानस्य स्वाध्यायतोक्तेः । ततः स्वाध्यायानन्तरं पुष्करेक्षणे पुण्डरीकाक्षे पुरुषे आत्मानं मनो युञ्जीत यद्वा आत्मानं जीवं स्वपुरुषे युञ्जीत ईदृशः । परमात्मायं प्रत्यगात्मायमीदृशइत्यादिशाण्डिल्योक्तप्रक्रियया स्वपरसम्बन्धानुसंधानमविच्छेदेन कर्म कुर्वीतेत्यर्थः ॥ १७ ॥

ये च भागवता मन्त्रा ये च दिव्याश्च विग्रहाः ।
यथोपदेशं नियतस्तांश्च सेवेत नित्यशः ॥ १८ ॥

येचेति । ये भगवन्मंत्राः ये वा भगवद्विग्रहाः आचार्यकृपालब्धाः तान्मन्त्रान्विग्रहांश्च नियतः सन्स्वाध्याये योगे च

15695

सेवेत उपदिष्टान्भगवन्मन्त्रान्स्वाध्याये अधीयीत। आचार्येभ्यो लब्धान् भगवद्विग्रहान्योगे ध्यायीतेत्यर्थः ॥१८॥ (?)

कृत्वाभिगमनं पूर्वमुपादाय च सम्पदः।
इष्ट्वाधीत्य च युञ्जानो भोगैः कालं नयेद्यतिः ॥ १९ ॥

पञ्चकालकर्त्तव्यानि सङ्गृह्याह—कृत्वेति। पूर्वम् आदौ अभिगमनं कृत्वा अनन्तरं सम्पदः यागसम्भारान् उपादाय इज्यार्थमुपादानं कृत्वा इष्ट्वा इज्यां कृत्वा अधीत्य स्वाध्यायमधीत्य युञ्जानो योगं कुर्वाणो भोगैः कालं नयेदिति अनेन प्रकारेण कालं पञ्चधा विभज्य अभिगमनादिभिर्नयेदित्यर्थः ॥ १९ ॥

तमेव मत्वा भोक्तारमिज्यं यष्टारमेव च।
यजेत सकलैर्यज्ञैः सर्वयज्ञमयं हरिम् ॥ २० ॥

एवं भगवदाराधनतया फलसङ्गकर्तृत्वपरित्यागपूर्वकं पंचमहायज्ञानन्यानपि ज्योतिष्टोमादिकान्यथाशक्ति कुर्यादित्याह—तमिति। भोक्तारं यागजनितप्रीत्याधारम् इज्यं यागविषयम्। यष्टारं यज्ञकर्तारमपि तमेव भगवंतमेव मत्वा सकलैर्यज्ञैः सर्वयज्ञमयं हरिं यजेत सर्वयज्ञमयं भोक्तारमिज्यं यष्टारमिति पदैर्व्याप्तं यष्टारं तमेव मत्वेत्यनेन कर्तृत्वपरित्यागोऽभिहितः भोक्तारमिति यागजनितप्रीतिभोक्तृत्वकथनेन कर्मणां स्वयं प्रजोजनरूपत्वेन फलपरित्यागोऽभिप्रेतः फलितस्य भगवन्निष्ठत्वकथनात् सङ्गपरित्यागः फलितः ॥ २० ॥

विष्णोः सेवेत तीर्थानि तथैवायतनानि च।
दद्यादर्थांश्च विप्रेभ्यश्चरेच्च विविधं तपः ॥ २१ ॥

विष्णोरिति—विष्णोस्तीर्थानि सेवेत नत्ववैष्णवतीर्थानि 'अस्वाध्यायमतीर्थग'मित्यभिप्रेतं तीर्थगमनं वैष्णवतीर्थविषय-

नियमामीति मन्तव्यम् । आयतनानि दिव्याभिव्यक्तिस्थलानि श्रीरङ्गादीनि विप्रेभ्यः अत्र विप्रशब्दः परमैकान्तिपरः।'वासुदेवं विजानन्विप्रो विप्रत्वं गच्छति तत्त्वदर्शी' इतिश्रुतेः। 'अवैद्येन न केनापि वैद्यः किञ्चित्समाचरेत्'इति सामान्यतः। 'अवैष्णवेभ्यो यत्किञ्चित्प्रतिगृह्य प्रदापय' इत्यादिना विशेषतश्चावैष्णवेभ्यो दानस्य निषिद्धत्वात् । तपः उपवासप्रधानं कृच्छ्रचान्द्रायणादि ॥ २१ ॥

प्रायश्चित्तं तु परमं प्रपत्तिस्तस्य केवलम् ।
कुर्यात्कर्मात्मकं वापि वासुदेवमनुस्मरन् ॥ २२ ॥
विशुद्ध्येद्विष्णुभक्तस्य दृष्ट्या स्पर्शेन सेवया ।
स्मरणेनान्नपानाद्यैर्गिरा पादरजोऽम्बुभिः ॥ २३ ॥

अभागवतदृष्ट्यादिप्रायश्चित्तमाह श्लोकद्वयेन-प्रायश्चित्तेत्यादिना । तस्य भगवन्न्यस्तभरप्रपत्तेः केवलं प्रपत्तिरेव परमं प्रायश्चित्तम्। 'अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं सात्र यत्पुनः शरणं श्रयेत्' इत्यादिकमन्त्राण्यनुसन्धेयानि।शक्तौ सत्यां प्रतिपदोक्तं प्रायश्चितं कर्त्तव्यमित्याह।कुर्यादिति।वासुदेवमनुस्मरन् तत्कर्माराध्यं सर्वान्तर्यामिणं सर्वेश्वरं मन्वानः कर्मात्मकं क्रियारूपं वापि प्रायश्चित्तं कुर्यात् । अत्र लघुनिमित्ते यथाश्रुतमेव प्रायश्चित्तम् । गुरुनिमित्ते तु तदर्थविहितं वैष्णवेष्ट्याद्किमनुष्ठाय तदनन्तरमत्रोक्तमाचरेत् । अवैष्णवदृष्टेर्वैष्णवदृष्टिः प्रायश्चितम् । अवैष्णवस्पर्शस्य वैष्णवस्पर्शः । अवैष्णवसेवायाः वैष्णवसेवा । अवैष्णवस्मरणस्य वैष्णवस्मरणम् । अवैष्णवान्नपानादेः हारीतोक्ततदर्थेष्ट्यनुष्ठानानन्तरं वैष्णवान्नपानादिकम् । गिरा अवैष्णवसम्भाषणस्य वैष्णवसम्भाषणम् । अवैष्णवपादरजसः वैष्णवपादरजः । अवैष्णवाम्बुनि वैष्णवाम्बु ॥ २२ ॥ २३ ॥

विष्णोर्निवेदितान्नाद्यैस्तथा तत्कीर्तनादिभिः।
अभागवतदृष्ट्यादेः शुद्धिरेषा विशेषतः॥ २४॥

विष्णोरिति। अनिवेदितान्नादेर्निवेदितान्नादिकाले अवैष्णवकीर्तनादेः वैष्णवकीर्तनादि। अभागवतदृष्ट्यादेरेषा विशेषतः शुद्धिः। तदर्थविहितकर्मानुष्ठानानन्तरं विशेषतः शुद्ध्यापादकं विधीयते यद्वा, अशक्तस्य परमास्तिकस्य दृढाध्यवसायसम्पन्नस्य अभागवतदृष्ट्यादेर्भागवतदृष्ट्यादिकमात्रमेव प्रायश्चित्तं न्मतव्यम्॥ २४॥

कृता यज्ञाः समस्ताश्च दानानि च तपांसि च।
प्रायश्चित्तमशेषेण नित्यमर्चयतां हरिम्॥ २५॥

अविच्छेदेन भगवन्निरतस्य तदर्चने कालं नयतः प्रायश्चित्तराहित्येऽपि न वृत्तिवैकल्पमित्यभिप्रायेणाह—कृता- इति। यथाशक्ति यत्किञ्चिदनुष्ठानेनापि यज्ञदानतपःप्रभृतिकं सर्वम्पूर्णम्भवति प्रायश्चित्तमपि प्रतिपदोक्ताशक्तौ यत्किञ्चिदनुष्ठानमात्रेणैव मुख्यकल्पानुष्ठानसदृशं भवतीत्यर्थः। न पुनरत्र नित्यस्य यज्ञादेः सति निमित्ते प्रायश्चित्तस्य चाकरणमभिप्रेतम्। शक्यनित्यकर्मपरित्यागे प्रायश्चित्तानन्वये भगवदिज्यायामप्यनधिकारित्वोक्तेः। यद्वा, अनेन श्लोकेन यज्ञदानादिसकलधर्मापेक्षया नित्यभगवदाराधनस्य परमैकान्तिनः प्रधान धर्मतया तत्प्रशंसा क्रियत इति॥ २५॥

एवं नित्यानि कर्माणि तथा नैमित्तिकानि च।
भर्तुः प्रियकराणीति कुर्यात्प्रीत्यैव केवलम्॥ २६॥

उक्तं विहिताचारं निगमयति—एवमिति। स एवमुक्तानि नित्यानि कर्माणि नैमित्तिकानि च आत्मभर्तुः सर्वेश्वरस्य

प्रीतिकराण्येव कुर्यात् प्रीत्यैव केवलं न तु विहितानीति निर्बन्धबुद्धया ॥ २६ ॥

अथैवं ब्राह्मणो विद्वानेकान्ती धर्ममाचरन् ।
सरहस्यमिदं सम्यक्साधुभ्यश्चोपपादयेत् ॥ २७ ॥

अथेति । ब्राह्मणो विद्वान् अधीतवेदः कृततद्विचारः परमैकान्तीविप्रः एवमुक्तक्रमेण धर्मं विहिताचारमाचरन् सरहस्यं गोप्यार्थसहितम् । इदं विहिताचाररूपं सर्वं सम्यक् साधुभ्यः उपदेशपात्रेभ्यश्चोपपादयेत् उपदिशेत् ॥ २७ ॥

प्रजापालनरूपं च धर्मं भागवतं चरन् ।
प्राप्यापि महदैश्वर्यं मृतः स्यादेव निर्भरः ॥ २८ ॥

एवं क्षत्रियोऽपि स्ववर्णविहिताचारं कुर्यादित्याह-प्रजेति । भगवदाराधनतया प्रजापालनादिरूपं स्वधर्मं चरन् । अत्यधिकमैश्वर्यं लब्ध्वापि राजा निर्भर एव स्यात् । महता तेनैश्वर्येण न बध्यत इत्यर्थः । इदमैश्वर्यं स्वस्य न बन्धकमितिमत्वा निर्भर एवस्यादित्यर्थः ॥ २८ ॥

तथा वैश्यः स्वधर्मस्थो वैष्णवानभितर्पयन् ।
धनेष्वसक्त एकान्ती परं प्राप्नोति तत्पदम् ॥ २९ ॥

अथ वैश्योऽपि स्वविहिताचारं कुर्यादित्याह-तथेति । धनेष्वसक्तः जातिनिबन्धनलोभमकुर्वाणः । यद्वा, पशुपालनादिना विहितेन धनं सम्पादयन्नपि न तत्र सक्तः स्यादिति ॥ २९ ॥

शुश्रूषमाणः शूद्रोऽपि वैष्णवानग्रजन्मनः ।
स्वधर्मरत एकान्ती मुच्यते सर्वकिल्बिषैः ॥ ३० ॥

शुश्रूषमाणेति । शूद्रोऽपि अग्रजन्मनो वैष्णवान् शुश्रूषमाणः शूद्रस्योक्तं त्रैवर्णिकशुश्रूषां वैष्णवत्रैवर्णिकविषये नियमया ति ॥ ३० ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः।
एकान्तिनः स्वधर्मस्थाः सर्वे यान्ति परां गतिम्॥३१॥

एवं चतुर्णां वर्णानां स्ववर्णविहिताचारः अनुल्लंघनीयः, इत्युक्त्वा चतुर्णामप्याश्रमिणां स्वाश्रमविहिताचारोऽवश्यमनुष्ठेय-इत्याह–ब्रह्मचारीति। ब्रह्मचारी गृहस्थो, वानप्रस्थो यतिश्चेति परमैकान्तिनः सर्वे स्वधर्मस्थाः स्वाश्रमनियतधर्मनिरताः परां गतिं यान्ति भगवन्निग्रहस्याविषयभूता भवन्तीत्यर्थः॥ ३१॥

नित्योप्तकेशा निभृतास्त्यक्तसर्वपरिग्रहाः।
स्त्रीशूद्राद्याः स्वधर्मेण वर्तेरञ्जगतीपतौ॥ ३२॥

अथ कासाञ्चित् स्त्रीणां केषाञ्चिच्छूद्राणां च ग्राम्यभोगपरित्यागेनावस्थितिमनुजानाति–नित्येति। उप्ताः वपनं प्रापिता केशा येषां ते तथोक्ताः। निभृताः निश्चलाः। त्यक्तसर्वपरिग्रहाः धनदारादिसकलपरिग्रहरहिताः। स्त्रीशूद्राद्याः। आदिशब्देन तत्सन्निकृष्टा गृह्यन्ते। जगद्गुरौ भगवद्विषये स्वधर्मेण वर्तेरन् स्वधर्मेण भगवन्तमाराधयेयुरित्यर्थः। 'जपस्तपस्तीर्थसेवा प्रव्रज्यामन्त्रसाधनम्। देवताराधनश्चेति स्त्रीशूद्रपतनानि षट्' इति शास्त्रं परमैकान्तिव्यतिरिक्तविषयम्। अत्र यथार्हं तत्रितयस्यापि तेष्वनुज्ञानात्॥ ३२॥

वर्णाश्रमपराश्चैव परेऽपि हरिमाश्रिताः।
अपायैर्नावसीदन्ति स्वेषु धर्मेष्ववस्थिताः॥ ३३॥

वर्णेति। चत्वारो वर्णाश्चत्वार आश्रमाः अपरेऽपि अनुलोमप्रतिलोमजाता विदुराद्यः हरिमाश्रिताः स्वविहितधर्मनिरताः अपायैरपायाधिकारोक्तैः नावसीदन्ति अवसादं न प्राप्नुवन्ति॥ ॥ ३३॥ इति विहिताचाराधिकारः।

समाश्रितो दास्यरतिः पतिं विश्वस्य माधवम् ।
यथार्हमाचरन्धर्मान्भूयो दृष्ट्यादि संश्रयेत् ॥ ३४॥

प्रतिषिद्धवर्जनस्य विरुद्धेषु प्रपञ्चयिष्यमाणत्वात् विहिताचारानन्तरं षड्विधवृत्त्युद्देशक्रमप्राप्तं प्रतिषिद्धविवर्जनं विहाय दृष्टिमधिकरोति—समाश्रितेति । विश्वस्य पतिं माधवं श्रियः पतिं दास्यरतिः कैङ्कर्यरूपफलार्थी सन् समाश्रितो यथार्हं स्ववर्णाश्रमोचितधर्मानाचरन् विहिताचारान् कुर्वन् भूयः दृष्ट्यादि संश्रयेत । आदिशब्देन लक्ष्मभक्तिसत्सेवानां संग्रहः ॥ ३४ ॥

प्रतिष्ठां सर्वधर्माणां प्रसादैकात्मनां हरेः।
तदाज्ञारूपमनघं शास्त्रश्रुत्यादि मानयेत् ॥ ३५ ॥

प्रतिष्ठामिति । हरेः प्रसादैकात्मनां भगवत्प्रसादैकफलानां सर्वधर्माणां प्रतिष्ठां प्रतिष्ठाहेतुत्वात् प्रतिष्ठेत्युच्यते, सकलधर्मप्रतिपादकमित्यर्थः । तदाज्ञारूपं भगवदाज्ञारूपम् अनघं नित्यापौरुषेयतया वक्तृव्यदोषभ्रमाद्यमूलकं श्रुत्यादि । आदिशब्देन स्मृतीतिहासपुराणानि संगृह्यन्ते । श्रुत्याद्यात्मकं शास्त्रं मानयेत् बहुमन्येत । तत्वहितपुरुषार्थप्रमापकमिदमेवेति सादरमनुसन्दधीतेत्यर्थः ॥ ३५ ॥

साङ्गान्वेदानधीयीत न्यायैश्चार्थं विचारयेत् ।
विद्यात्कर्मादिकं यत्र विष्णोराराधनात्मकम् ॥ ३६ ॥

साङ्गानिति । साङ्गान् शिक्षाकल्पाद्यङ्गसहितान्वेदान् अधीयीत अध्ययनेन स्वाध्यायसंस्कारं कुर्यात् । न्यायैर्जैमिनिसूत्रोक्तैर्न्यायैः अर्थं वेदार्थं च विचारयेत् । विष्णोराराधनात्मकम् आराधनरूपमखिलं सर्वमपि कर्मजातं यत्र वेदे शब्देषु विद्यात् जानीयात् तान्वेदानधीयीत । तत्तदर्थं च विचारयेदित्यन्वयः ॥ ३६ ॥

व्यवस्थां पदवर्णादेश्छन्दः कालक्रियाविधिम् ।
ज्ञात्वाङ्गैर्गमयेदर्थान् न्यायैः सर्वत्र साधुभिः ॥ ३७ ॥

व्यवस्थामिति । पदवर्णादेर्व्यवस्थाम् । आदिशब्देन मानादिकं गृह्यते । पदव्यवस्थां वर्णव्यवस्थां प्रमाणादिव्यवस्थाम् । छन्दः गायत्र्यादि । कालं कालस्वरूपम् । क्रियाविधिं यज्ञविधिम् । अङ्गैर्ज्ञात्वा, अङ्गशब्दो न्यायविस्तरस्याप्युपलक्षणार्थः। पदव्यवस्थां व्याकरणेन ' वर्णव्यवस्थां शिक्षया, प्रमाणादिव्यवस्थां न्यायविस्तरेण, छन्दः छन्दश्चित्या ' कालं ज्योतिषेण, क्रियाविधिं कल्पसूत्रेण च ज्ञात्वेत्यर्थः । साधुभिः समीचीनैर्न्यायैः सर्वत्र अर्थान् निगमयेत् । मीमांसया वेदार्थविचारं कुर्यादित्यर्थः ॥ ३७ ॥

शिष्टैर्वर्णाश्रमादीनामच्युताराधनात्मकान् ।
स्मृतांश्च विविधान्धर्मान्विद्याद्वैदिकसंमतान् ॥ ३८ ॥

शिष्टैरिति। वर्णाश्रमादीनामित्यत्रादिशब्देन अवस्था गृह्यते अच्युताराधनात्मकान भगवदाराधनात्मरूपान् शिष्टैर्मन्वादिभिः स्मृतान् स्मृतिविषयीकृतान् विविधान्बहुविधान् वैदिकसंमतान् वेदप्रामाण्याभ्युपगन्तृसंमतान् वर्णाश्रमादीनां धर्मान् वर्णाश्रमादिनियतधर्मान् विद्यात् जानीयात्। अच्युताराधनात्मकं विविधवर्णाश्रमनियतधर्मप्रतिपादकवैदिकसंमतं मन्वादिविरचितस्मृतिपरिशीलनं कुर्यादित्यर्थः । मन्वादिधर्मशास्त्रैः कर्मभागमुपबृंहयेदित्यर्थः ॥ ३८ ॥

अथौपनिषदं चार्थं शृणुयान्न्यायतः सुधीः ।
येनाराध्यं परं ब्रह्म जानीयात्पुरुषोत्तमम् ॥ ३९ ॥

अथेति—अथशब्दः आनन्तर्यपरः। आनन्तर्यं चात्र कर्मविचारानन्तरम्। साङ्गान्वेदानधीयीतेत्यारभ्यैतत्पर्यन्तं कर्मविचारस्य प्रतिपाद्यतया प्रकृतत्वात्। 'अथातो ब्रह्मजिज्ञासा' इत्यत्र 'अथ' शब्दः अत्रत्याथशब्देन प्रत्यभिज्ञापितः। तेन 'सौत्राथ शब्दस्य साधनचतुष्टयानन्तर्यपरत्ववादिनां कुदृष्टीनामनवकाशो मन्तव्यः। न्यायतः शृणुयादित्यनेन जिज्ञासाशब्दार्थोऽप्युक्तः। येनाराध्यं परं ब्रह्मेत्यनेन सूत्रस्थब्रह्मशब्दः प्रत्यभिज्ञापितः। पुरुषोत्तममित्यनेन ब्रह्मशब्दार्थोक्तिः। अत एव ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषानवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयत इति भगवद्भाष्यकारोक्तिः। अक्षरार्थस्तु अथ कर्मविचारानन्तरम् औपनिषदम् उपनिषत्प्रतिपादितम् अर्थं न्यायैः शृणुयात्। 'तद्विजिज्ञासार्थं सद्गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इत्यादिप्रक्रियया आचार्योपसत्तिपूर्वकं गुरुमुखेन वेदान्तमीमांसां शृणुयादित्यर्थः। शृणुयादिति न श्रवणस्य विधिः। तस्य रागतः प्राप्तत्वात्। साङ्गसशिरस्कस्वाध्यायाध्ययनेनापाततः पदपदार्थावगमेन श्रवणे रागत एव प्रवृत्तिः। अपि तु श्रवणमनूद्य गुरूपसत्तिर्विधीयत इति बोद्धव्यम्। येन औपनिषदार्थश्रवणेन अखिलाराध्यं पूर्वभागप्रतिपादितसकलधर्माराध्यं पुरुषोत्तमशब्दवाच्यं परं ब्रह्म जानीयात्। आराध्यमित्यनेन पूर्वोत्तरभागयोराराधनतदाराध्यज्ञापनार्थं प्रवृत्ततया 'सर्वे वेदा यत्रैकं भवन्ति' इत्यादिश्रुतिप्रतिपादितपरमार्थपरत्वम् एकार्थपरतयापि एकशास्त्रतद्विचारयोरप्येकव्याख्येयैकव्याख्यानात्मकतया ऐकशास्त्र्यं चाभिप्रेतम् ॥ ३९ ॥

पञ्चरात्रं महद्दिव्यं शास्त्रं श्रुतिविभावनम् ।
विशेषेणाधिगन्तव्यं गीतं भगवता स्वयम् ॥ ४० ॥

पञ्चरात्रेतिहासपुराणैर्वेदांतार्थमुपबृंहयेदित्याह–पञ्चरात्रमिति । भगवता स्वयं गीतं स्वेनैवोक्तम् अष्टोत्तरशतसंहितारूपेण प्रवृत्तत्वान्महत् । वेदगुह्यार्थकत्वात् श्रुतयो विशेषेण भाव्यंते बोध्यंते अनेनेति श्रुतिविभावनम् ।श्रुत्युपबृंहणं पञ्चरात्राख्यं शास्त्रं विशेषेणाधिगंतव्यम् । वेदांतोपबृंहणेतत्वहितपुरुषार्थांशेषु विशदतरप्रतिपादकतयात्यंतांतरङ्गत्वेन विशेषेणाधिगंतव्यामिति भावः ॥ ४० ॥

वेदवेद्यः स भगवान् कृपया परयाच्युतः ॥
चतुर्विधमिदं प्राह सर्वेषां हितकारणात् ॥ ४१ ॥

वेदवेद्येति । कृपया परयेत्यनेन विनिग्रहमूलपाशुपतादितंत्रेभ्यो व्यावृत्तिरस्य प्रदर्श्यते । चतुर्विधम् आगमसिद्धांतमंत्रसिद्धांततंत्रसिद्धांततंत्रांतरसिद्धांतभेदेन चतुर्द्धा विभक्तम् ४१॥

परस्य ब्रह्मणस्तस्य विद्याद्व्यूहादिसंस्थितीः ॥
ज्ञानं क्रियाः समस्ताश्च योगं चात्र फलानि च॥४२॥

परस्येति । परस्य ब्रह्मणः तस्य अच्युतस्य व्यूहादिक्रमं ज्ञानं ज्ञानस्वरूपं समस्ताः क्रियाः कर्षणादिप्रतिष्ठांताः प्रतिष्ठाद्युत्सवान्ताः, उत्सवादिप्रायश्चित्तान्ताः, सर्वाः क्रियाः योगं योगस्वरूपं ज्ञानक्रियायोगस्वरूपग्रहणं चर्याया उपलक्षणार्थम् अत्र ज्ञानयोगक्रियाचर्यासु फलानि च विद्यात् ज्ञानयोगक्रियाचर्याफलानि च । अत्र पञ्चरात्रशास्त्रे विद्यादितिवान्वयः । प्रायेण संहितादिषु हि ज्ञानयोगक्रियाचर्यास्तदाख्यया समाख्यातैश्चतुर्भिः पादैः प्रतिपादिताः ।अतः तत् ज्ञानं सम्पादयेदित्यर्थः ॥ ४२ ॥

पुराणान्यवगाहेत सेतिहासानि यत्र च ॥
केशवस्य जगत्सर्गस्थितिभङ्गादि कीर्त्त्यते ॥ ४३ ॥

पुराणानीति । यत्र पुराणेषु भगवतः जगत्सृष्टिस्थितिप्रलयादिकं कीर्त्यते, तानि सेतिहासानि इतिहाससहितानि पुराणान्यवगाहेत परिशीलयेत् । जगत्सर्गस्थितिभङ्गादीत्यादिशब्देन दिव्यावतारचेष्टितानि गृह्यन्ते ॥ ४३ ॥

स्तोत्राणि कल्पनामानि कथाश्च विविधा हरेः ।
सद्भिः प्रणिहितांश्चान्यान् प्रबन्धान्परिशीलयेत्॥४४॥

स्तोत्राणीति । कल्पाः मन्त्रप्रतिपादकभागाः व्रतप्रतिपादकभागा वा । नामानि श्रीसहस्रनामादीनि । सद्भिः भगवज्ज्ञानेन लब्धसत्ताकैः महात्मभिः प्रणिहितान्निर्मितान् अन्यांश्च प्रबन्धान् परिशीलयेत् ॥ ४४ ॥

मूलस्कन्धमया वेदाः पञ्चरात्रं च यत्परम् ।
अन्यच्च तत्परं ग्राह्यं शास्त्रं नान्यादृशं पुनः ॥ ४५ ॥

मूलेति । मूलस्कन्धमयाः वेदाः मूलवेदाः वेदब्राह्मणा यदात्मकाः स्कन्धमया वेदा अनुवाकोपनिषदात्मकाश्च पञ्चरात्रश्च यत्परं यदर्थप्रतिपादकम् अन्यत्सर्वं च ग्राह्यमन्यादृशं मूलस्कन्धमयवेदपञ्चरात्रविरुद्धं चेत् न सङ्ग्राह्यम् ॥ ४५ ॥ इति दृष्ट्यधिकारः ॥

प्रभुं भक्तपराधीनं नित्यमालोकयेद्धरिम् ।
विमानमथ वा तस्य दूराद्गोपुरमेव वा ॥ ४६ ॥

अथ भक्तिमधिकरोति–प्रभुमिति । प्रभुं सर्वेश्वरं तथापि भक्तपराधीनं हरिं नित्यमालोकयेत् । भगवदालोकनादीनां भक्तिमूलकतया तज्जनकतया वा भक्तित्वोक्तिः । अथ तस्य हरेर्विमानं गोपुरमेव वा नित्यमालोकयेदिति वान्वयः ॥ ४६ ॥

स्वरूपरूपविभवगुणकर्माणि शार्ङ्गिणः ।
व्याचक्षीत निबध्नीयाच्छृणुयाद्विलिखेत्पठेत् ॥ ४७ ॥

स्वरूपमिति । स्वरूपं विद्यात्मस्वरूपं, रूपाणि विग्रहाः, विभवशब्दो विभूतिपरः, गुणाः ज्ञानादयः, कर्माणि गजेन्द्र-रक्षणपार्थसारथ्यादीनि दिव्यचेष्टितानि व्याचक्षीत व्याकुर्वीत; निबध्नीयात् तद्विषयाणि निबन्धनानि कुर्यात्; शृणुयात् शृणुयान्महन्मुखरितान्; विलिखेत् विशेषेण लिखेत पठेत् वाचयेत् ॥ ४७ ॥

चतुर्भुजमुदारांगं श्यामं पद्मनिभेक्षणम् ।
श्रीभूमिलीलासहितं चिन्तयेच्च सदा हृदि ॥ ४८ ॥

चतुर्भुजमिति । उदाराङ्गम् उन्नताङ्गम् ॥ ४८ ॥

उपेत्यायतनं विष्णोः प्रणिपत्य ततस्ततः ।
परीत्य देवदेवेशं प्रणम्यात्मानमर्पयेत् ॥ ४९ ॥

उपेत्येति । परीत्य प्रदक्षिणीकृत्य आत्मानमर्पयेत् । आत्मसमर्पणं कुर्यात् ॥ ४९ ॥

प्रीतिसंहृष्टसर्वाङ्गः स्तुत्वा वापि विलोकयेत् ।
कृतप्रसादः सेवेत नियतात्मा यथोचितम् ॥ ५० ॥

प्रीतीति । प्रीत्या भगवत्सेवया हृष्टानि रोमाञ्चकंचुकितानि सर्वाङ्गानि यस्य स तथोक्तः स्तुत्वा स्तोत्रं कृत्वा अपि च पुनश्च विलोकयेत् पश्येत् कृतः भगवत्कृतः प्रसादो यत्र स तथोक्तः । उत्पादितभगवत्प्रसाद इत्यर्थः कृतप्रसादः प्रसन्नात्मेति वार्थः नियतात्मा नियमितविषयान्तरसञ्चारिहृदयः यथोचितं सेवेत स्ववर्णाश्रमावस्थोचितं सेवेत ॥ ५० ॥

यात्रादिषु च सेवेत तद्दाष्टिस्तद्गुणान्वदन् ।
तत्कर्माणि च युक्तस्तज्जनसम्बन्धहर्षितः ॥ ५१ ॥

यात्रादिष्विति । तद्दृष्टिर्भगवन्यस्तदृष्टिः तद्गुणान् वदन् भगवद्गुणप्रतिपादकप्रबन्धान् पठन् तत्कर्म्मणि रथाकर्षणपीठोद्वहनादिभगवत्कर्म्माणि सक्तः तज्जनसम्बन्धहर्षितः भगवद्यात्रावलोकनार्थागतजनसंघर्षेण हृष्टरोमा सेवेत ॥ ५१ ॥

गायेदास्फोटयेन्नृत्येदुत्पतेन्निपतेत्स्खलेत् ।
क्रोशेद्विषीदेद्धृष्येच्च विष्णोः प्रेमवशानुगः ॥ ५२ ॥

गायेदिति । आस्फोटनं भुजास्फोटनं करतालप्रवर्त्तनं वा प्रेमवशानुगः प्रेमपरतन्त्रः ॥ ५२ ॥

कुर्वाणश्च सदावृत्तिं विष्णोरायतने वसेत् ।
दद्याच्च विविधान् भोगाननुरूपान्मनोरमान् ॥ ५३ ॥

कुर्वाणेति । विष्णोरायतने भगवन्मन्दिरे वृत्तिं संमार्जनानुलेपनादि कुर्वाणः सदा वर्त्तेत विविधान् चन्दनागुरुकस्तूरीप्रभृतिकान् अनुरूपान् देशकालानुरूपान् शास्त्रानुरूपान्वा मनोरमान् भोगान् भोगहेतून् भगवते दद्यात् ॥ ५३ ॥

परीवारांश्च सेवेत भक्त्या परमया हरेः ।
तत्तदर्चागतान् भक्तान् गुर्वादींश्च विशेषतः ॥ ५४ ॥

परीवारानिति । हरेः परीवारान् देवीभूषणायुधपरिजनसंवाहनानि; परिच्छदान् गरुडसेनाधिपचण्डादिद्वारपालकुमुदादिगणाधिपरूपान्; तत्तदर्चावतारस्थलेषु प्रतिष्ठापितान् परमभक्तान् विशेषतो गुर्वादींश्च सेवेत ॥ ५४ ॥

हरेराश्रितवात्सल्यात्तत्तत्स्थानाभिनन्दिनः ।
असाधारणभावेन तत्र तत्रैव वा वसेत् ॥ ५५ ॥

हरेरिति । आश्रितवात्सल्यात् तत्तत्स्थानाभिनन्दिनः श्रीरङ्गकरिगिरियदुगिरिप्रभृतिदिव्याभिव्यक्तिदेशेषु हर्षेण

वसतो हरेः असाधारणभावेन तदसाधारणत्वेन तत्र श्रीरङ्गादिषु स्थलेष्वेव वा वसेत् ॥ ५५ ॥

ये च भुक्तोज्झिता भोगाः श्रीपतेः शिरसा नतः ।
अभ्येत्य प्रतिपद्येत भक्त्या परमया स्वयम् ॥ ५६ ॥

ये चेति । श्रीपतेर्ये भुक्तोज्झिताः अनुभूय परित्यक्ता भोगा माल्यादिकाः तान् अभ्येत्य आभिमुख्येनागत्य नतः प्रणतः शिरसा प्रतिपद्येत स्वीकुर्यात् ॥ ५६ ॥

पादोदकं भगवतो लब्ध्वा भागवतस्य वा ।
तिष्ठन्नेवाथवासीनः पिबेच्छुद्धिश्च नापरा ॥ ५७ ॥

पादोदकमिति । भगवतो भागवतस्य वा पादोदकं लब्ध्वा तिष्ठन्नेवाथवा आसीनो वा पिबेत् यथास्थितो लभेत तथा स्थित एव पिबेदित्यर्थः । अपरा अन्या शुद्धिर्न आचमनहस्तक्षालनादिरूपा शुद्धिर्नास्तीत्यर्थः । अथ केषुचित्कोशेष्वितदनन्तरम् 'अपीत्वा विष्णुपादस्य सलिलं मूर्ध्नि निक्षिपेत् । पातयन्वा क्षितौ मोहात् पतत्येव न संशयः' इति श्लोको दृश्यते बहुकोशसंवादे सति सोऽपि ग्राह्यः । स्पष्टार्थः ॥ ५७ ॥

पुरराष्ट्राभिवृद्ध्यर्थमर्चितस्य जगत्पतेः ।
शेषभाजोऽर्थिनः सर्वे सन्त एव सतां गृहे ॥ ५८ ॥

पुरेति । पुरवृद्ध्यर्थं राष्ट्राभिवृद्ध्यर्थं पुरराष्ट्रादावर्चितस्य च जगद्गुरोर्नारायणस्य शेषभाजः । प्रसादार्हा अर्थिनः सर्वेऽपि तत्प्रसादापेक्षिणः सर्वेऽपि सतां गृहे अर्चितस्य जगद्गुरोः शेषभाजस्तु सन्त एव परमैकान्तिन एव अन्ये तु प्रसादार्हा न भवन्तीत्यर्थः ॥ ५८ ॥ इति भक्त्यधिकारः ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः ।
चक्राद्यैरङ्कयेद्गात्रमात्मीयस्याखिलस्य च ॥ ५९ ॥

अथ लक्ष्माधिकारमाह-ब्राह्मण इति। इतरःअनुलोमप्रतिलोमजातः चक्राद्यैः पञ्चभिरायुधैर्गात्रं स्वशरीरम् आत्मीयस्य स्वकीयस्य च गात्रमङ्कयेत् चिह्नितं कुर्यात् ॥ ५९ ॥

अनिष्टानां निवृत्त्यर्थमैकान्त्याय जगत्पतेः ।
सिद्ध्यर्थं कर्मणां चैव धार्यं चक्रादिलाञ्छनम् ॥६०॥

अनिष्टानामिति । अनिष्टानाम् अमङ्गलादीनां निवृत्त्यर्थं भगवति परमैकान्त्यज्ञापनाय भगवत्कर्मणां सिद्ध्यर्थं च अधिकारलाभार्थं चक्रादिलाञ्छनं धार्यम् ॥ ६० ॥

बाह्वोर्ललाटे शिरसि हृदये चाग्रजन्मनाम् ।
शङ्खचक्रगदाशार्ङ्गखड्गैर्मन्त्रेण दाहयेत् ॥ ६१ ॥

बाह्वोरिति । बाह्वोः शंखचक्राभ्यां तत्रापि दक्षिणे चक्रेण सव्ये शंखेन ललाटे गदया शिरसि शार्ङ्गेण हृदये खड्गेन च तत्तन्मन्त्रेण दाहयेदित्यर्थः ॥ ६१ ॥

विष्णोरायतनाग्नौ वा गुरोरात्मन एव वा ।
हुते हेमादिभिस्तप्तैः सुरूपैरर्चितैः क्रमात् ॥ ६२ ॥

विष्णोरिति । विष्णोरायतनाग्नौ वा गुरुपाकार्थमुत्पादिते भगवत्पाकशालास्थिते अग्नौ वा इज्याङ्गभूतहोमार्थकल्पिताग्नौ वा इति आयतनाग्निशब्दार्थः । हुते गुरोराचार्यस्य अग्नावौपासनाग्नौ आत्मनः शिष्यस्यौपासनाग्नौ वा तप्तैः सुरूपैः शोभनाकारैः अर्चितैर्गन्धपुष्पादिभिरर्चितैः हेमादिभिः सुवर्णरजतादिभिः ताम्रादिभिर्वा निर्मितैः शङ्खचक्रगदाशार्ङ्गखड्गैः अग्रजन्मनां त्रैवर्णिकानां बाह्वोर्ललाटे शिरसि हृदये च क्रमान्मन्त्रेण दाहयेदिति श्लोकद्वयस्यैकवाक्यतयान्वयः ६२

दासभूतं यदात्मानं बुद्ध्येत परमात्मनः ।
तदैव गात्रं कुर्वीत शङ्खचक्रादिलाञ्छितम् ॥ ६३ ॥

दास्यचिह्नत्वादवश्यं चक्रादिधारणं कुर्यादित्याशयवानाह–दासभूतमिति। आत्मानं स्वं यदा परमात्मनो दासभूतं मन्यते तदैव तस्मिन्नेव काले गात्रं स्वदेहं शंखचक्रादिलाञ्छितं कुर्वीत चक्रादिधारणे भगवच्छेषत्वज्ञानमेवाधिकारः इति भावः ॥ ६३ ॥

आङ्कितं क्वचिदप्येवं चक्रेणैकेन केवलम्।
अनिष्टानां तु भूतानां न तावद्वशगो भवेत् ॥ ६४ ॥

सुदर्शनधारणमात्रेणापि भागवतत्वसिद्धिरस्तीत्याह–अङ्कितमिति। क्वचिदङ्गे दक्षिणे बाहौ एकेन केवलं शंखाद्यसमवहितेन चक्रेण अङ्कितेऽपि जन्मी अनिष्टानां भूतानां यमकिङ्कराणां पिशाचादीनां वा तावद्वशगो न भवेत् ॥ ६४ ॥

अग्नीषोमौ हि चक्राब्जौ सर्वे एव तदात्मकाः।
यदि वा मानयन्नेकं पूर्णो हि परमश्नुते ॥ ६५ ॥

शंखचक्रयोर्न द्वयधारणं मुख्यं तदुभयाधारणे हि द्वयोरन्यतरद्वा बिभ्रद्वैष्णव एव भवतीत्याह–अग्नीति। चक्राब्जौ अग्नीषोमौ चक्रमग्निः अब्जः शंखः सोमः सर्वा एव देवतास्तदात्मकाः अग्निसोमात्मकाःअतश्चक्राब्जधारणं मुख्यमिति शेषः। यदि वा तदुभयधारणरहितो वा एकन्तयोरन्यतरमानयन् दधानः पूर्णः पूर्ण एव सन् परमश्नुते हिशब्द एवकारार्थः प्रसिद्धिपरो वा ॥ ६५ ॥

शङ्खचक्रप्रधानं हि सर्वमन्यद्गदादिकम्।
अंकितः शङ्खचक्राभ्यां सर्वैरङ्कित एव वा ॥ ६६ ॥

ननूक्तं शंखचक्रद्वयधारणं मुख्यमिति तत्कथं युज्यते ? पञ्चायुधधारणस्यापि विहितत्वादित्याशंक्य शंखचक्रयोः प्रधान

तया तदन्येषां तदन्तर्भूतत्वेन तद्धारणं विनापि मुख्यमेवे-
त्याह–शंखेति। अन्यत् शंखचक्रव्यतिरिक्तं गदादि सर्वं शंखचक्र-
प्रधानम् । अतः शंखचक्राभ्याम् अङ्कितः सर्वैरेव पञ्चभिरा-
युधैरप्यङ्कितो भवेत् । पंचायुधधारणं वैकल्पिकमिति भावः ।
यद्वा अग्नीषोमावित्यादि श्लोकद्वयस्यैवं योजना । अग्नीषोमा-
विति यद्वेत्यत्र वाशब्दः मतान्तरद्योतनार्थः । अथवे-
त्यर्थः । अग्निसोमरूपयोः चक्राब्जयोर्मध्ये एकमन्यतरं मान-
यन् दधानः यदि न अपूर्णः । अस्तु तत ततः किमित्यत आह
पूर्णो हि परमश्नुत इति अन्यतमानि फलानीति भावः।पञ्चायुधा-
नां प्रधानत्वात् चक्राब्जयोस्ताभ्यामेवाङ्कितो भवेत्सर्वैर्वाङ्कितो
भवेत् विकल्पोऽविशिष्टफलत्वात् । अधारिणस्त्वपूर्णत्वान्नपर-
प्राप्तिः। किन्त्वर्वाचीनता तत्र पक्षे अब्जशब्दः शंखपरः औचि-
त्यात् । इत्यभिप्रायेणाह । शंखचक्रेति यतः सर्वात्मकत्वं
शंखचक्रयोस्ताभ्यामङ्कितः स्यात् सर्वैरङ्कितो वा स्यात्।अङ्कित
इत्यत्र स्यादिति शेषः । 'अन्ये पुराणां लिङ्गान्यन्ये तावका-
न्यर्पयन्ती' ति बहुवचनश्रुत्या पञ्चायुधधारणं विधाय अन्ये
इत्यनेन तस्याधिकारिविशेषनियतत्वकथनाद्व्यवस्थितो विक-
ल्पः ॥ ६६ ॥

धारयेदूर्ध्वपुण्ड्रांश्च विष्णोः प्रीतिकरान्सदा ।
जपहोमार्चनध्यानदानादिषु विशेषतः ॥ ६७ ॥

धारयेदिति । भगवन्मुखोल्लासहेतुत्वाज्जपादिभगवत्कैङ्कर्य-
योग्यतापादकत्वाच्च ऊर्द्धपुण्ड्रधारणं विशेषतः कर्त्तव्यमि-
त्यर्थः ॥ ६७ ॥

नश्यन्ति सकलाः क्लेशा नराणां पापसम्भवाः ।
अभीष्टान्यखिलानि स्युरूर्द्धपुण्ड्रस्य धारणात् ॥ ६८ ॥

ऊर्द्ध्वपुण्ड्रधारणस्य फलान्तराण्यप्याह—नश्यन्तीति । पापसम्भवाः क्लेशा नश्यन्ति क्लेशहेतुभूतानि पापानि नश्यन्तीत्यर्थः ॥ ६८ ॥

त्रयोदश द्वादश वाप्यूर्द्ध्वपुण्ड्राणि धारयेत् ।
एकं चत्वारि षट् चाष्टावपि वाञ्छन्ति केचन ॥ ६९ ॥

ऊर्द्ध्वपुण्ड्रधारणे मतभेदेन संख्याविकल्पमाह—त्रयोदशेति । त्रयोदश, द्वादश वेति स्वमतम् । अन्यत्तु अवमतं परमतम् ६९

ऋजूनि स्फुटपार्श्वानि सान्तरालानि विन्यसेत् ।
ऊर्द्ध्वपुण्ड्राणि दण्डाब्जमत्स्यदीपनिभानि च ॥ ७० ॥

ऋजूनीति । ऋजूनि स्फुटपार्श्वानि सुव्यक्तपार्श्वानि यथा स्वेदोद्गमे पार्श्वयोरभास्वरता न भवति यथा वा ललाटचर्मणः प्रत्यक्षाविषयता न भवति तथा पार्श्वयोर्नैबिडचं सम्पादनीयमित्यर्थः । सान्तरालानि सच्छिद्राणि न्यसेत् । ललाटादिस्थानेष्विति शेषः । कथंरूपाणि न्यसेदित्यपेक्षायामाह । दण्डाब्जमत्स्यदीपनिभानि चेति द्वन्द्वान्ते श्रूयमाणस्य निभशब्दस्य दण्डादिना प्रत्येकं सम्बन्धश्चकारात् हरिपादाकृत्यूर्ध्वपुण्ड्रसङ्ग्रहः । अत्र दण्डाकारोर्द्ध्वपुण्ड्रधारणं मुख्यं विष्णुपादाकृत्यूर्द्ध्वपुण्ड्रधारणं मुख्यमिति जानीध्वम् । 'हरेः पादाकृतिमात्मनो हिताय मध्ये छिद्रमूर्द्ध्वपुण्ड्रं यो धारयेत् स परस्य प्रियो भवति स पुण्यभाग् भवति' इत्याथर्वणे श्रुतत्वात् चक्राब्जमत्स्यदीपनिभानि चेत्यपरः पाठः ॥ ७० ॥

विष्णोरूर्द्ध्वतया क्षेत्रे पर्वतादौ प्रशस्तया ।
मृदोर्द्ध्वपुण्ड्रं देवनामन्यैर्वा छिद्रमेव वा ॥ ७१ ॥

केन द्रव्येणेत्यपेक्षायामाह—विष्णोरिति । विष्णोः क्षेत्रे पर्वतादौ प्रशस्तया मृदोर्ध्वपुण्ड्रं भवति धारयेदिति वा शेषः ।

देवानामर्चाबिम्बानामन्यैर्मृद्व्यतिरिक्तैः कस्तूर्यादिभिर्द्रव्यैर्वा ऊर्ध्वपुण्ड्रं वा भवति तेषामच्छिद्रमेव भवति। मनुष्याणां मृदा सच्छिद्रमेवेत्यर्थः। मृदप्यत्र श्वेतमृत्तिका। "श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत्॥ श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते" इति ब्रह्माण्डपुराणोक्तेः॥ ७१॥

निघर्षणादि विधिवत्कृत्वा ध्यायन् जगद्गुरुम्।
आसीनोऽङ्गुलिभिर्दद्यादूर्ध्वपुण्ड्रान् स्वयं क्रमात्॥७२॥

धारणप्रकारमाह-निघर्षणेति। विधिवत् यथाशास्त्रं जगद्गुरुं नारायणं ध्यायन् निघर्षणादि सव्यकरेण मृदालोडनब्रह्मतीर्थनिधानादिकं कृत्वा ऊर्द्धपुण्ड्रान् दद्यात्। कथंभूतः सन् जगद्गुरुं ध्यायन् नत्वन्यमनाः। आसीनो न तिष्ठन् गच्छन् धावन् शयानो वा अंगुलिभिर्दद्यात् न तु नखतृणादिना स्वयं दद्यात् नान्यहस्तेन। क्रमात् न व्यतिक्रमेण। अंगुलिभिरिति बहुवचनं मुमुक्षुव्यतिरिक्ताधिकारिणां मध्यमांगुष्ठादिभिरपि धारणानुज्ञानात्। मुमुक्षोस्तु तर्जन्यैव धारणम्। तदुक्तं ब्रह्माण्डपुराणे ब्रह्माणं प्रति भगवता। "अंगुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत्। अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी। एतैरंगुलिभेदैस्तु कारयेन्न नखैः क्वचित" इति॥७२॥

ऊर्ध्वपुण्ड्रंललाटे तु कुर्वीत चतुरङ्गुलम्।
उदरे हृदि कण्ठे च दशाष्टचतुरङ्गुलान्॥ ७३॥

ऊर्द्धपुण्ड्राणामौन्नत्ये प्रमाणमाह-ऊर्द्धपुण्ड्रमिति। ललाटे चतुरंगुलं चतुरंगुलोन्नतं कुर्वीत उदरे हृदि वक्षसि कण्ठे च क्रमेण दशाष्टचतुरंगुलानुच्चं कुर्वीत। उदरे दशांगुलपरिमितोच्छ्रायं वक्षस्यष्टांगुलपरिमितोच्छ्रायं कण्ठे चतुरंगुलोच्छ्रायम् ऊर्द्धपुण्ड्रं कुर्वीत॥ ७३॥

दक्षिणोदरबाह्वंसेष्वेवं त्रीणीतरस्य च।
आद्यवत्पृष्ठतो द्वे च मूर्ध्नि चैवं त्रयोदश ॥ ७४ ॥

दक्षिणेति। दक्षिणोदरबाह्वंसेषु दक्षिणोदरे उदरस्य दक्षिण पार्श्वे दक्षिणबाहौ दक्षिणांसे च इतरत्र उदरस्य वामपार्श्वे वामबाहौ वामांसे च एवं पूर्वोक्तक्रमेणैव दशाष्टचतुरंगुलान् कुर्वीत उदरस्य दक्षिणोत्तरबाह्वोरष्टांगुलौ तदंसयोश्चतुरंगुलौ कुर्वीतेत्यर्थः आद्यवल्ललाटोर्द्ध्वपुण्ड्रवत् ॥ ७४ ॥

त्रिधा सर्वत्र विस्तारश्चतुस्त्रिद्व्यङ्गुलं क्रमात्।
उत्तमो मध्यमो हीनः पार्श्वावङ्गुलिकौ स्मृतौ ॥ ७५ ॥

त्रिधेति। सर्वत्र सर्वेषूर्द्ध्वपुण्ड्रेषु चतुस्त्रिद्व्यंगुलान् क्रमात् विस्तारस्त्रिधा भवति तेषु मध्ये एक उत्तमस्त्वपरो मध्यमः अन्यो हीनः चतुरंगुलविस्तार उत्तमः। अत इतरौ यथाक्रमं मध्यमहीनौ पार्श्वौ छिद्रोर्द्ध्वपुण्ड्रपार्श्वौ अंगुलिमात्रविस्तारौ स्मृतौ यत्तु "दशांगुलप्रमाणन्तु उत्तमोत्तममुच्यते ॥ नवांगुलं मध्यमं स्यादष्टांगुलमतः परम् ॥ सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं भवेत्" इति ब्रह्माण्डपुराणवचनं तदतिविशालभालवद्विषयं वेदितव्यम् ॥ ७५ ॥

तत्र तत्र स्मरन्मन्त्रैः केशवादीन्न्यसेत्क्रमात्।
पाणिना दक्षिणेनैव वासुदेवं त्रयोदशे ॥ ७६ ॥

तत्रतत्रेति। ऊर्द्ध्वपुण्ड्रधारणानन्तरं तत्र तत्र ललाटाद्यूर्द्ध्वपुण्ड्रेषु स्मरन् केशवादीन् ध्यायन् मंत्रैः केशवादिमन्त्रैः क्रमात् केशवादीन् न्यसेत् केन पाणिना दक्षिणेनैव न तु वमकरेण। त्रयोदशेति शिरोधृतत्रयोदशोर्द्ध्वपुण्ड्रे वासुदेवमन्त्रेण वासुदेवं न्यसेत् ॥ ७६ ॥

प्रणवेन तथा व्यूहैः षडष्टद्वादशाक्षरैः ।
मन्त्रैरन्यैश्च तांस्तान्वै धारयेदूर्द्ध्वपुण्ड्रकान् ॥ ७७ ॥

ऊर्द्ध्वपुण्ड्रधारणमन्त्रमाह–प्रणवेनेति। व्यूहाः केशवादि दामोदरान्तव्यूहचतुष्टयस्यापि प्रत्येकं केशवादिरूपेण त्रिविधत्वात् अत्र व्यूहशब्दस्तत्तन्मन्त्रपरः केशवादिद्वादशव्यूहमन्त्रैरित्यर्थः । प्रणवेन केशवमन्त्रेण षडष्टद्वादशाक्षरैरन्यैश्च उपदिष्टैर्भगवन्मन्त्रैः केशवपुण्ड्रधारणम् । एवं प्रणवषडष्टद्वादशाक्षरतद्व्यतिरिक्तोपदिष्टभगवन्मन्त्रसहितैस्तत्तन्मन्त्रैर्नारायणादिपुण्ड्रधारणमिति विवेकः ॥ ७७ ॥

ततो दिव्यं च हारिद्रं सहेमतुलसीदलम् ।
मन्त्रेण धारयेच्चूर्णं ललाटे मस्तके तथा ॥ ७८ ॥

तत इति । दिव्यं देहं भगवदर्पितमिति यावत् । सहेमतुलसीदलं सुवर्णतुलसीदलचूर्णैर्मिश्रितं हरिद्रासम्बन्धि चूर्णं ललाटे मस्तके मन्त्रेण च 'श्रियोजात' इत्यादिना धारयेत् । 'ललाटे मस्तके तथे'त्याद्यङ्गग्रहणमुपलक्षणार्थम् ॥ ७८ ॥

पवित्राण्यब्जबीजानि शंखचक्राङ्कभूषणम् ।
धारयेद्वैष्णवं नाम वैष्णवाश्रयमेव वा ॥ ७९ ॥

पवित्रेति । पवित्राणि पवित्रारोपणोत्सवे भगवता धृतानि तन्तुमयानि अब्जबीजानि पद्माक्षबीजवलयानि इदं च तुलसीकाष्ठनिर्मिताक्षवलयानामप्युपलक्षणम् । शंखचक्राङ्कभूषणं शंखचक्राङ्कचिह्नितं मुद्रिकादि भूषणं वैष्णवं निजसम्बन्धिनामवैष्णवाश्रयं नित्यमुमुक्षुभेदभिन्नवैष्णवगतं नाम भागवतं वा धारयेदित्यर्थः ॥ ७९ ॥

अयुक्सूत्रैर्व्यतिस्यूतं धारयेत्कटिबन्धनम् ।
कौपीनंवस्त्रयुग्मं च यथार्हमितराणि च ॥ ८० ॥

अयुगिति । अयुक्सूत्रैः अयुग्मसूत्रैः व्यतिस्यूतं व्यत्यासेन स्यूतं कटिबन्धनं कटिसूत्रं धारयेत् कौपीनं वस्त्रयुग्मं यथार्हं यथायोग्यमितराणि उष्णीषादीनि च धारयेत् ॥ ८० ॥

लक्षणानि स्फुटान्येव क्रियासिद्धिकराणि तु ।
धारयेन्नोपहन्येत कदाचित्किङ्करादिभिः ॥ ८१ ॥

लक्षणानीति । लक्षणानि शंखचक्रोर्द्ध्वपुण्ड्रादिचिह्नानि स्फुटान्येव नत्वस्फुटानि क्रियासिद्धिकराणि भगवत्कैङ्कर्ययोग्यतापादकानीति यावत् किङ्करादिभिर्यमभटादिभिः ॥ ८१ ॥ इति लक्ष्माधिकारः ॥

दण्डवत्प्रणमेद्भूमावुपेत्य गुरुमन्वहम् ।
दिशे वापि नमस्कुर्याद्यत्रासौ वसति स्वयम् ॥ ८२ ॥

अथ सत्सेवामधिकरोति—दण्डवदिति । दण्डवदित्यनेन अहङ्कारनिवृत्तिराभिप्रेता अस्याहमिति कादाचित्कत्वव्यावृत्तिः यत्र देशे असावाचार्यो वसति तस्यै दिशे नमस्कुर्यादित्यर्थः । स्वमित्यनेन अग्निहोत्रादिवद् ऋत्विगादिभिर्न कारयेदित्यर्थः ॥ ८२ ॥

आचार्यायाहरेदर्थानात्मानं च निवेदयेत् ।
तदधीनश्च वर्तेत साक्षान्नारायणो हि सः ॥ ८३ ॥

आचार्यायेति । आचार्याय आचार्यार्थं धनान्याहरेत् आनयेत् आत्मानञ्च निवेदयेत् तवाहमस्मीत्यात्मनिवेदनं कुर्यात् तदधीनश्च वर्तेत आचार्याधीनस्तिष्ठेत् । नन्वियं वृत्तिर्भगवद्विषये कार्या कथमाचार्यविषयेऽपीत्याह 'साक्षान्नारायणो हि स' इति । साक्षान्नारायण इत्यनेन "साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान्कारुण्याच्छास्त्रपाणिना" इति वचनं सूच्यते । आचार्यस्य भगवद्रूपत्वात् तद्विषये कर्त्तव्या वृत्तिः सर्वाप्येतद्विषये कर्त्तव्येति भावः ॥ ८३ ॥

कुर्वीत परमां भक्तिं गुरौ तत्प्रियवत्सलः ।
तदनिष्टापवादी च तन्नामगुणहर्षितः ॥ ८४ ॥

कुर्वीतेति । परमां निरतिशयाम् । तत्प्रियवत्सलः आचार्यभक्तवत्सलः । तदनिष्टापवादी च आचार्यानिष्टविषयापवादशीलः । तन्नामगुणहर्षितः आचार्यगुणस्मरणवचनश्रवणादिभिर्हर्षितः ॥ ८४ ॥

नित्यं गुरुमुपासीत तद्वचःश्रवणोत्सुकः ।
विग्रहालोकनपरस्तस्यैवाज्ञाप्रतीक्षकः ॥ ८५ ॥

नित्यमिति । तद्वचःश्रवणोत्सुकः आचार्यवचनश्रवणकुतूहली । विग्रहालोकनपरः आचार्यविग्रहसेवाभिरतः । तस्यैव आचार्यस्यैव आज्ञाप्रतीक्षकः नियोगं प्रतीक्षमाणः ॥ ८५ ॥

प्रक्षाल्य चरणौ पात्रे प्रणिपत्योपयुज्य च ।
नित्यं विधिवदर्घ्याद्यैराहतोऽभ्यर्चयेद्गुरुम् ॥ ८६ ॥

प्रक्षाल्येति । चरणौ आचार्यचरणौ पात्रे प्रक्षाल्य प्रणिपत्य दण्डवत्प्रणम्य । उपयुज्य पादप्रक्षालनजलं पीत्वा नित्यं प्रत्यहं विधिवत् यथाशास्त्रम् आहतः आदरवान् कर्त्तरिक्तः । आचार्यादराविषयीभूतो वा गुरुमभ्यर्चयेत् ॥ ८६ ॥

इच्छाप्रकृत्यनुगुणैरुपचारैः सदोचितैः ।
भजन्नवहितश्चात्र हितमावेदयेद्रहः ॥ ८७ ॥

इच्छेति । इच्छाप्रकृत्यनुगुणैरातुरत्वावस्थायामिच्छागुणानामवद्यत्वात् देहपीडायामपर्य्यवसितैः आचार्ये गुणैर्नकेवलमिच्छागुणेभ्योनुगुणैरुचितैः शास्त्राविरुद्धैरुपचारैरवहितः सावधानो भजन् अस्य आचार्यस्य हितं रहः रहस्यावेदयेत नयमातिक्रमे सति हितं रहो निवेदयेदित्यर्थः ॥ ८७ ॥

यथानुजीवी नृपतिं यथा भक्तस्तु दैवतम्।
तथैव देशिकं शिष्यः सेवेत विनयान्वितः॥ ८८॥

यथेति। यथानुजीवी भृत्यः नृपतिं राजानं सेवते, भक्तः दैवतं यथा सेवते, शिष्योऽपि देशिकं तथा सेवेत तथेत्यस्यार्थं विशदयति विनयान्वित इति॥ ८८॥

स्नातं च गुरुणा यत्र तीर्थं नान्यत्ततोऽधिकम्।
यच्च कर्म तदर्थं तद्विष्णोराराधनात्परम्॥ ८९॥

स्नातमिति। गुरुणा यत्र स्नातं स्नानं कृतं ततः तज्जलात अधिकमुत्कृष्टं तीर्थं नास्ति तदेव सर्वतीर्थाधिकमिति भावः तदुक्तं भागवते विदुरं प्रति धर्मराजेन "भवद्विधा भागवता स्तीर्थभूताः स्वयं विभो। तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता" इति यच्च तदर्थं कर्म तदाचार्यकैङ्कर्यरूपं कर्म विष्णोराराधनात्परं भगवदाराधनादप्युत्कृष्टम्॥ ८९॥

अपदिश्य पितॄन्देवान्गुरौ यत्प्रतिपाद्यते।
देशकालक्रियामन्त्रनिरपेक्षं तदक्षयम्॥ ९०॥

अपदिश्येति। पितॄन्देवानप्यपदिश्य गुरौ आचार्ये यत्प्रतिपाद्यते यत्कव्यं हव्यं वा समर्प्यते तद्धव्यं कव्यं वा देशकालक्रियामन्त्रनिरपेक्षम् अदेशे अकाले वा दत्तं मन्त्रहीनं क्रियाहीनं वा अक्षयं भवति॥ ९०॥

आत्मनो ह्यतिनीचस्य योगिध्येयपदार्हताम्।
कृपयैवोपकर्त्तारमाचार्यं संस्मरेत्सदा॥ ९१॥

आत्मन इति। अतिनीचस्यात्मनः योगिध्येयपदार्हतां विधिशिवसनकाद्यैरपि ध्येयं न प्राप्तुं शक्यं यत्पदं तदर्हताम् यद्वा योगिध्येयस्य श्रीमतो नारायणस्य पदयोरर्हतां परि-

चरणाधिकारं कृपयैवोपकर्तारं योग्यतामविचार्य दत्तवन्तम् । आचार्यं सदा संस्मरेत् । अर्हतामुपकर्त्तारमिति तृन्नंतत्वान्नलोकाव्ययेत्यादिना षष्ठीनिषेधात् द्वितीया ॥ ९१ ॥

स्वयं देहानुकूलानि धर्मार्थौपयिकानि च ।
कुर्यादप्रतिषिद्धानि गुरोः कर्माण्यशेषतः ॥ ९२ ॥

स्वयमिति । आचार्यदेहानुकूलानि पादसंवाहनादीनि धर्मार्थौपयिकानि आचार्यार्थे तदग्निपरिचर्यादीनि अप्रतिषिद्धानि शास्त्राविरुद्धानि गुरोः कर्माण्यशेषतः कार्त्स्न्येन स्वयं कुर्यात् ॥ ९२ ॥

योऽसौ मन्त्रवरं प्रादात्संसारोच्छेदसाधनम् ।
प्रतीच्छेद्गुरुवर्यस्य तस्योच्छिष्टं सुपावनम् ॥ ९३ ॥

योसाविति । योऽसावाचार्यः संसारोच्छेदसाधनं मोक्षहेतुभूतं मन्त्रवरं मन्त्ररत्नं प्रादात् दत्तवान् तस्य गुरुवर्यस्य आचार्यश्रेष्ठस्य सुपावनमुच्छिष्टं प्रतीच्छेत् स्वीकुर्य्यान्नत्वन्यस्य सुपावनमित्यनेन भगवद्भक्तत्वात्पावनन्तदेवाचार्यदिव्यवदनसंस्पर्शात् सुपावनमभिप्रेतं मन्तव्यम् ॥ ९३ ॥

ये चोपकुर्वते ज्ञानं किमप्यच्युतसंश्रयम् ।
विनोच्छिष्टाशनं कुर्याद्वृत्तिं तेष्वपि गौरवात् ॥ ९४ ॥

उच्छिष्टाशनं साक्षान्मोक्षसाधनविद्योपदेष्टृविषये । अन्यविषये तु उच्छिष्टाशनवर्जं गुरुवृत्तिमाचरेदित्याह-येचेति । अच्युतसंश्रयं भगवद्विषयं किमपि साक्षान्मोक्षसाधनविषयकतया यत्किञ्चिदपि प्रमाधानं ज्ञानं ये चोपकुर्वते प्रयच्छन्ति उच्छिष्टाशनवर्जितां तेष्वपि गौरवाद्वृत्तिं कुर्यात् गुरुवद्वृत्तिमाचरेदित्यभिप्रायः ॥ ९४ ॥

गुरोश्च पत्नीपुत्रादिष्वन्येष्वप्यमलात्मसु।
कुर्यादाचार्यवद्वृत्तिं तत्र तत्र व्यवस्थया॥ ९५॥

गुरोश्चेति। पत्नीपुत्रादिष्वित्यादिशब्देन भ्रात्रादयो गृह्यन्ते। 'आचार्यपत्नीं पुत्रं वा मातापितरौ च सोदारम्॥ आचार्यमेव मन्येत अन्यथा नाशमाप्नुयात्' इति विहगेन्द्रसंहितोक्तेः। अन्येषु तदन्तरङ्गेषु शिष्टेषु सब्रह्मचारिषु वा तत्र व्यवस्थया वा गुरुपुत्रादौ उच्छिष्टाशनादिवर्जं गुरुदारेषु पादोपसंग्रहणादिवर्जं वृत्तिं कुर्यात्॥ ९५॥

आचार्योऽपि तथा शिष्यं स्निग्धो हितपरः सदा।
प्रबोध्य बोधनीयानि वृत्तिमाचारयेत्स्वयम्॥ ९६॥

आचार्येति। यथा गुरौ शिष्यः स्नेहयुक्तो भवति तथा आचार्योऽपि शिष्ये स्निग्धो भूत्वा सदा शिष्यहितपरः सन् बोधनीयानि ज्ञापनीयानि प्रबोध्य ज्ञापयित्वा वृत्तिं विहिताचाराद्यात्मिकां षड्विधां वृत्तिमाचरेत॥ ९६॥

निजधर्मानुरोधेन वैष्णवैरेव वैष्णवः।
कुर्यात्सर्वाणि कार्याणि न कदाचिदवैष्णवैः॥ ९७॥

निजेति। निजधर्मानुरोधेन स्ववर्णाश्रमावस्थानियतधर्माविरोधेन वैष्णवो वैष्णवैरेव ऋत्विगादिभिः समं सर्वाणि कार्याणि कर्त्तव्यानि कुर्यात्। अवैष्णवैः सह न कदाचित्कुर्यात्॥ ९७॥

अधिकैः सदृशैर्वापि कुर्यादेव तु सङ्गमम्।
हीनांश्च नावमन्येत न च दोषं विभावयेत॥ ९८॥

अधिकैरिति। अधिकैः सदृशैर्वापि स्वस्मादुत्कृष्टैः स्वसमानैर्वा हीनान् विकलवृत्तीन्न च दोषं विभावयेद्धीनेषु दोषचिन्तामपि न कुर्यात्॥ ९८॥

५

वृद्धानाचारसम्पन्नान्विष्णुभक्तान्दृढव्रतान् ।
सतः सत्सेवनपरान्नित्यं सेवेत संनतः ॥ ९९ ॥

वृद्धानिति । दृढव्रतान्बृहस्पतिनाप्यक्षोभ्याध्यवसायान्सतः ब्रह्मज्ञानेन लब्धसत्ताकान् । 'अस्तिब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इति श्रुतेः सन्नतः प्रह्वीभूतः ॥ ९९ ॥

एवं स्वकर्मणि ज्ञाने भक्तौ च परिनिष्ठितः ।
वैराग्येण च संयुक्तो न चेहाजायते पुनः ॥ १०० ॥

इति श्रीभारद्वाजसंहितायां न्यासोपदेशे तृतीयोध्यायः ॥३॥

उक्तमर्थं निगमयति–एवमिति । स्वकर्म्मणि विहिताचारे ज्ञाने दृष्टौ भक्तौ चेति चकारेण लक्ष्मसत्सेवे समुच्चीयेते । वैराग्येण च संयुक्तः उक्तवृत्तिविरोधिपरिहारनिरतः । इहलोके पुनर्न आजायते नोत्पद्यते ॥ १०० ॥ इति सत्सेवनाधिकारः ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहिताटीकायां न्यासोपदेशे तृतीयोऽध्यायः ॥ ३ ॥

प्रीतिरूपांस्तथा विष्णोः स्वधर्मानाचरेद्यथा ।
तथैवाप्रीतिरूपाणि प्रतिषिद्धानि वर्जयेत् ॥ १ ॥

अथ 'वैराग्येण संयुक्त' इत्यमुमर्थं विशदयितुं तद्विरुद्धवर्जनमधिकरोति–प्रीतिरिति । भगवत्प्रीतिहेतुतयोक्तानि शरणं प्रपन्नस्य प्रतिषिद्धानां भगवदप्रीतिहेतुतयोक्तानि वर्जनीयानीत्यर्थः ॥ १ ॥

विष्णोर्ध्यानप्रणामार्चास्तुतिचिह्नादिवर्जितम् ।
समारब्धं तु यत्कर्म तत्कर्म विफलं भवेत् ॥ २ ॥

प्रपन्नस्य देवतान्तरस्पर्शस्य निषिद्धत्वात्कर्मारम्भेऽपि कर्मसमृद्ध्यर्थं न देवतान्तरस्तुतिनमस्कारादि कुर्यादित्याशयवा-

नाह-विष्णोरिति। चिह्नशब्देन ऊर्द्ध्वपुण्ड्रादि भगवच्चिह्न-मुच्यते ॥ २ ॥

विष्वक्सेनः स्मृतो नेता भगवाँच्छुद्धकर्मणाम्।
तस्मान्नान्यमुपासीत कर्मणां विघ्नशान्तये ॥ ३ ॥

विघ्नोत्तरणार्थमपि न देवतान्तरमुपासीतेत्याह-विष्वक्सेनेति। भगवान्विष्वक्सेनः सर्वकर्मणां नेता प्रभुः। शुद्धकर्मणामिति क्वचित्पाठः। तस्माद्विष्वक्सेनादन्यं विघ्नशान्तये नोपासीत। तस्मादिति पदं हेतुपरम् ॥ ३ ॥

ब्रह्मरुद्रदिगीशार्कतच्छक्तिप्रसवादयः।
नित्यमभ्यर्चने वर्ज्याः कामोऽपि स्यान्न तन्मुखः ॥ ४ ॥

ब्रह्मेति। दिगीशा दिक्पालाः ॥ अर्कः सूर्यः तच्छक्तिप्रसवादयः तच्छक्तयः ब्रह्मादीनां शक्तयः शक्तिशब्दो भार्यापरः। तत्प्रसवाः ब्रह्मादीनामपत्यानि तदवतारपरत्वे तद्भार्या विवक्षणीयाः। नित्यमभ्यर्चने वर्ज्याः नित्यार्चने परिहरणीयाः क्वचित्कर्मविशेषे भगवच्छरीरत्वेन तेषामन्वयेऽपि नित्यार्चने तु शरीरत्वेनापि न तेषामन्वयः कार्य इतिभावः। कामोऽपि स्यान्न तन्मुखः। कामानभिलष्यापि न तेषामुपास्तिं कुर्यादित्यर्थः कामेषु सर्वत्र नित्येष्वपि देवतार्चायां ब्रह्मादीनां शरीरत्वेनापि नान्वयः सम्पादनीय इति श्लोकाभिप्रायः ॥ ४ ॥

न जातु परमां वृत्तिं कुर्वीत विरसाशयः।
प्रमादालस्यनास्तिक्यकामाद्यैर्न च हापयेत् ॥ ५ ॥

नजात्विति। वृत्तिं विहिताचारलक्षणां प्रमादेन आलस्येन नास्तिक्येन कामेन आदिशब्देन क्रोधादिना वा जातु कदाचिदपि न हापयेत् न परित्यजेत्। विरसाशयः विहितत्वधिया

भक्तिहीनो वा न कुर्वीत भगवदाराधनत्वप्रतिपत्त्या अत्यन्तभक्तियुक्तः कुर्यादिति भावः ॥ ५ ॥

देशकालकुलादीनां विना पापेन संविदः ।
आस्त्रीभ्यश्चाखिलाचारान्नातिक्रमेत्कदाचन ॥ ६ ॥

देशेति । देशसंविदः एतद्देशे अयं धर्मः कर्त्तव्य इत्येवमात्मकः । एवं कालजातिसंविदश्च देशजातिकुलादीनामित्यपरः पाठः । तदा जातिशब्दो ब्राह्मणत्वादिजातिपरः । कुलशब्दोऽपि वंशादिपरः । तेषां पापेन विना संविदः अनिषिद्धान् समयान् । आस्त्रीभ्यः स्त्रीपर्य्यन्तमखिलाचारांश्च नातिक्रमेत ॥ ६ ॥

न वृत्तेरधिकामृद्धिं न मृत्युं न च जीवितम् ।
न चाप्रशस्तान्विषयानिच्छेदिह परत्र वा ॥ ७ ॥

न वृत्तेति । वृत्तिर्देहयात्रा । मृत्युर्मरणम् । जीवितम् आयुः । अप्रशस्ता विषयास्त्रयीनिषिद्धाः । परत्र परलोके ॥ ७ ॥

न पापेन न पुण्येन नात्यायासेन कर्मणा ।
सम्पदां संग्रहं कुर्याद्विपदां च प्रतिक्रियाम् ॥ ८ ॥

नपापेनेति। पापेन चौर्यादिना हिंसादिना वा क्रमेण सम्पदां संग्रहं विपदां प्रतिक्रियां च न कुर्यात् । पुण्येन सम्पत्त्यातिहेतुभूतेन लक्ष्मीव्रतादिना विपन्निवृत्तिहेतुभूतेन स्तुतिपाठमन्त्रजपादिना वा क्रमेण सम्पत्संग्रहविपत्प्रतीकारौ वा न कुर्यात् । अत्यायासेन अविहिता प्रतिषिद्धेनापि बह्वायाससाध्येन कर्मणा न कुर्यात् किन्तु विहिताप्रतिषिद्धेनाल्पायासेन कर्मणा सम्पत्संग्रहविपत्प्रतीकारौ कुर्यादिति भावः ॥ ८ ॥

विनैव प्रतिषिद्धेन सर्वार्थान्साधयेत्सुधीः।
नोपेक्षेत च भूतानां व्यसनं शक्यवारणम् ॥ ९ ॥

विनैवेति। उक्तपुण्यपापभिन्नेन कर्मणाल्पायासेन यत्सङ्ग्रह-विपत्प्रतीकारौ कुर्यादित्ययन्तु नियमः स्वसम्पत्संग्रहविपत्प्रती-कारयोरेव। आचार्यस्तद्विषये तु पापमपहाय पुण्येनात्यायासेन कर्मणा वा सम्पत्संग्रहं विपत्प्रतिक्रियां च कुर्यादित्याह। एवकारो भिन्नक्रमः। प्रतिषिद्धेनैव विना आचार्यतदीयानां सर्वार्थान्साधयेत्। इदं च विपत्प्रतीकारस्याप्युपलक्षणार्थम्। भूतानां च सद्व्यतिरिक्तानां ह्यसतामपि चेतनानां शक्यवारणं स्वेन वारयितुं शक्यं व्यसनं नोपेक्षेत शक्यश्चेन्निवर्त्तनीयमेवे-त्यर्थः। सतां व्यसनन्तु अशक्यवारणमपि अतिप्रयासेनापि वारणीयमिति भावः ॥ ९ ॥

न विषज्वरभूतादिहरणं स्तम्भनादि च।
नाद्भुतानि तथान्यानि साधयेत्सत्त्वसंश्रयः ॥ १० ॥

नेति। विषं सर्पादीनाम्। ज्वरः प्रसिद्धः। भूतादीत्यादिश-ब्देन ब्रह्मराक्षसादयो गृह्यन्ते। एतेषां हरणं मन्त्रैर्निवारणं न कुर्यात्। स्तम्भनादि अग्निस्तम्भनादिकम्। उच्चाटनादि आदि शब्दार्थः। तथा अन्यान्यद्भुतानि पाषणप्रविकरणजलवह्नि-करणादीनि न साधयेत् ॥ १० ॥

न विपत्तिषु वैक्लव्यं नोदयेषु समुन्नतिम्।
न कामेषु प्रसक्तिश्च भजेदच्युतमानसः ॥ ११ ॥

नविपत्तिष्विति। विपत्तिषु आपत्सु वैक्लव्यं विक्लवताम् अव-सादन्न गच्छेत् उदयेषु समुन्नतिं समुद्धर्षणं न गच्छेत्। कामेषु भोगेषु प्रसक्तिम् अतिसङ्गं न गच्छेत न यायात्। भजेदच्युत-मानस इत्यपरः पाठः। अच्युतमानस इत्यस्यायं भावः।

पुण्यपापरूपमभ्युपगतप्रारब्धमनेन प्रकारेण नाशयन् भगवान्मम हितमाचरन् न माऽच्यावयतीति विपत्त्यादिषु नावसादं भजेतेति ॥ ११ ॥

विनिन्दितः प्रशस्तो वा विमतः संमतोऽपि वा ।
विलुप्तोऽभ्यार्चितो वापि विक्रियेत न तत्त्ववित् ॥ १२ ॥

विनिन्दितइति। विनिन्दितः दुर्गुणारोपेण गर्हितः । प्रशस्तः सद्गुणारोपेण स्तुतः । विमतः अविश्वासाविषयीकृतः । सम्मतः विश्वासविषयीकृतः । विलुप्तः तिरस्कृतः । अभ्यर्चितः पूजां प्रापितो वा तत्त्वविन्न विक्रियेत हर्षशोकादिविकारं न प्राप्नुयात् ॥ १२ ॥

न च क्रियान्तरङ्गाणां नायस्येदप्यसम्भवे ।
हानिं निवेद्य देवाय मनसैव प्रपूरयेत् ॥ १३ ॥

न चेति । क्रिया भगवत्कैङ्कर्यमित्यादिरूपं तदन्तरङ्गाणां तदावश्यकानां द्रव्याणामसम्भवे अलाभेऽपि नायस्येत् आयस्तो न भवेत् । तत्सम्पिपादयिषया दुष्करायासं न कुर्यादित्यर्थः । तादृशायासेन योगाभावप्रसङ्गादिति भावः । किन्तु देवाय भगवते हानिं क्रियान्तरङ्गद्रव्यालाभं निवेद्य विज्ञाप्य मनसैव प्रपूरयेत । अलब्ध्वा क्रियान्तरङ्गाणि मनसा प्रकल्प्य समर्पयेदित्यर्थः ॥ १३ ॥

वर्जयेत्प्रतिषिद्धानि सर्वाण्यस्खलितः शुचिः ।
प्रवृत्ते कारणं चात्र कामक्रोधादिकं त्यजेत् ॥ १४ ॥

वर्जयेदिति । शुचिः सम्यगध्यवसायवान् अस्खलितः वृत्तौ स्खालित्यरहितः सर्वाणि प्रतिषिद्धानि वर्जयेत् । अत्र प्रतिषिद्धेषु प्रवृत्तेः कारणं कामक्रोधादिकं त्यजेत् । निषिद्धानां कामक्रोधादिमूलत्वात्त्यजेदित्यर्थः ॥ १४ ॥

अगम्यागमनं हिंसामभक्ष्याणां च भक्षणम्।
असत्यवचनं स्तेयं तद्वत्सङ्गांश्च वर्जयेत् ॥ १५ ॥

अगम्येति। अगम्याः पारदारादिकाः तद्वत्सङ्गान् अगम्यागमनादिमत्सङ्गान्। यद्वा अगम्यागमनमित्यनेन गुरुतल्पस्पर्शादिकमुच्यते। हिंसा ब्रह्मवधादिका। अभक्ष्याणाञ्च भक्षणमसत्यवचनमित्यनेन निषिद्धभक्षणं जैह्ममुत्कर्षे च वचोऽनृतमित्याद्युक्तं सुरापानसमं तदुपलक्षितं सुरापानं च विवक्षितम्। स्तेयं ब्राह्मणस्वर्णहरणम् ॥ १५ ॥

पातकानि समस्तानि गुरूणि च लघूनि च।
विभोः कालुष्यकारीणि मनसापि न चिन्तयेत् ॥ १६ ॥

पातकानीति। विभोः कालुष्यकारीणि भगवन्मनःकालुष्यजनकानि ॥ १६ ॥ इति विहिताचारविरुद्धवर्जनम् ॥

ज्ञानं तु स्वपरोपायफलान्वयविरोधिनाम्।
अन्यथा विपरीतं वा ज्ञानं हानिकरं परम् ॥ १७ ॥

एवं विहिताचारविरुद्धवर्जनमुक्त्वा दृष्टिविरुद्धकर्मवर्जनमाह—ज्ञानमिति। स्वं प्राप्ता प्रत्यगात्मा। परं प्राप्यं ब्रह्म। उपायः प्राप्त्युपायः। फलं प्राप्तिः फलम्। अन्वयः सम्बन्धः। विरोधि प्राप्तिविरोधि। एषामन्यथा ज्ञानं ज्ञानाभावः अन्यथाधर्मिणि स्वस्वरूपादौ स्वासाधारणभासमाने प्रकारे विपर्ययरूपं यथा 'शंखः पीत' इत्यादि ज्ञानां तु धर्मिणि धर्मान्तरारोपरूपस्वस्वरूपादीनां देहादिरूपेण ज्ञानम्। यथा इदं रजतमित्यादि ज्ञानम्। जीवपरमात्मसम्बन्धसहितस्यार्थपंचकस्य ज्ञानाभावोऽन्यथाज्ञानं विपरीतज्ञानं वा परमुत्कृष्टं हानिकरमित्यर्थः ॥ १७ ॥

छन्दांसि सरहस्यानि दिव्यशास्त्रान्विताः स्मृतीः।
न जातु विचिकित्सीत पुराणादि च सात्त्विकम् ॥ १८ ॥

छंदांसीति । सरहस्यानि सोपनिषत्कानि छन्दांसि वेदान्दिव्यशास्त्रं श्रीपञ्चरात्रं तदन्विताः तदविरुद्धा इति वा स्मृतीः मन्वादिधर्मशास्त्राणि सात्त्विकं सत्त्वगुणप्रचुरेषु कल्पेषु तद्गुणप्रचुरेषु ब्रह्मणा निर्मितपुराणादिषु श्रीविष्णुपुराणश्रीभागवतादिकं प्रति जातु कदाचिदपि न विचिकित्सीत संशयीत तदुक्तार्थे संशयवान्न भवेदित्यर्थः ॥ १८ ॥

शरण्यमिज्यं लक्ष्मीशं सदा सेव्यमनिच्छताम् ।
नेच्छेद्दृष्टिं कुदृष्टीनां सुधीः श्रुत्यर्थनिर्णयात् ॥ १९ ॥

वेदार्थनिर्णयाय कुदृष्टिकल्पितानि शास्त्राणि नाद्रियेतेत्याह-शरण्यमिति । शरण्यत्वेन इज्यत्वेन लक्ष्मीपतित्वेन सदा सेव्यत्वेन ये भगवन्तं नेच्छन्ति तेषां कुदृष्टीनां दृष्टिलक्षणया शास्त्रम्, श्रुत्यर्थनिर्णयात् प्रयोजनहेतुत्वात् पञ्चमी, श्रुत्यर्थनिर्णयात् सात्त्विकपुराणेतिहासधर्मशास्त्रश्रीपंचरात्रादिना श्रुत्यर्थस्य निर्णीतत्वात्तद्विरुद्धशास्त्रं नेच्छेत् न परिगृह्णीयादित्यर्थः ॥ १९ ॥

ज्ञानं ज्ञेयं च तत्त्वेन कारणं चाच्युतं परम् ।
अजानद्भिर्वृथानीतान्नाश्रयेन्न्यायविस्तरान् ॥ २० ॥

ज्ञानमिति । ज्ञायतेऽनेनेति ज्ञानं शास्त्रम् अच्युतस्य शास्त्रसामानाधिकरण्यं तत्प्रवर्त्तकत्वनिबन्धनम् । शास्त्रप्रवर्त्तकमित्यर्थः ज्ञेयं शास्त्रं प्रवर्त्तितं शास्त्रं वेद्यम् । तत्त्वेन अञ्जसा कारणं जगत्कारणभूतं परं सर्वस्मात्परम् अच्युतं नारायणमजानद्भिरजानानैर्वृथा व्यर्थमेव च नीतान्न्यायविस्तरान्नाश्रयेन्न पश्येदित्यर्थः । यद्यपि न्यायविस्तारोऽप्यष्टादशस्थानेष्वभ्यर्हितः अथापि कुदृष्टिरचितमपहाय न्यायतत्त्वे न्यायपरिशुद्ध्यादिवत्सुधीरचितमुपाददीतेति भावः ॥ २० ॥

प्रकृतिं पुरुषं योगं परं प्राप्यञ्च माधवम् ।
अन्यथा मन्यमानानां स्मृतीश्च परिवर्जयेत् ॥ २१ ॥

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इत्यादिमनूक्तप्रक्रियया रजस्तमोमूलाः स्मृतयोऽप्यनादेया इत्याह—प्रकृतिमिति। प्रकृतिं त्रिगुणात्मिकाश्चिद्विशेषं पुरुषं जीवं योगं प्रकृतिपुरुषसम्बन्धं जीवात्मपरमात्मसम्बन्धं वा मुक्त्युपायं व्यापारमुत्कृष्टं प्राप्यं माधवं श्रियःपतिश्च अन्यथा मन्यमानानां स्मृतीश्च 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' 'अत एव योगः प्रयुक्तः' इत्यादिना भगवता बादरायणेन निरस्ताः कापिलादिकाः परिवर्जयेत् अन्यथा मन्यमानानामित्येतद्विपरीतं मन्यमानानामप्युपलक्षणार्थम् । यद्वा 'शरण्यमित्यादिश्लोकद्वयेन अज्ञानवतां वचनमनादेयमित्युक्तम् । ' प्रकृतिं पुरुषमित्यादिना अन्यथा ज्ञानवतां च वचनमनादेयमित्युक्तम् । 'तामसांस्तथा । अनीशानां परेशत्व'मित्यादिना विपरीज्ञानवतां वचनमनादेयमित्युक्तमिति विवेकः । यद्वा शरण्य इत्यादिना वेदविरुद्धमहर्षिवचनं त्याज्यमित्युक्तम् । ऋषिवचनेष्वपि वेदविरुद्धाः स्मृतयः त्याज्या इत्युक्तम् 'प्रकृतिं पुरुष' मित्यनेन । 'नाद्रियेते' त्यादिना वेदविरुद्धं पुराणं त्याज्यमित्युक्तम् । तथा रुद्रेणेत्यनेन ऋषिभ्योऽप्यधिकेन रुद्रेणापि प्रणीतं तच्च तमोमूलत्वात्त्याज्यमिति विवेको द्रष्टव्यः प्रकृत्यादीनामन्यथा मन्यमानत्वात्तासु स्मृतिषु स्फुटम्।तथा हि गुणाधिकरणप्रकृतिः त्रिगुणस्वरूपा क्रियते। भगवत्परतंत्रः पुरुषस्वतन्त्रत्वेन उपायोजीवात्ममात्रज्ञानत्वेन । ईश्वरसांख्यैरीश्वराभ्युपगमेऽपि अपरत्वेन अप्राप्यत्वेन अलक्ष्मीपतित्वेन सोऽभ्युपगम्यत इति ॥२१॥

नाद्रियेत पुराणादीन् राजसांस्तामसांस्तथा ।
अनीशानां परेशत्वं वृथा यत्रोपवर्ण्यते ॥ २२ ॥

नाद्रियेतेति । अनीशानां रुद्रादीनाम् ॥ २२ ॥

तथा रुद्रेण कथितं मोहनं क्षुद्रकामदम् ।
तन्त्रं बहुविरुद्धञ्च तामसं परिवर्जयेत् ॥ २३ ॥

तथेति । तन्त्रं पाशुपताख्यं बहुविरुद्धं बहुप्रमाणविरुद्धं पूर्वोत्तरविरुद्धमिति वा तामसं तमोमूलं पत्युरसामञ्जस्यादित्यधिकरणर्थोऽभिप्रेतः ॥ २३ ॥

अन्येषां त्रिदशादीनां स्तुतीर्मन्त्रांश्च वर्जयेत् ।
निबन्धनं गुणादीनां निबन्धांश्चान्यचेतसाम् ॥ २४ ॥

यद्यप्ययं श्लोको भक्तिविरुद्धाधिकारे पूर्वोत्तरश्लोकेषु स्मृतिपादप्रक्रियया वेदविरुद्धतन्त्राणामनादेयत्वकथनान्नान्यश्लोकस्यात्र सङ्गतिरस्ति; तथापि कोशान्तरेऽप्यत्रैव लिखितत्वादत्र व्याख्यायते-अन्येषामिति । अन्येषां भगवदेकान्त्यरहितानां त्रिदशादीनां देवादीनां स्तुतीः स्तोत्राणि मन्त्राँश्च वर्जयेत् देवतान्तरस्तोत्राणि आपन्निवारकतया सम्पत्करतया वा पुराणादिषु प्रसिद्धानि देवतान्तरमन्त्रांश्च वर्जयेत् । गुणादीनां देवतान्तरगुणकर्मणां निबन्धनं तद्विषयकगद्यपद्यादिनिर्माणं च वर्जयेत् न कुर्यात् । अन्यचेतसां अन्यचेतनानां निबन्धाँश्च वर्जयेत् प्रयोजनान्तरमनस्कैर्देवतान्तरनिष्ठहृदयैर्वा कृतात् भगवद्विषयान्प्रबन्धान्वर्जयेदित्यर्थः ॥ २४ ॥

बाह्यं दुष्टं तमोनिष्ठं विपरीतमनर्थकम् ।
मतं न सौगतादीनां मनसापि विचिन्तयेत् ॥ २५ ॥

बाह्यमिति । बाह्यं वेदबाह्यं दुष्टं कुतर्कमूलत्वात् व्याघातादिदोषदुष्टम् । अत एव तमोनिष्ठं तमोगुणे स्थितं तमोमूल

मित्यर्थः। तमोनिष्ठमित्यनेन 'या वेदबाह्याः स्मृतय' इत्यादिमनुवचनं स्मारितम्। विपरीतं विपरीतार्थप्रतिपादकम्। अनर्थक दृष्टादृष्टप्रयोजनशून्यम्। तथा सौगतादीनां बौद्धादीनां मतं मनसापि न चिन्तयेत्। किमुत न वचसोच्चारयेदिति भावः २५

कामं मतानि चान्येषां पश्येत्प्राज्ञोऽपनुत्तये।
न च तेषु प्रसज्जेत नानुमन्येत नाभ्यसेत्॥ २६॥

बाह्यकुदृष्टिमतानामपि दूषणार्थमवलोकनमनुजानाति–काममिति। अन्येषां बाह्यदृष्टानां मतानि अपनुत्तये निराकरणाय कामं पश्येत्। तेषु मतेषु न च प्रसज्जेत प्रकर्षेण सङ्गं न भजेत आदरवान्न भवेदित्यर्थः। नानुमोदेत अत्र युक्तिः सम्यक्कथितेत्यादिरूपेणानुमोदनं न कुर्यात्। नाभ्यसेत् धारणार्थं पुनर्निरीक्षणादिकं न कुर्यात् ॥ २६॥ इति दृष्टिविरुद्धाधिकारः॥

अपचारांश्च विविधान्हरेर्यत्नेन वर्जयेत्।
महानपायो माध्यस्थ्यं किं पुनर्विपरीतता॥ २७॥

अथ भक्तिविरुद्धवर्जनमाह–अपचारानिति। माध्यस्थ्यं महापायः। उपचारापचारयोरप्यनन्वयो माध्यस्थ्यम्। स एव महाननर्थः। विपरीतान्वयः अपचारान्वयस्तु किं पुनर्महानपाय इति। किमुत वक्तव्यमिति भावः। यद्वा, माध्यस्थ्यम्। अन्येषु भगवदपचारेषु प्रवर्त्तमानेषु सत्सु स्वयं तेषामनिवारणं स एव महानपायः विपरीतान्वयस्त्वपचारान्वयस्तु किं पुनरिति॥ २७॥

विष्णवर्चारहिते ग्रामे विष्णवर्चारहिते गृहे।
न कुर्यादन्नपानादि न तत्र दिवसं वसेत्॥ २८॥

विष्णवर्चेति। दिवसमित्यत्यन्तसंयोगे द्वितीया। प्रयोजनवशात्किञ्चित्कालावस्थानेऽपि सर्वोऽपि दिवसस्तत्र न नेतव्य इति भावः॥ २८॥

न च मन्त्रोपजीवी स्यान्नचाप्यर्चोपजीविकः।
नानिवेदितभोगश्च न च निन्द्यनिवेदकः॥ २९॥

न चेति। दृष्टार्थतया परपीडानिवृत्यर्थं मन्त्रजपशीलो न स्यात्। न चाप्यर्चोपजीविकः वृत्यर्थं भगवदर्चां न कुर्यात्। अनिवेदितभोगः अनिवेदितं भुञ्जानो न स्यात्। निन्द्यनिवेदकः भगवते शास्त्रनिषिद्धलशुनादिनिवेदको न स्यात्॥२९॥

वर्ज्याः पाखण्डशैवाद्यैः स्थापिताश्च तथार्चिताः।
अन्यत्र च स्वतो बद्धा नियमात्सर्वदेवताः॥ ३०॥

वर्ज्या इति। पाखण्डशैवाद्यैः पाखण्डाश्च ते शैवाश्चेति कर्मधारयः गोबलीवर्दन्यायात् पाखण्डशब्दो वेदबाह्यपरो वा तदाद्यैः स्थापिता अर्चिताश्च भगवद्विग्रहा वर्ज्याः। नियमादन्यत्र नीतेरन्यत्र बद्धाः कर्मवश्याः सर्वदेवता वर्ज्याः नित्या अपि स्वतश्च भगवच्छरीरभावमन्तरेण च वर्ज्या नोपास्याः॥ ३०॥

गृहे यस्यान्यदेवार्चा व्यक्तो न च जनार्दनः।
न तस्य किञ्चिदश्नीयादपि वेदान्तवेदिनः॥ ३१॥

गृहे इति। किञ्चिदपक्कमपीत्यर्थः। अपि वेदान्तवेदिनः। किं पुनरन्यस्येति भावः। अपि क्रतुसहस्रिण इत्यपरः पाठः॥ ३१॥

वर्जयेदन्यदेवानामालयाद्युपसर्पणम्।
तथा गोपुरहर्म्यार्चायानास्त्राद्यवलोकनम्॥ ३२॥

वर्जयेदिति । आर्चा पूजा । यानं रथोत्सवादि अस्त्रं त्रिशूलादि ॥ ३२ ॥

गीतवादित्रघण्टादिशब्दानां श्रवणं तथा ।
कर्माणि च समस्तानि बाह्यान्याभ्यन्तराणि च ॥३३॥

गीतेति । बाह्यानि आलयाद्बहिः क्रियमाणानि । आभ्यन्तराणि आलये क्रियमाणानि । देवतान्तरसम्बन्धीनि कर्माणि वर्जयेदिति पूर्वश्लोकक्रिययान्वयः ॥ ३३ ॥

द्रव्याणां भुक्तभोगानां स्वीकारं स्पर्शनं तथा ।
भोगादीनां तदर्थं चाप्यर्थानां प्रतिपादनम् ॥ ३४ ॥

द्रव्याणामिति । भुक्तभोगानां देवतान्तरोपभुक्तानां द्रव्याणां स्वीकारम् आदानम् । तथा स्पर्शनं भूस्पर्शनं हस्तादिना तथा तद्भोग्यपेयादीनामर्थानां पदार्थानां तदर्थं रुद्राद्यर्थं प्रतिपादनं दानं च वर्जयेत् ॥ ३४ ॥

प्रणामं स्पर्शनं सेवां स्मरणं कीर्तनं तथा ।
निन्दाञ्च तद्भक्तिपराण्यप्येतानि विवर्जयेत् ॥ ३५ ॥

प्रणाममिति । प्रणामो नमस्कारः । स्पर्शनं तद्बिम्बस्पर्शनम् । सेवां सम्मार्जनोपलेपादिरूपाम् । स्मरणं विग्रहगुणादिविषयकं ध्यानम । कीर्त्तनं नामोच्चारणाद्यात्मकम् । निंदां देवतान्तरनिन्दान्निन्दायामपि तत्स्मरणादिति भावः । तद्भक्तिपराणि देवतान्तरभक्तिमूलानि एतानि प्रणामादीनि निन्दां च वर्जयेदित्यन्वयः ॥ ३५ ॥ इतिभक्तिविरुद्धाधिकारः॥

शंखचक्रोर्द्ध्वपुण्ड्राद्यैश्चिह्नैः प्रियतमैर्हरेः ।
रहितः सर्वधर्मेभ्यः प्रच्युतो नैनमाप्नुयात् ॥ ३६ ॥

अथ लक्ष्मविरुद्धवर्जनमाह-शंखेति । सर्वधर्मेभ्यः प्रच्युतः सर्वेषु धर्मेष्वधिकाररहितः एवं भगवन्तं नाप्नुयाद् उपायेऽप्यनधिकारप्रसंगे भगवन्तं नाप्नुयादित्यर्थः ॥ ३६ ॥

चक्राम्बुजगदाशार्ङ्गखड्गेभ्योऽन्यैर्हरेरपि ।
न लक्षणैर्देहच्चाङ्गान्नान्यदग्धोऽर्हति क्रियाम् ॥ ३७ ॥

चक्रेति । अम्बुजशब्दः शंखवाची भगवदायुधैरपि शंखचक्रगदाशार्ङ्गखड्गव्यतिरिक्तैराङ्कितोन्यदग्धश्चक्रादिपंचव्यातिरिक्तान्यलक्षणदग्धः क्रियां भगवत्कैङ्कर्यं नार्हति ॥ ३७ ॥

धारयेन्नान्यचिह्नानि विशेषेणाङ्कनं क्वचित् ।
धारणादन्यचिह्नानां महदाप्नोति किल्बिषम् ॥ ३८ ॥

धारयेदिति । अन्यचिह्नानि देवतान्तरचिह्नानि न धारयेत् क्वचिदप्यङ्गे तैरङ्कनं दाहं विशेषतो दाहं न धारयेत् । अन्यचिह्नानां देवतान्तरचिह्नानां धारणेन महत्किल्बिषं पारमैकान्त्यभङ्गरूपं प्राप्नोतीत्यर्थः । चक्रादिव्यतिरिक्तभगवच्चिह्नधारणेन विशेषतो नान्यदग्धोऽर्हति क्रियामिति प्रागेव निषिद्धत्वात् । भगवच्चिह्नव्यतिरिक्तानां धारणमपि निषिद्धमिति बोध्यम् ॥ ३८ ॥

अन्यचिह्नाङ्कितान्मर्त्यान् दूरतः परिवर्जयेत् ।
पयोऽस्थिचर्ममांसादि पशूनां चातिगर्हितम् ॥ ३९ ॥

अन्येति । अन्यचिह्नांकितानां मर्त्यानां छायास्पर्शोऽपि न कार्य इति भावः । पशूनाम् अन्यचिह्नाङ्कितानामिति वचनव्यत्ययेनानुषङ्गः । तेषां पयः क्षीरं वर्जयेत्, "रुद्रादिव्यपदेशिन्यो याश्च गावस्तदङ्किताः । तासां क्षीरमकर्मण्यं प्रयत्नेन विवर्जयेत्" इति स्मृत्यन्तरोक्तेः । अत्र पयःशब्दस्तद्विकाराणामप्युपलक्षणम् । यासां क्षीरमकर्मण्यं तद्विकारांश्चवर्जयेदिति स्मृतेः । अजखड्गादीनां चर्म कृष्णादीनां मांसमपि तादृशमेव अतिगर्हितमेवेति निन्दितमित्यर्थः ॥ ३९ ॥

वृक्षादीनां च सर्वेषामकर्मण्यं फलादिकम्।
अन्यचिह्नाङ्कितं चैव गृहक्षेत्रादिकं त्यजेत्॥ ४० ॥

वृक्षेति। अत्रादिशब्दो लतादिपरः। द्वितीय आदिशब्दोऽत्र पत्रादिपरः। अन्यचिह्नाङ्कितानां वृक्षादीनां पत्रपुष्पफलादिकं त्याज्यमित्यर्थः । अन्यचिह्नाङ्कितत्वमन्यार्थकल्पितानामप्युपलक्षणम्। क्षेत्रादीनामन्यचिह्नाङ्किताशिलादिमत्वम्॥ ४० ॥

वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घन्ततं तनुम्।
वक्रं स्वरूपं बद्धाग्रं छिन्नमूलं पदच्युतम्॥ ४१ ॥

वर्तुलमिति। वर्तुलं मण्डलीकृतम्। तिर्यक् तिरश्चीनं पुण्ड्रमच्छिद्रं छिद्ररहितं ह्रस्वम् 'ऊर्द्ध्वपुण्ड्रं ललाटे न कुर्वीत चतुरंगुलम्।उदरे हृदि कण्ठे च दशाष्टचतुरंगुलान्' इत्याद्युक्तदीर्घपरिमाणात् न्यूनपरिमाणं दीर्घमतिरिक्तपरिमाणं ततः 'त्रिधा सर्वत्र विस्तारश्चतुस्त्रिद्ध्यंगुलं क्रमादि' त्याद्युक्तविस्तारादधिकविस्तारं तनुन्ततोऽल्पविस्तारं वक्रमनृजुं विरूपमत्यसुन्दरम्बद्धाग्रं मिश्रिताग्रं छिन्नमूलं भ्रुवोर्मूले मेलनरहितं पदच्युतं पदं विहितस्थानं तस्मात्प्रच्युतम्॥ ४१ ॥

अशुभ्रं रूक्षमासक्तं तथानङ्गुलिकल्पितम्।
विगन्धमपसंख्यञ्च पुण्ड्रमाहुरनर्थकम्॥ ४२ ॥

अशुभ्रमिति। अशुभ्रमधवलम्। यस्यां हृदि धार्यमाणायां तत्र स्फोटाद्युत्पत्तिर्भवति तत्पुण्ड्रं रूक्षम्। आसक्तं पुण्ड्रान्तरेण मिश्रितम्। अनंगुलिकल्पितम् अंगुलिभिन्नेन साधनेन रचितम्। विगन्धं गंधरहितम्। अपसंख्यं 'त्रयोदश द्वादश वाप्यूर्द्ध्वपुण्ड्राणि धारयेत्। सूक्ष्मं चत्वारि षट्चाष्टावपि वांछन्ति केचन' इत्याद्युक्तप्रकारेण संख्यारहितं पुंड्रमनर्थकं धृतस्याप्यधृतप्रायत्वात् अप्रयोजकमाहुः॥ ४२ ॥

न चन्दनादिभिर्गन्धैः कर्त्तव्यं न च भस्मना ।
न मृद्भिश्चाप्रशस्ताभिरूर्द्ध्वपुण्ड्रं कदाचन ॥ ४३ ॥

न चन्दनेति।चन्दनादिभिर्गन्धैरिति विशेषणविशेष्यभावेनान्वयः । चन्दनं मलयजन्तदादिभिरादिशब्दादगुर्वादिकं गृह्यते गन्धशब्दो गन्धवदनुलेपनपरः। अप्रशस्ताभिर्मृद्भिर्विष्णोर्विरुद्धतया क्षेत्रे पर्वतादौ प्रशस्तयेत्यादि गुणरहिताभिरिति । न कदाचन आपद्यपीत्यर्थः ॥ ४३ ॥

तमसो भस्म रजसो गन्धः सत्त्वस्य मृत्तिका ।
तस्माद्भस्मादिभिर्नेच्छेदेकान्ती शुद्धिमात्मनः ॥ ४४ ॥

तमस इति । भस्म तमसः कारणमिति शेषः गन्धो रजसः कारणम् । मृत्तिकासत्त्वस्य कारणम् तस्माद्रजस्तमोहेतुत्वात् भस्मादिभिः पुण्ड्रसिद्धिमात्मनो नेच्छेत् किन्तु सत्त्वकारणभूतया मृदोर्द्ध्वपुण्ड्रमिच्छेदिति भावः। शुद्धिमिति पाठे पुण्ड्रजन्यां शुद्धिमित्यर्थः ॥ ४४ ॥

रौद्रव्रतादिनियतैस्तथा मोहनतान्त्रिकैः ।
शवेन्धनकरीषादिभस्मभिः कर्म साध्यते ॥ ४५ ॥

रौद्रेति । रौद्रव्रतादिनियतैः रुद्रादिव्रतनिक्षिप्तैः मोहनतान्त्रिकैरित्यनेन वेदविरुद्धतन्त्रनिष्ठा दूषिता । शवेन्धनकरीषादिभस्मभिः भस्मशब्दस्य शवेन्धनभस्मना करीषादिभस्मना चेत्यन्वयः। कर्म साध्यते कर्माङ्गतया शवेन्धनादिभस्माभिः पुण्ड्राणि बिभ्रतीत्यर्थः ॥ ४५ ॥

मूलजं गन्धसारादि मृगनाभ्यादि जीवजम् ।
मनःशिलादि धातूत्थं त्रयं पुण्ड्रेषु कामिनाम् ॥ ४६ ॥

मूलजमिति । मूलप्रभवं यद्गंधसारादि; जीवजं प्राण्यङ्गोत्थम् । यन्मृगनाभ्यादि कस्तूर्यादि; धातूत्थं धातुजन्यम्;

यन्मनःशिलादि; तदेतत्त्रयं कामिनां पुण्ड्रेषु विहितानीति शेषः ॥ ४६ ॥

कुर्याद्रक्षाविधानञ्च नान्यैः पञ्च विना मृदः।
गोरजो गोकरीषञ्च चूर्णं हारिद्रमेव च ॥ ४७ ॥

कुर्यादिति। पञ्चमृत्तिकाः पंचविधमृत्तिकाः ताश्च शास्त्रेषु विहिताः पंचविधमृत्तिकाः। तथा च ब्रह्मरात्रे "तस्मात्सर्वप्रयत्नेन संग्राह्याः पञ्चमृत्तिकाः ॥ पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ॥ सिन्धुतीरेऽथ वल्मीके तुलसीमूलमृत्तिकाः ॥ मृद एतास्तु संग्राह्या वर्जयेदन्यमृत्तिकाः" इति गोरजो गोकरीषं हरिद्राचूर्णं पञ्चमृद्भो वा विना अन्यैर्भस्मादिभिः रक्षाविधानञ्च न कुर्यात् ॥ ४७ ॥

न च भागवतः कुर्यादूर्द्ध्वपुण्ड्रममृत्तिकम्।
धारणादेव मृत्स्नायाः प्रीयते धरणीधरः ॥ ४८ ॥

न चेति। अमृत्तिकं मृत्तिकारहितम् ऊर्ध्वपुण्ड्रं न कुर्यात्। धरणीधर इति साभिप्रायम्। धारणीधरत्वादेव मृद्धारणात्प्रीयत इति ॥ ४८ ॥

यः प्रपन्नोऽपि लक्ष्मीशं न चक्रादिभिरंकितः।
न वहत्यूर्द्ध्वपुण्ड्रं वा नैकान्त्यन्तस्य विद्यते ॥ ४९ ॥

य इति। लक्ष्मीशं प्रपन्नोऽपि यश्चक्रादिभिरङ्कितो वा नस्यादूर्द्ध्वपुण्ड्रं वा न वहति न बिभर्त्ति तस्यैकान्त्यं न विद्यते ॥ ४९ ॥

राजसाँस्तामसाँश्चैव व्यपदेशान्विवर्जयेत्।
ध्रुवं व्यपेति भक्तोऽपि व्यपदेशैरसात्त्विकैः ॥ ५० ॥

राजसानिति। व्यपदेशान्नामानि राजसतामसनामानि न बिभृयादित्यर्थः। असात्त्विकैः सात्विकाभिन्नै राजसतामस-

व्यपदेशैर्भक्तोऽपि व्यपैति विशेषेणापैति प्रच्युतो भवतीति यावत् ॥ ५० ॥

सात्त्विकं नाम शुद्धानामशुद्धानान्तु राजसम् ।
बाह्यादितंत्रसिद्धानां देवादीनान्तु तामसम् ॥ ५१ ॥

सात्त्विकमिति । राजसतामसनामानि वर्जयेदित्युक्तं 'व्यपदेशैरसात्त्विकैः' इति । प्रतियोगितया सात्त्विकान्यर्थादिहीनानि कानि तानि सात्त्विकानि चिह्नानि तदितराणि राजसतामसानीत्याकांक्षायामाह । शुद्धानामनन्ययाजिनां नाम सात्विकमशुद्धानामन्ययाजिनां नाम राजसं नाम बाह्यादि तन्त्रसिद्धानामवैदिकानां नाम तामसं नाम ॥ ५१ ॥

दास्यं हि नामकरणमपि तद्वाचकैर्विना ।
गुणकर्मादिभिः स्वैश्च रूढं श्लाघ्यैः सनातनम् ॥ ५२ ॥

नामकरणतन्नामधारणतद्धार्यनियमानाह—दास्यमिति । हि शब्दः 'पद्ममञ्जलिविच्छेद उरोविन्यस्तमक्षरम् । तन्नामकरणञ्चेति बाह्यमेतच्चतुर्विधम्' इति प्रमाणप्रसिद्धिं द्योतयति । तन्नामधारणस्य तद्दास्यापादकत्वादशुद्धानामवैदिकानाञ्च नामानि न धार्याणीति पूर्वोक्तार्थे हेतुरुक्तः । शुद्धानां नामकरणस्य तद्दास्यरूपत्वात् तत् श्लाघ्यमिति भावः । तद्वाचकैर्विना शुद्धानां बाधकैर्नामभिर्विनापि स्वीयैः स्वकीयैः श्लाघ्यैर्दास्यविज्ञापकतया श्लाघनीयैर्गुणकर्मादिभिर्ज्ञानादिभिः गुणैः प्रवचनादिभिः कर्मभिश्च रूढं सङ्केतितं 'वैष्णवदासः' 'वेदान्ताचार्यः' इत्यादिकमपिनाम सतां मतं धार्यमिति अभिमतं स्यात् ॥५२॥

युग्मैर्विवर्त्तितं रौद्रमयुग्मैर्ब्राह्ममुच्यते ।
उभयैस्तैर्व्यतिस्यूतमयुग्मैर्वैष्णवं गुणैः ॥ ५३ ॥

उपवीतं सदा ब्राह्मं वैष्णवं कटिबन्धनम्।
उभयं धारयेद्रौद्रं साधयन्कर्म तामसम्॥ ५४॥

युग्मैरिति। उपवीतं ब्राह्मं भवेत्। गुणत्रयरूपत्वादिति भावः। कटिबंधनन्तु वैष्णवं युग्मयुग्ममयैः पञ्चभिर्गुणैः व्यतिस्यूतत्वादिति भावः। उभयं ब्राह्ममुपवीतं वैष्णवव्यतिस्यूतं कटिबन्धनञ्च धारयेद्रौद्रं तर्हि केन धार्यमित्यत आह। तामसं कर्म साधयन्कुर्वन्रौद्रं युग्मं विवर्त्तितं कटिबन्धनं धारयेदिति शेषः। रौद्रस्य तामसकर्माङ्गत्वात्सात्त्विकं कर्माचरता न धार्यमिति भावः॥ ५३॥ ५४॥

तामसं नग्नमेकन्तु राजसं वसनद्वयम्।
कौपीनसहितं तत्तु सात्त्विकं मुनिभिः स्मृतम्॥ ५५॥

तामसमिति। एकं वसनं नग्नं नग्नप्रायं तामसं, वसनद्वयं राजसं, कौपीनसहितं तद्वसनद्वयं मुनिभिः सात्त्विकं स्मृतम् अतः कौपीनसहितं वस्त्रद्वयं धार्यमित्यर्थः॥ ५५॥

दर्भाक्षसूत्रवस्त्रांकनामपुण्ड्रविभूषणम्।
अन्यत्तु तामसं सर्वं विशेषेण विवर्जयेत्॥ ५६॥

मोहनार्थं प्रवृत्ततामसतन्त्रसिद्धं दर्भादिकं त्याज्यमित्याह—दर्भेति। दर्भास्तामसक्षेत्रादुत्पन्नाः। अक्षाणि रुद्राक्षादीनि वस्त्रं धातुविशेषरञ्जितम् अन्यच्चिह्नाङ्कितं वा सूत्रमयुग्मगुणनिर्मितकटिबन्धनादि अङ्कस्त्रिशूलाद्यङ्कनं नाम च अशुद्धदेवतान्तरसम्बन्धि पुण्ड्रं तिर्यगादि भूषणं त्रिशूलाद्याकारभूषणम् आभरणम् अन्यदितोऽतिरिक्तमपि तामसं सर्वं विशेषेण विवर्जयेत्॥ ५६॥

अन्यतन्त्रैकसिद्धानि काम्यानि विविधानि च।
द्रव्यनामादिरूपाणि लक्षणानि विवर्जयेत्॥ ५७॥

तामसतन्त्रमात्रविहितानि कर्मादीन्यपि त्याज्यानीत्याह-अन्येति। विविधानि कर्माणि शिवरात्र्युपवासादीनि तथा तन्त्रमात्रव्यवहृतानि द्रव्यनामानि तन्त्रैकसिद्धानि रूपाणि द्रव्याणामाकारविशेषांश्च विशेषेण विवर्जयेत्। इतरतन्त्रमात्र-सिद्धैर्नामभिर्द्रव्याणि न व्यवहर्त्तव्यानि तान्यपि तन्त्रमात्र-विहिताकारवन्त्यपि वा न कुर्यादित्यर्थः ॥ ५७ ॥ इति लक्ष्म-विरुद्धाधिकारः ॥

गुरोरपह्नवात्त्यागात्साम्याद्विस्मरणादपि।
लोभमोहादिभिश्चान्यैरपचारैर्विनश्यति ॥ ५८ ॥

अथ सत्सेवाविरुद्धपरिहारमाह—गुरोरिति। साम्यात्सा-म्यानुसन्धानादित्यर्थः। लोभः गुरोर्वृत्तिकर्मस्वस्थद्रव्ये सत्यपि तस्मैतदप्रदानहेतुर्दुर्गुणः। मोहः तद्वैभवाज्ञानादिरूपः। विन-श्यति विशेषेण नश्यति ॥ ५८ ॥

विशेषाद्विष्णुभक्तेषु दम्भं लोभं नृशंसताम्।
क्रोधमीर्ष्यां मदं मानं साम्यञ्च परिवर्जयेत ॥ ५९ ॥

विशेषेति। दम्भः अननुष्ठायैव धर्मानुष्ठानख्यापनम्। नृशंसता दयाभावः। ईर्ष्या परातिशयासहिष्णुता। मानोऽहङ्कारः। साम्यं साम्यानुसन्धानम् ॥ ५९ ॥

स एकान्त्यनन्यविमुखो हरिं सर्वेश्वरं प्रभुम्।
यः समाश्रयते किंचित्फलमभ्यर्थयन्नरः ॥ ६० ॥

वैष्णवेषु दम्भादिकं त्यजेदित्युक्तं के नाम वैष्णवा इत्याकां-क्षायाम् एकान्तिपरमैकान्तिनौ वैष्णवाविति विवक्षुः क्रमेण एकान्तिपरमैकान्तिनोर्लक्षणमाह—स इति। अन्यविमुखः देव-तान्तरविमुखः। किञ्चित्फलं भगवत्पादभक्तिज्ञानकैङ्कर्यतादि-

तत्वैराग्यव्यतिरिक्तं यत्किञ्चित्फलमभ्यर्थयन् सर्वेश्वरं हरिं यत्समाश्रयेत्स एकान्तीत्यर्थः ॥ ६० ॥

न्यस्ताशेषभरः श्रीशे यस्तु दास्यैकजीवितः ।
स एष परमैकान्ती द्वावेतौ वैष्णवौ स्मृतौ ॥ ६१ ॥

न्यस्तेति । न्यस्ताशेषभरः न्यस्तात्मात्मीयभरः । दास्यैकजीवितः दास्यातिरिक्तफलविमुखः । अनन्यदैवत्यम् एकान्तिपरमैकान्तिनोर्द्वयोरपि समानम् । अनन्यप्रयोजनत्वं परमैकान्तिनोऽधिकं द्वावेतौ उक्तावेकान्तिपरमैकान्तिनौ द्वौ वैष्णवौ स्मृतौ ॥ ६१ ॥

अन्ये त्ववैष्णवाः सर्वे मनुष्या जिह्मदृष्टयः ।
असतस्तान्विदुर्देवास्तैः सतां नास्ति सङ्गमः ॥ ६२ ॥

अन्ये इति । अन्ये एकान्तिपरमैकान्तिनोर्व्यतिरिक्ताः जिह्मदृष्टयः कुटिलबुद्धयः ॥ ६२ ॥

अवैष्णवात्स्वधर्मस्थाद्वैष्णवः स्खलितोऽपि सन् ।
श्रेयानेव हि मन्तव्यो मूलात्स न परिच्युतः ॥ ६३ ॥

अवैष्णवादिति । स्वधर्मस्थात्स्ववर्णाश्रमधर्मानिरतादवैष्णवाद्वैष्णवः स्खलितोऽपि स्ववर्णधर्मात्प्रच्युतोऽपि सन् श्रेयान् श्रेष्ठतमो मन्तव्यः एवकारेण नियम्यते । तत्र हेतुः । मूलात्स न परिच्युत इति । स वैष्णवः मूलात्परिच्युतो न हि यतः ॥ ६३ ॥

स्वेशसम्बन्धविज्ञानं मूलमन्याः क्रियाः पुनः ।
तस्य शाखाः प्रशाखाश्च काश्च ता मूलवर्जिताः ॥६४॥

किं मूलम् का शाखा ? इत्याकांक्षयामाह–स्वेशेति । स्वस्य ईशस्य च सम्बन्धविज्ञानं स्वस्वामिभावलक्षणसम्बन्धज्ञानं मूलमन्याः क्रियाः तस्य शाखाः प्रशाखा उपशाखाश्च मूलवर्जिताः मूलरहितास्ताः शाखाः न काश्चिदपि व्यर्था इत्यर्थः ६४

बाह्यानां जिह्मदृष्टीनामज्ञानां संशयात्मनाम् ।
नालोकमपि कुर्वीत न च तैः किञ्चिदाचरेत् ॥ ६५ ॥

प्रसङ्गादसत्सङ्गवर्जनमाह—बाह्येति । बाह्यानां विपरीतज्ञानानां जिह्मदृष्टीनामन्यथाज्ञानवतामज्ञानां ज्ञानाभाववतां संशयात्मनां संशयचित्तानां तत्त्वहितपुरुषार्थेषु अज्ञानान्यथाज्ञानवतामालोकं दर्शनमपि न कुर्वीत तैर्बाह्यादिभिः किञ्चिल्लौकिकदानादिकपि नाचरेत् शास्त्रीयं यज्ञदानादि किन्तु किमुतेति भावः ॥ ६५ ॥

प्रपन्नैश्चान्यभजनाद्युक्तापायसमन्वितैः ।
वैष्णवो वर्जयेत्सङ्गं प्रच्युतास्ते ह्यवैष्णवाः ॥ ६६ ॥

वैष्णवः स्खलितोऽपि सन् श्रेयानित्युक्तम् । तद्वत्प्रपन्नस्य देवतान्तरभजनादिष्वपि संस्पर्शोऽपि श्रेयानेव स्यादिति प्राप्ते तत्राह—प्रपन्नैरिति । अन्यभजनाद्युक्तापायसमन्वितैर्देवतान्तरभजनप्रभृतिभिः शास्त्रोक्तैरपायैः समन्वितैः संयुक्तैः प्रपन्नैरपि सङ्गं वैष्णवो वर्जयेत् । तत्र हेतुमाह । प्रच्युतास्ते ह्यवैष्णवाः इति । प्रच्युताः स्वधर्मात् च्युतास्ते अन्यभजनान्विताः अवैष्णवाः ऐकान्त्यरहिता यतः ॥ ६६ ॥

दैवेषु पित्र्येषु तथाधर्मार्थेष्वितरेषु च ।
अवैष्णवं न गृह्णीयात्पात्रं दानेषु कर्हिचित् ॥ ६७ ॥

न च तैः किञ्चिदाचरेदित्युक्तं विवृणोति—दैवेष्विति । दैवेषु चार्थेषु पित्र्येषु पित्रर्थेषु धर्मार्थेषु धर्मप्रयोजनकेषु इतरेषु अर्थाद्यर्थेषु लौकिककर्मसु अवैष्णवम् । अनैकान्तिनं न गृह्णीयाद्याजकत्वेन भोक्तृत्वेन सहायत्वेन वा न गृह्णीयात । कर्हिचित् क्वचिदपि दानेषु पात्रं न गृह्णीयात् पात्रत्वेन न गृह्णीयात् । यद्वा देवार्थेषु न गृह्णीयात् ॥ ६७ ॥

न कश्चित्प्रतिगृह्णीयाद्विष्णुभक्तिविवर्जितात् ।
पानीयं पक्वमन्नञ्च विशेषण विवर्जयेत् ॥ ६८ ॥

नेति । पानीयं पक्वान्नं च विशेषेण विवर्जयेत् । पापाधिक्यादिति भावः ॥ ६८ ॥

विद्यार्थसंप्रयोगोऽपि प्राकृतैर्न कथंचन ।
विवादोऽपि न कर्त्तव्यः क्रीडासंकथनानि च ॥ ६९ ॥

विद्येति । विद्यार्थसंप्रयोगोऽध्ययनाध्यापनलक्षणः । विवादः तत्त्वनिश्चयात्मको वादः । तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डेबीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदित्यनेन अक्षपादे न जल्पवितण्डयोरनुज्ञानाद्यद्वा विवादो व्यर्थकलहः क्रीडासंकथनसाहचर्यात् । क्रीडासंकथनानि इष्टालापाः ॥ ६९ ॥

न चैकस्मिन्भजेत्साम्यं कर्मण्यैकान्त्यवर्जितैः ।
न चैषां कर्मकुर्वीत न स्वकर्म च कारयेत् ॥ ७० ॥

न चेति । एकस्मिन् लौकिके वैदिकेऽपि कर्मणि ऐकान्त्यवर्जितैः साम्यं न भजेत् । अनेनेदं कृतम् अहप्येष इव एतदनुतिष्ठामीत्यनुसन्धानेन न तदनुतिष्ठेदित्यर्थः । तेषामैकान्त्यवार्जितानां कर्म लौकिकमलौकिकं वा स्वयं न कुर्वीत । तैरैकान्त्यवर्जितैः स्वकर्म वैदिकं लौकिकं वा न कारयेत् यद्वा, उत्तरार्धस्य अवैष्णवस्य आर्त्विज्यं स्वयं न कुर्यात् तेनापि स्वार्त्विज्यं न कारयेदित्यर्थः ॥ ७० ॥

पंक्तौ समाजे ग्रामादौ न त्वभागवतोत्तरे ।
वसेदेकत्र भवने नैकेनाप्यसता सह ॥ ७१ ॥

पंक्ताविति । अभागवतोत्तरे समाजे । इदं विशेषणं ग्रामस्य लिङ्गव्यत्ययेन पंक्तेरपि यस्यां पंक्तौ समाजे ग्रामे वा

अभागवता अधिका विरला वा भागवतास्तस्यां पङ्क्तौ समाजे ग्रामे वा न वसेत्। भागवतानां समसंख्याकत्वे अधिकसंख्याकत्वे वा पङ्क्तिसमाजग्रामेषु वासो न दोषावह इति भावः। भवने गृहे तु भागवताधिक्येऽपीति भावः असता एकेनापि समं न वसेत् न तिष्ठेत् ॥ ७१ ॥

प्रीत्यप्रीतिसमायोगं स्पर्शं भुक्तिं सहोषिताम्।
स्वैरप्यैकान्त्यविमुखैरघवर्जं विवर्जयेत् ॥ ७२ ॥

प्रीत्येति। प्रीत्यप्रीतिसमायोगं कल्याणादिहर्षकाले अभिमतं मरणादिदुःखकाले वा, हर्षशोकाद्यनुपालनाद्यर्थं तैः सङ्गमं स्पर्शम्। प्रसिद्धम्। भुक्तिं भोजनम्। सहोषिताम् एकस्मिन्नासने उपवेशनम् इदं च नवविधसङ्करस्याप्युपलक्षणम्। 'नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सह' इत्युक्तेः। इदं सर्वमैकान्त्यविमुखैः स्वैः स्वैः स्वकीयैरपि सह अघवर्ज्जं विवर्जयेत्। अघं तु परिपालनीयमेवेत्यर्थः। अघं जननमरणनिबन्धनमाशौचम् ॥ ७२ ॥

अवैष्णवं न वन्देत नार्चयेद्विधिपूर्वकम्।
संप्रश्नासनदानादि कुर्याद्वाप्यानृशंस्यतः ॥ ७३ ॥

अवैष्णवमिति। न वन्देत न नमस्कुर्यात्। विधिपूर्वकं नार्चयेत्। अर्घ्यादिभिर्न पूजयेत्। संप्रश्नः कुशलप्रश्नः। आसनमुपवेष्टुमासनदानम् तदादिकम् आनृशंस्यमसतोऽपि न कुर्यात्। 'संप्रश्नासनदानादि न कुर्यादानृशंस्यत' इति पाठानुसारेणेदं व्याख्यानम्।' संप्रश्नासनदानादि कुर्याद्वाप्यानृशंस्यत, इति पाठान्तरम्। अत्र यद्युक्तं तद्ग्राह्यम् ॥ ७३ ॥

अभक्तमच्युतस्यापि नावमन्येत कञ्चन।
हितं वा बोधयेत्साधोर्दद्याद्वा किञ्चिदीप्सितम् ॥ ७४ ॥

अभक्तमिति। अच्युतस्य अभक्तम् अच्युतविषयकभक्तिरहितं कञ्चिन्नावमन्येतापीति अवमानं न कुर्यादित्यर्थः। अपि शब्दः संप्रश्नासनदानादि विधिनिषेधं समुच्चिनोति। साधोरभक्तस्याप्याभिमुख्यवतः हितं बोधयेद्वाशब्देन हितबोधनाभावरूपकल्पान्तरसंग्रहः क्रियते एवमेव दद्याद्वा किञ्चिदीप्सितमित्यत्रापि वाशब्दार्थः स्वयमानृशंस्यवाँश्चेदभक्तस्याभिमुख्ये हितबोधनं किञ्चिदभीप्सितप्रदानमपि न दोषावहमित्यर्थः ॥ ७४ ॥

न च मैत्रीं प्रकुर्वीत वैष्णवः प्राकृतैः सह।
क्वायमच्युतसक्तात्मा क्व ते विषयचंचलाः ॥ ७५ ॥

मैत्रीं न प्रकुर्वीतेत्यत्र हेतु माह—नचेति। क्वायमित्यादिना भिन्नप्रकृतिकत्वान्मैत्री न युज्यत इति भावः ॥ ७९ ॥

असतां गुणकर्माणि नानुमोदेत किंचन।
स्मरणादपि यत्तेषां महदाप्नोति किल्बिषम् ॥ ७६ ॥

असतामिति। गुणा औदार्यादयः। कर्माणि अरिनिरसनादीनि न तु शास्त्रविहितानि धर्मानुमोदनस्य विहितत्वादादिशब्दाद्देहबलादिकं गृह्यते गुणकर्माणि नानुमोदेत। तत्र हेतुमाह स्मरणादिति। यद्यस्मात् कारणात् तेषामसतां स्मरणादपि महत्किल्बिषं भवति किम्पुनः स्मरणादिकृतेन गुणकर्माद्यनुमोदनेनेति भावः ॥ ७६ ॥

विशिष्टः परमैकान्ती ज्ञानवैराग्यभक्तिभिः।
तादृशैरेव कुर्वीत सह संकथनादिकम् ॥ ७७ ॥
उक्तान्येतानि सर्वाणि योऽवमन्येत मूढधीः।
स एष तमसोऽभ्येति पारमैकान्त्यवर्जितः ॥ ७८ ॥

तर्हि परमैकान्तिकैः सह संकथनादिकं कुर्यादित्यपेक्षाया- माह-विशिष्ट इति द्वाभ्याम् । ज्ञानवैराग्यभक्तिभिर्विशिष्ट इत्यन्वयः । तादृशैः ज्ञानवैराग्यविशिष्टैः ॥ ७७ ॥ ७८ ॥

अथ वृत्तिमिमां सम्यक् कुर्वाणो विगतव्यथः ।
विसृज्य देहं प्राप्नोति तद्विष्णोः परमं पदम् ॥ ७९ ॥

अथेति। इमां वृत्तिं पूर्वोक्तां विहिताचाराध्यात्मिकाम्॥७९॥ इति सत्सेवाविरुद्धाधिकारः ।

अशक्तमपि च स्मर्तुमन्ते पूर्वकृतं स्मरन् ।
स्वयमेव परं धाम स्वयं नयति माधवः ॥ ८० ॥

ननु वृत्तिं शश्वत्सदाकुर्वाणः देहं विसृज्य तत्प्रमाणप्रसिद्धं विष्णोः परं पदं प्राप्नोतीत्युक्तं नतद्युज्यते । 'यं यं वापि स्मरन् भाव ' मित्यस्यावश्यकत्वाभिधानाच्छरीरावसानदशायां धातुसंक्षोभेण स्मरणाशक्तेः सम्भावितत्वात्कथं देहावसाना- नन्तरं मोक्ष इति निश्चेतुं शक्य इत्याशङ्कायामाह-अशक्तमिति। अन्ते शरीरावसानावश्यंभावावसरे स्मर्तुं भगवन्तं स्मर्तुमशक्त- मपि च जनं प्रपन्नं माधवः श्रियः पतिः पूर्वकृतं पूर्वं चेतनेन कृतं प्रपदनं स्वयमेव स्मरन् परं धाम परमं पदं नयति। 'ततस्तु म्रियमाणं तं काष्ठपाषाणसंनिभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिमि' त्याद्यत्रानुसन्धेयम् ( १ ) ॥ ८० ॥

न खल्वपि दशादेशकालहेतुविपर्ययैः ।
प्रपत्तुस्त्यक्तदेहस्य परा यात्रा विहन्यते ॥ ८१ ॥

नखल्विति । दशा शुचित्वाद्यवस्था । देशः पुण्यक्षेत्रादिः । काल उत्तरायणादिः । दशादेशकालरूपाणां हेतूनां विपर्ययैरपि

---

( १ ) यदि वातादिदोषेण मद्भक्तो मां च विस्मरेत् । तर्हि स्मराम्यहं भक्तन्न- यामि परमां गतिमित्याद्यादिपदेन संगृह्यते ॥

अभावैः सहापि त्यक्तदेहस्य प्रपत्तुः प्रपन्नस्य परा यात्रा अर्चिरादिमार्गेण गमनं न विहन्यते । खलु इत्यनेन 'रथ्यान्तरे मूत्रपुरीषमध्ये चण्डालवेश्मन्यथवा स्मशाने । कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभते च मुक्तिम् ॥' 'यतश्चायनेऽपि दक्षिण' इत्यादि प्रमाणप्रसिद्धिर्द्योत्यते ॥ ८१ ॥

अर्चिरादिकया गत्या तत्र तत्रार्चितः सुरैः ।
अतीत्य लोकानभ्येति वैकुठं वीतकल्मषः ॥ ८२ ॥

अथार्चिरादिगतिमाह–अर्चीति । अर्चिरर्चिःपुरुष आदिः प्रथमः अतिवाहको यस्यां सा अर्चिरादिका तया गत्या तत्रतत्रातिवाहकस्थले सुरैरर्चिर्दिनपूर्वपक्षोत्तरायणसंवत्सरवातसूर्यचन्द्रविद्युत्पुरुषवरुणेन्द्रधातृभिरर्चितः पूजितः सन् लोकान् तल्लोकानतीत्य वैकुण्ठमभ्येति प्राप्नोति ॥ ८२ ॥

अथैनममरास्तत्र सह दिव्याप्सरोगणैः ।
सोपहाराः प्रहर्षेण प्रत्युद्गच्छन्त्युपागतम् ॥ ८३ ॥

अथेति । अथ वैकुण्ठलोकप्राप्त्यनन्तरम् । तत्र वैकुण्ठलोके दिव्याप्सरोगणैः सह माला चूर्णाञ्जनक्षौमभूषाहस्तैरप्सरसाङ्गणैः सह दूराद्वैकुण्ठवासिनः सूरयः सोपहाराः उपहारसहिताः सन्तः उपागतं प्राप्तमेतं प्रपन्नं हर्षेण दूरतः प्रत्युद्गच्छन्ति ॥८३॥

ततः प्राप्य जगन्नाथं प्रणिपत्य श्रियः पतिम् ॥
आसीनमासने दिव्ये भक्तैर्भागवतैर्वृतम् ॥ ८४ ॥

ततइति । दिव्ये पादगात्राद्यात्मकधर्माधिसूरिनिर्मिते ॥ ८४ ॥

आप्लुतः सस्मितालापमधुरालोकनामृतैः ।
पादमूलं भजत्यस्य दास्यैकानन्दनिर्भरः ॥ ८५ ॥

आप्लुत इति । सस्मिताः स्मितपूर्वका आलापाः सूक्तयः मधुराणि मनोहराणि आलोकनानि च अमृतानि तैराप्लुतः अस्य

श्रियः पतेर्दास्यैकानन्दनिर्भरः आनन्दपरिपूर्णः सन् पादमूलम्भजति सेवते ॥ ८५ ॥

स च सर्वेषु लोकेषु तमेवाभ्यनुसंचरन् ॥
संमोदते समगुणः कामान्नी कामरूपधृक् ॥ ८६ ॥

स चेति। स च मुक्तश्च तमेवाभ्यनुसंचरन् कामान्नी, कामरूपमनुसञ्चरान्निति श्रुतिरत्रानुसन्धेया । समगुणः भगवद्गुणतुल्यासंकुचितज्ञानादिगुणकः । कामान्नी, काम्यन्त इति कामाः कल्याणगुणाः। त एवान्नमदनीयं भोग्यं तदस्यास्तीति कामान्नी इदं चोपलक्षणम्। गुणविभूतिविशिष्टभगवदनुभवानन्दभारित इत्यर्थः।कामरूपधृक्स 'एकधा भवति द्विधा भवति' इति प्रक्रियया एकधा दशधा शतधा सहस्रधा स्वसङ्कल्पादात्तकिङ्करविग्रहः सन् सम्मोदते। समित्येकीकारे तेन सह तुल्यभोगो मोदत इत्यर्थः। तथा च शारीरकं सूत्रम् "भोगमात्रलिङ्गाच्च" इति ॥ ८६ ॥

अथेह बान्धवास्तस्य गतस्य परमां गतिम् ।
वैष्णवास्त्वभिनन्देयुः पुण्यामवभृथक्रियाम् ॥ ८७ ॥

अथ प्रपन्नस्य मोक्षप्राप्त्यनन्तरं तदीयानां कर्त्तव्यविशेषमाह–अथेति। लोके परमामुत्कृष्टां गतिं गतस्य प्राप्तस्य प्रपन्नस्य वैष्णवास्तस्य पुण्यामवभृथक्रियां 'मृतिर्यन्मरणं तदवभृथ' इति श्रुतेरभिनन्देयुः। हर्षेणोपलालयेयुः। भागवतमृतेः पुण्यत्वं च 'यत्तु ब्रह्मविदा त्यक्तमपि तन्मङ्गलं वपुः । स्पृष्ट्वा विमुच्यते ब्रह्महत्यये' त्यादिषु प्रसिद्धम् ॥ ८७ ॥

क्रियते चास्य पुत्राद्यैर्यत्किमप्यौर्द्ध्वदैहिकम् ।
तत्सर्वं प्रियभक्तस्य विष्णोः प्रीतिकरं परम् ॥ ८८ ॥

पुत्रादिभिः क्रियमाणोपसंस्कारोऽपि केवलभगवन्मुखोल्लास-फलक इत्याह–क्रियत इति । प्रियः भक्तो यस्य तस्य प्रियभक्तस्य । इदं च साभिप्रायं विशेषणम् ॥ ८८ ॥

गुरूणामन्तिमतिथौ जन्मर्क्षे श्रवणेऽपि वा ।
हरिमभ्यर्चयेद्भक्त्या तद्भक्तांश्च विशेषतः ॥ ८९ ॥

शिष्याणां कर्त्तव्यविशेषमाह–गुरूणामिति । अन्तिमतिथौ मरणदिने जन्मर्क्षे गुरूणां जन्मनक्षत्रे॥८९॥इति गत्यधिकारः॥

ज्ञानकर्मक्रियामन्त्रध्यानयोगगतिक्रमाः ।
विस्तरेण मया पूर्वमुक्तास्तत्रापि ते समाः ॥ ९० ॥

ज्ञानमिति । अत्रप्रपञ्चेऽपि उपायत्वबुद्धिं विहाय प्रपन्नेनापि सर्वमनुष्ठेयमिति भावः ॥ ९० ॥

उपासनविधौ धर्मा ये चान्यैः परिकीर्तिताः ।
न्यस्तात्मनस्तु तान्सर्वान्फलान्येव निबोधत ॥ ९१ ॥

उपासनेति । अन्यैः स्वव्यतिरिक्तैः मुनिभिर्न्यस्तात्मनः प्रपन्नस्य फलान्येव न तूपायान्निबोधत ॥ ९१ ॥

अभ्यर्थितो जगद्धात्र्या श्रिया नारायणः स्वयम् ।
उपादिशदिमं योगमिति मे नारदाच्छ्रुतम् ॥ ९२ ॥

प्रपत्तियोगस्य सम्प्रदायमाह–अभ्यर्थित इति जगद्धात्र्या जगन्मात्रा इमं योगं पूर्वमुक्तं प्रपत्त्युपायम् ॥ ९२ ॥

इति हस्तपदे साङ्ख्यं शास्त्रं गुह्यतमं परम् ।
शिरश्चैतन्मयोक्तायाः संहितायाः भविष्यति ॥ ९३ ॥

इतीति । इति अनेन प्रकारेण प्रवृत्ते गुह्यतमे देवानां गुह्यतमे देवानां गुह्यम् "स एवं वेद ब्राह्मणो महिमानमेति" इति

श्रुतेरत्यन्तगुह्यम् एतच्चतुरध्यायात्मकं मयोक्तायाः संहितायाः भारद्वाजसंहितायाः ॥ ९३ ॥

संहितोपनिषद्यस्मिंश्छास्त्रे ज्ञेयान्यनुक्रमात् ।
आदौ न्यासः फलश्चास्य तदुपायश्च संग्रहः ॥ ९४ ॥

संहितेति । उक्तानर्थानतुक्रम्य संहितोपनिषदि भारद्वाजोपनिषद्रूपे अस्मिन् चतुरध्यायात्मके शास्त्रे ॥ ९४ ॥

ततो न्यासस्य चाङ्गानां निर्णयः सविरोधिनाम् ।
ततश्च फलरूपाया वृत्तेरङ्गानि विस्तरात् ॥ ९५ ॥

तत इति अङ्गानामानुकूल्यसङ्कल्पादीनां सविरोधिनाम् । आनुकूल्याद्यङ्गविरोधिसहितानाम् ॥ ९५ ॥

वृत्त्यङ्गमेवं च ततो निन्द्यहानं गतिस्तथा ।
एवं चतुर्भिरध्यायैः कथितानि विशेषतः ॥ ९६ ॥

वृत्त्यङ्गमिति । निन्द्यहानिं प्रतिषिद्धविवर्जनम् ॥ ९६ ॥

इत्थं प्रसादाद्देवर्षेर्नारदस्यामितौजसः ।
कृतोऽत्र वेदवेदान्तपञ्चरात्रार्थनिर्णयः ॥ ९७ ॥

इत्थमिति । अमितौजसः महातपस्विनः । अत्र चतुरध्याये वेदानां वेदान्तानां पञ्चरात्रस्य च योऽर्थः प्रधानतात्पर्यविषयः तस्य शास्त्रकृतनिर्णयः कृतः ॥ ९७ ॥

इत्येतत्परमं गुह्यं श्रुत्वा भागवतोत्तमाः ।
मुनयः पूजयांचक्रुर्भरद्वाजं तपोनिधिम् ॥ ९८ ॥

इतीति । परमं रहस्यं वेदगुह्यम् ॥ ९८ ॥

श्रुत्वादौ नारदात्सम्यग्भरद्वाजोऽर्थसंग्रहम् ।
महतीं संहितामेतां चकार मुनिचोदितः ॥ ९९ ॥

श्रुत्वेति। अर्थसंग्रहं श्रुत्वेत्यन्वयः ॥ ९९ ॥

यश्चेमां संहितां पुण्यां शृणुयाच्छ्रावयेत वा।
स मुक्तः सर्वपापेभ्यः सर्वकामान्समश्नुते ॥ १०० ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां न्यासोपदेशो नाम चतुर्थोऽध्यायः ॥

---

यश्चेति। पुण्यां सर्वपापहरां श्रावयेत्। सर्वान्कामान्समश्नुते मुक्तोभवतीत्यर्थः ॥ १०० ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहिताटीकायां चतुर्थोऽध्यायः ॥

---

भूय एवर्षिभिः पृष्टो भरद्वाजस्तपोनिधिः ॥
अनुक्तानब्रवीद्धर्मानुक्तांश्चैव प्रसादयन् ॥ १ ॥

भूय इति। प्रसादयन् विशदीकुर्वन् ॥ १ ॥

धर्मो वर्णाश्रमादीनां कार्त्स्न्येन मुनिसत्तमाः ॥
शिष्टो व्याससमासाभ्यामार्षैर्दिव्यैस्तथागमैः ॥ २ ॥

धर्म इति। हे मुनिसत्तमाः वर्णाश्रमादीनां धर्मः आर्षैः ऋषिप्रोक्तैः धर्मशास्त्रैस्तथा दिव्यैरागमैः पञ्चरात्रसंहिताभिश्च व्याससमासाद्यैर्व्यासो विस्तारः समासः सङ्कोचः। आदिशब्देन अनतिसङ्कोचविस्तारो विवक्षितः ॥ २ ॥

अत्र केचित्परं तत्त्वं रजोमीलितदृष्टयः ॥
अपश्यन्तोऽभिजानन्ति धर्मस्य न परां गतिम् ॥ ३ ॥

अत्रेति। केचिद्रजोमीलितदृष्टयः रजोगुणसंकुचितज्ञानाः अत्र आर्षदिव्यशास्त्रगणेषु अपश्यन्तः धर्मस्य परां गतिं नाभिजानन्ति। अपश्यन्तो नाभिजानन्तीति पदाभ्यां साधनभूत-

समीचीनन्यायपरिशीलनाभावः तत्फलभूतनिर्णयाभावश्च विवक्षितः ॥ ३ ॥

केचित्तु सत्त्वसम्पन्नाः केशवेनावलोकिताः ।
सारासारविदः प्राज्ञाः परं धर्मं विजानते ॥ ४ ॥

केचिदिति । सत्त्वसम्पन्नाः उद्रिक्तसत्त्वगुणाः । केशवेनावलोकिताः जायमानदशायां भगवता विलोकिताः । एतच्च सत्त्वसम्पत्कारणम् । 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' इति वचनात्परं धर्मं मोक्षधर्मम् ॥ ४ ॥

यदैकान्त्यङ्गता विष्णौ भगवत्यात्मभावने ।
तद्वैष्णवा भागवताः सन्त इत्यपि ते स्मृताः ॥ ५ ॥

यदेति । आत्मनो भावयति करणकलेवरादि योगिनः करोतीत्यात्मभावने भगवति विष्णौ विषये ऐकान्त्यङ्गताः प्राप्तास्ते भागवताः । त एव सन्त इत्यपि स्मृताः ॥ ५ ॥

नियोक्ता भगवान्विष्णुर्नियोगस्तस्य वै श्रुतिः ।
नियोज्याः सत्त्वसम्पन्ना मुख्या मोक्षार्थचिन्तकाः ॥ ६ ॥

नियोक्तेति । भगवान् ज्ञानादिषाड्गुण्यपरिपूर्णः । "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति श्रीपराशरोक्तेः । विष्णुर्व्याप्तिमान्नारायणः नियोक्ता नियोजकः । श्रुतिस्तस्य विष्णोर्नियोग आज्ञारूपः । सत्त्वसम्पन्नाः सत्त्वनिष्ठाः सत्त्वगुणस्थानीयनियोगविषयाः । अतस्ते वै मुख्याः । कुतः ? मोक्षार्थचिन्तकाः मोक्षाख्यं पुरुषार्थं यतः काङ्क्षन्ते अतस्ते मुख्या नियोज्या इति वान्वयः । एतत्सर्वं भगवतो नियोक्तृत्वं श्रुतेर्नियोगत्वं सत्त्वस्थानां नियोज्यत्वमित्येतत्सर्वम् अजानन्तः ॥ ६ ॥

अन्यथैवाभिमन्यन्ते सर्वमेतत्कुदृष्टयः ।
यतो दूरतरास्ते हि परस्य परमात्मनः ॥ ७ ॥

अन्यथैवाभिमन्यन्ते तत्र हेतुमाह–अन्यथैवेति यत इति यतः कारणात्ते कुदृष्टयः परस्य सर्वस्मात्परस्य परमात्मनः आत्मनामन्तर्यामिणः दूरतरा अतिविप्रकृष्टास्तद्दास्यरहिताः जायमानकटाक्षरहिताश्चेत्यर्थः ॥ ७ ॥

यथा पृथग्विधा वर्णा यथा तत्रैव चाश्रमाः ।
विविक्तमतयस्तत्र तथा भागवता अपि ॥ ८ ॥

एवं भागवतानां भगवत्कृपापारतन्त्र्यात्तेषां शास्त्रात् समीचीनज्ञानसम्भवः नान्येषामित्याभिध्याय भागवतानां बहुविधत्वमाह–यथेति । यथा वर्णाः पृथग्विधाः परस्परं भिन्ना यथा वा तत्रैव ब्राह्मणक्षत्रियादिवर्णेष्वेव आश्रमाः ब्रह्मचर्यादयः पृथग्विधाः यथा विविक्तमतयः अनन्याधियः भागवता अपि तत्र वर्णेष्वेवाश्रमेष्वपि च पृथग्विधाः । भक्तप्रपन्नभेदात् शुद्धमिश्रभेदाच्च बहुविधा इत्यर्थः ॥ ८ ॥

ईशभक्तिफलोपाया ईशैकफलसाधनाः ।
द्विधा ह्येकान्तिनस्ते च शुद्धा मिश्रा इति द्विधा ॥ ९ ॥

द्वैविध्यमेवाह ईशेति । ईशस्तद्भक्तिश्च क्रमेण फलमुपायश्च येषां ते ईशभक्तिफलोपायाः भक्त्युपायनिष्ठा इत्यर्थः । ईशैकफलसाधनाः भगवल्लाभाय भगवन्तमेवोपायत्वेन स्वीकृतवन्तः प्रपन्ना इत्यर्थः । अयं भेदो वर्णस्थानीयः । अत्रैकान्तिशब्दः परमैकान्तिपरः । ईशैकफलसाधनत्वोक्तेः । 'स एकान्त्यन्यविमुखो हरिं सर्वेश्वरं परम् ॥ यत्समाश्रयते किञ्चित्फलमभ्यर्थयन्नर' इति एकान्तिन ईशैकफलसाधनत्वाभावोक्तेः । ते चैका

न्तिनः प्रत्येकं शुद्धा मिश्रा इति द्विधा भिन्ना इत्यर्थः । अयं भेद आश्रमस्थानीयः ॥ ९ ॥

विशुद्धज्ञानकर्माणः श्रौतदिव्यार्षवर्त्मभिः ।
भक्तिनिष्ठाः परं ब्रह्म नारायणमुपासते ॥ १० ॥

ईशभक्तिफलोपाया इत्युक्तं विवृणोति।विशुद्धमिति । विशुद्धं फलाभिसन्धिरहितं ज्ञानं ज्ञानयोगः कर्म कर्मयोगश्च येषां ते तथोक्ताः । इयं च भक्तेः साधनोक्तिः । भक्तिनिष्ठः मोक्षोपायतया कर्मज्ञानसाध्यभक्तियोगं स्वीकृतवन्तः श्रौतदिव्यार्षवर्त्मभिः श्रौतं श्रुतिविहितं दिव्यं श्रीपञ्चरात्रोक्तम् आर्षं धर्मशास्त्रोक्तं तैर्वर्त्मभिर्मार्गैः परं ब्रह्म बृहत्त्वादिगुणयुक्तं नारायण मुपासते ॥ १० ॥

नारायणैकशरणाः फलं नारायणः स्वयम् ।
तैस्तैः स्वादुत्तमैः कल्पैर्यजन्तोऽनुभवन्ति वै ॥ ११ ॥

द्वितीयपादं विवृणोति–नारायणेति । नारायणैकशरणाः नारायणैकोपायाः फलं फलभूतं नारायणं स्वयं स्वादुत्तमैः स्वयम्प्रयोजनभूतैर्नतूपायकुक्षिनिक्षिप्तैस्तैस्तैः कल्पैः श्रौतदिव्यार्षविधिभिर्यजन्त आराधयन्तोऽनुभवन्ति ॥ ११ ॥

ये तु वाकनिषन्निष्ठास्तत्तत्संस्कारसंस्कृताः ।
ते वै भागवताः शुद्धा वासुदेवैकयाजिनः ॥ १२ ॥

येत्विति वाकनिषन्निष्ठाः वाकेषु मूलवेदेषु निषत्सु च परिनिष्ठिताः तत्तत्संस्कारसंस्कृताः वाकनिषद्विहितगर्भाधानादिचत्वारिंशत्संस्कारैः संस्कृताः वासुदेवैकयाजिनः नत्वग्नीन्द्राद्यन्तर्याम्याराधकाः। शुद्धयाजिन इत्यर्थः। एवं भूतास्ते शुद्धा इत्यन्वयः ॥ १२ ॥

त्रय्या विहितसंस्कारास्त्रय्यन्ते परिनिष्ठिताः ।
यजन्त्येकान्तिनो मिश्रा विष्णुं विश्वतनुं हरिम् ॥ १३ ॥

मिश्रैकान्तिनां लक्षणमाह—त्रय्येति । त्रयी ऋग्यजुः सामनि विहिताः संस्कारा येषां ते तथोक्ताः । त्रय्यन्तेषु वेदान्तेषु परिनिष्ठिताः । विश्वतनुं विष्णुम् इन्द्राद्यन्तर्यामिणं हरिं स्वकर्मभिर्यजन्ते ॥ १३ ॥

श्रूयते यत्र यष्टव्या यादृशी या हि देवता ।
तादृशी सा भवेत्तत्र यजन्त्येकान्तिनो हरिम् ॥ १४ ॥

विश्वतनुमित्युक्तमर्थं विशदयति श्रूयत इति । यत्र कर्मणि यादृशी यादृग्गुणविग्रहादिविशिष्टा या देवता यष्टव्या श्रूयते श्रुत्या विधीयते तत्र नित्यनैमित्तिकात्मके कर्मणि तादृशी तादृग्गुणविग्रहादिविशिष्टा सा देवता भवेत्। तादृग्गुणविग्रहादिविशिष्टदेवतान्तर्यामिणं हरिमेकान्तिनः अनन्यदेवताः यजन्ति । तेषामाराध्यत्वेन तत्तद्देवतान्तर्यामिरूपेण सन्निहितो भवतीत्यर्थः ॥ १४ ॥

तथा हि वाक् शची दुर्गा धाता शक्रस्त्रियम्बकः ।
इति नानाभिधारूपो लक्ष्मीशः स्वयमिज्यते ॥ १५ ॥

व्यक्तमर्थं विवृणोति—तथेति । वाक् सरस्वती । शची इन्द्राणी । दुर्गा पार्वती । धाता सरस्वतीभर्त्ता । शक्रः शचीपतिः । त्र्यम्बको दुर्गापतिः । इति एवं प्रकारेण नानाभिधारूपः नानाविधनामरूपविशिष्टः सन् लक्ष्मीशः स्वयमिज्यते पूज्यते। तत्तद्देवतान्तर्यामी सन् तत्तद्रूपद्वारा स्वपर्यन्ताभिधायिभिस्तन्नामभिः स्वयं श्रियः पतिरेवाराध्यत इत्यर्थः।लक्ष्मीश इति साभिप्रायं विशेषणम् । "देवतिर्यङ्मनुष्येषु पुन्नामा भगवान्हरिः । स्त्रीनाम्नीलक्ष्मीर्मैत्रेय नानयोर्विद्यतेपरम्,"

इत्यादिप्रक्रियया धात्रादीनामाराधनं भगवदाराधनं लक्ष्म्याराधनञ्चेति भावः ॥ १९ ॥

तथैवात्मपृथिव्याद्या यतो लक्ष्मीपतेर्वपुः ।
अतस्तैरौपनिषदैरिज्यतेऽखिलविग्रहः ॥ १६ ॥

एवं नित्ये नैमित्तिके च कर्मणि रुद्रेन्द्रादिदेवताके तत्तद्देवतान्तर्यामिणो नारायणस्याराध्यतया पारमैकान्त्यमभग्नमित्युक्त्वा 'जीवमुख्यप्राणलिङ्गात्' इत्यादिनोपासनात्रैविध्यादौ श्रुतत्वादिह तद्योगादियुक्ता चिद्विशिष्टोपासनजीवविशिष्टोपासनस्वरूपोपासने उपासनद्वय इव प्रतर्दनविद्यासु इन्द्रादिजीवशरीरकपरमात्मोपासनमपि न पारमैकान्त्यभङ्गाय भवतीत्याह-तथैवेति । तथैव नित्यनैमित्तिके जीव आत्मा आत्म पृथिव्याद्याः जीवपृथिव्याद्या जीवपृथिवीप्रभृतयः । आदिशब्देन अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्यः पृथिव्यां तिष्ठन् यो अप्सु तिष्ठन्' इत्यारभ्य पठितानामबादीनां संग्रहः । यतः कारणात् लक्ष्मीपतेः श्रियः पतेर्वपुः शरीरं 'यस्य पृथ्वीशरीर' मिति अत्रानुसन्धेयम् । अतः कारणादौपनिषदैः उपनिषत्प्रतिपादितब्रह्मविद्यानिष्ठितैर्मिश्रपरमैकान्तिभिरखिलपृथिव्यादितत्तच्छरीरको लक्ष्मीपतिरिज्यते उपास्यते । पृथिव्याद्युपादानं दृष्टान्तार्थम् । यथा पृथिव्याद्यन्तर्याम्युपासनेन न पारमैकान्त्यभङ्गः एवं जीवान्तर्याम्युपासनेनापि न पारमैकान्त्यभङ्ग इति ॥ १६ ॥

ततः शुद्धं परं ब्रह्म विशुद्धपरिवारकम् ।
इज्यते विविधैर्भोगैर्नित्यं च प्रतिमादिषु ॥ १७ ॥

एवं मिश्रैकान्तिनां मिश्रताप्रयोजकं मिश्रयजनमुक्त्वा तेषाम् उपादानानन्तर्भाविनीत्येव भगवदिज्यायामपि शरीरत्वेन देव-

तान्तरसम्बन्धशङ्कायां तन्निषेधति—तत इति। शुद्धं देवतान्तर्यामिभावमन्तरेणाप्राकृतदिव्यविग्रहविशिष्टत्वेनावस्थितं विशुद्धपरिवारकं संसारानुपहतदेवीभूषणदिव्यायुधगणादिपरिवारसमेतं परं ब्रह्म प्रतिमादिषु विविधैर्भोगैर्नित्यमिज्यते। नित्यार्चनन्तु विशुद्धपरिवारकशुद्धविषयमेवेत्यर्थः। यद्वा व्यामिश्राणां न केवलं सर्वत्रापि व्यामिश्रयजनं; प्रतिमादिषु नित्यं शुद्धं यजनमप्यस्तीत्यर्थः॥ १७॥

अशुद्धा ब्रह्मरुद्राद्या जीवा विष्णोर्विभूतयः।
तान्वै कुदृष्टयः साम्यात्परत्वादप्युपासते॥ १८॥

अशुद्धानां ब्रह्मादीनामाराधनमपि तु तदन्तर्यामिण एवाराधनम्। नित्यार्चनादिषु तेषां शरीरत्वेनापि नान्वय इत्युक्त्वा इदानीं स्वातन्त्र्येण चतुर्मुखाद्याराधनं कुदृष्टिमूलमित्याह—अशुद्धा इति। अशुद्धाः कर्मवश्याः ब्रह्मरुद्राद्याः। आदिशब्दादिन्द्रादीनां ग्रहणमादिशब्देन तद्ग्रहणं च दृष्टान्तार्थम्। यथा नाकेशेन्द्रो 'नत्वदुत्तरो ज्यायानस्ति वृत्रह'न्नित्यादिभिर्वाक्यैरापातत इन्द्रस्य परत्वे प्रतिपन्ने त्वाष्ट्रवधबलिबन्धनब्रह्महत्यादिकर्मसम्बन्धनिबन्धनदुःखानुभवश्रवणात्सृज्यत्वसंहार्यत्वश्रवणाच्चापरत्वं स्थिरीकृतम्; एवं चतुर्मुखादीनाम् अपि वेदापहारगुरुपातकनिबन्धनदुःखानुभवस्य 'नारायणादिन्द्रो जायते नारायणाद्ब्रह्मा जायते' इत्यादिभिः सृष्टिकाले सृज्यस्य प्रलये कर्माभावस्य च श्रूयमाणत्वात् अपरत्वमेवेति जीवाः। अयं च साध्ये ब्रह्मरुद्रयोर्जीवत्वे अशुद्धत्वं हेतुः। आदिशब्देन संगृहीता इन्द्रादयो दृष्टांततया स्वीकृताः। अशुद्धत्वञ्च कर्मवश्यत्वम्। सृष्टिप्रलयकर्माभावश्च जीवत्वेऽपि न स्वतन्त्र इत्याह। विष्णोर्विभूतय इति। तानित्थं भूतान् रुद्रादीन्कुदृष्टयः कुम-

त्वयः साम्याद्विष्णोरित्येतदनुषज्यते । विष्णोस्तुल्यत्वेन ततोऽपि परत्वेनाप्युपासते । इदमुभयमपि कुदृष्टिमूलमित्यर्थः॥१८॥

अपरत्वेन चाप्येता ये यजन्ति हि देवताः ।
तेषां भवति नैकान्त्यमतो नैवाप्नुयुः परम् ॥ १९ ॥

एषा साम्येनाधिक्येन च देवतान्तरोपासने प्रतिषिद्धिः अपरत्वेन तदुपासनं प्राप्तं निषेधति-अपरत्वेनेति । चकारात्पूर्वोक्तसाम्येनाधिक्येन चोपासनं समुच्चीयते । एताः पूर्वोक्ता ब्रह्मरुद्राद्या देवता ये । अपरत्वेन चोपासते तेषामैकान्त्यं न भवति नास्ति । अत ऐकान्त्याभावात् परं निःश्रेयसं नाप्नुयुः ॥ १९ ॥

अङ्गभावेन शुद्धानामर्चा प्रियतमा हरेः ।
या स्वतन्त्रधिया तत्र सा निहन्ति विविक्तताम् ॥२०॥

शुद्धानामपरत्वेनार्चनं पारमैकान्त्यव्यापकमित्याह-अङ्गभावेनेति । शुद्धा नित्यमुक्ता अनन्तादयस्तेषामङ्गभावेन भगवच्छेषत्वेनार्चा हरेः प्रियतमा इष्टतमा तत्र शुद्धविषयेऽपि या स्वतन्त्रतयार्चा अङ्गभावमन्तरेण पूजा सा विविक्तता पारमैकान्त्यं निहन्ति नाशयतीत्यर्थः ॥ २० ॥

भावनानां तु कालुष्यादशुद्धिः कर्मणां भवेत् ।
तस्मात्तेषां विशुद्ध्यर्थं विष्णुमेव सदा भजेत् ॥ २१ ॥

नन्वेकस्यैव कर्मणः कथं पारमैकान्त्यानुकूलत्वतद्विरोधित्वे इत्याकांक्षायां बुद्धिभेदात्तदा तदुभयविरुद्धमित्याह-भावनानामिति । भावनानां कलुष्यात्कलुषितत्वात्तच्च नित्यनैमित्तिकेष्वन्तर्यामिपर्यङ्कभावभावत्वं शुद्धविषयकेषु अपि कर्मसु स्वतन्त्रत्वञ्च । यस्मात्कालुष्यात्कर्मणामशुद्धिर्भवेत् । अतस्तेषां कर्मणां विशुद्ध्यर्थं विष्णुमेव सदा भजेत् । नित्यनै-

मित्तिकेषु तत्तदन्तर्यामिणं विष्णुमेव सदा भजेत्। विशुद्धवि-
षयकमपि विष्णुशेषत्वानुसन्धानपूर्वकमेव कुर्यादित्यर्थः ॥२१॥

बाह्यः सदसतां नास्ति भेदः प्रायेण कर्मसु।
सङ्कल्पादेव भिन्नानि स हेतुर्बन्धमोक्षयोः ॥ २२ ॥

उक्तमर्थं स्फुटयति–बाह्य इति। सदसतामेकान्तिनां सताम-सतामनेकान्तिनां च कर्मसु प्रायेण बाह्यो भेदो नास्ति क्वचि-द्भेदे विद्यमानेऽपि न सर्वत्र बाह्यो भेद इत्यर्थः किन्तु सङ्कल्पा-देव भिन्नानि सतां कर्माणि भगवत्पर्यन्तानि फलाभिसन्धिवि-धुराणि च। असतां तु असत्पर्यन्तानि कामनोपहतानि चेत्य-यमान्तरभेद एव स एव सङ्कल्पः। बन्धमोक्षयोर्हेतुः। असत्स-ङ्कल्पो बन्धस्य सत्सङ्कल्पो मोक्षस्य हेतुरित्यर्थः ॥ २२ ॥

यजेच्छुद्धानशुद्धान्वा साम्यात्पारम्यतोऽपि वा।
लभते विविधान्कामान् विभोस्तस्यैव शासनात्॥२३॥

शुद्धानामशुद्धानां च साम्यात्पारम्यतो वा यजनन्तु ताव-न्निष्फलत्वान्निन्द्यते किन्तु परमपुरुषार्थलक्षण मोक्षपरिप-न्थित्वादित्यभिप्रायवानाह यजेदिति। विभोः सकलकर्मफल-प्रदस्य विष्णोरेव शासनाद्विविधान्कामान् लभते न मोक्षमि-ति भावः। तथा च गीतं भगवता 'स तया श्रद्धया युक्तस्त-स्याराधनमीहते। लभते च ततः कामान्मयैव विहितान्हि-तान्। अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इति ॥ २३ ॥

त्रिभिः प्रजापतेर्भक्तः सप्तभिः शङ्करस्य तु।
विंशत्याग्नीन्द्रसूर्यादेर्जन्मभिर्वैष्णवो भवेत् ॥ २४ ॥

अपरत्वेन ब्रह्मरुद्राद्युपासनन्तु परम्परयामोक्षाख्यपुरुषा-र्थसम्बन्धमित्याह–त्रिभिरिति। प्रजापतेश्चतुर्मुखस्य भक्तस्त्रिभि-र्जन्मभिर्वैष्णवो भवेत् शंकरस्य सेवी सप्तभिर्जन्मभिर्वैष्णवो

भवेत् । अग्नीन्द्रसूर्यादिर्भक्तः विंशत्या विंशतिजन्माभिर्वैष्णवो भवेत् । अपरत्वेन चायं जन्मत्रयादिव्यवधानेन वैष्णवत्वलाभः । साम्येन पारम्पर्येण वा देवतान्तरोपासकस्य 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इति तेषामन्तवत्फलोक्त्या निरवधिकपुरुषार्थान्वयाभावादतत्त्वज्ञानमूलस्य तदुपासनस्य मोक्षफलकत्वकथनायोगात्साम्यादुपासनस्य फलं कथितम् । तदनन्तरमपरत्वेनोपासनफलकथनस्यातत्वात्तदुपासनस्यतत्त्वज्ञानमूलतया मोक्षसम्बन्धकथनाचिन्त्या 'तान्वै कुदृष्टयः साम्यात्परत्वादप्युपासत' इत्यनन्तरम् 'अपरत्वेन चाप्येता ये यजन्ति हि देवताः' इत्याद्युक्तेस्तत्कर्मणैव तदुभयफलकथने तत्कथनौचित्या 'यो महाविष्णुमन्येन हीनदेवेन दुर्मतिः ॥ साधारणं निरीक्षेत सोन्त्यजो नान्यथान्त्यज' इत्यादिप्रमाणमप्येतेन साम्योपासनस्यमोक्षपरिपन्थित्वोक्तेश्च तस्माद्यथोक्त एवार्थः ॥ २४ ॥

न सांख्येन न योगेन शैवेनापि न तत्पदम् ।
यदौपनिषदैः प्राप्यं पञ्चरात्रविशारदैः ॥ २५ ॥

रजस्तमोमूलतत्तत्स्मृतिविहितप्रकारेणोपासकस्य न मोक्षप्राप्तिरित्याह—न सांख्येनेति । सांख्यं कपिलस्मृतिः । योगः हैरण्यगर्भः । शैवं पाशुपततन्त्रम् । एतत्त्रितयमपि 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' अत एव योगः प्रत्युक्तः 'पत्युरसामञ्जस्यात्' इत्यादिभिर्भगवता बादरायणेन निरस्तत्वात् । औपनिषदैर्वेदान्तिभिः । पञ्चरात्रविशारदैः श्रीपञ्चरात्रनिष्ठैः । औपनिषदैरित्यनेन व्यामिश्रयाजिनः । पञ्चरात्रविशारदैरित्यनेन शुद्धयाजिनश्च विवक्षिताः। इति वा साम्येन पारम्येण वा देवतान्तरोपासनस्य रजस्तमोमूलतन्त्रसिद्धत्वात्तदुपासकानां न साक्षान्नापि परम्परया मोक्षान्वय इत्यर्थः ॥ २५ ॥

एकैकं वापि नैकान्ती भजेन्नैकान्त्यलक्षणम्।
कालेनैकान्त्यमाप्नोति नरो विगतकल्मषः॥ २६॥

भगवत्पारम्याभ्युपगमस्य परमैकान्तिलक्षणतया तन्मात्राभ्युपगमेन देवतान्तरोपासकत्वादनैकान्तिनामपि जन्मत्रयादिव्यवधानेन पारमैकान्त्यप्राप्तिरस्तीत्यभिप्रायवानाह—एकैकमिति। अनेकान्ती परमैकान्त्यरहितः नरः बहुष्वेकान्तिलक्षणेषु एकैकमेकान्तिलक्षणं वा भजन् तद्भजनजनितपुण्येन विगतकल्मषः विनष्टपारमैकान्त्यप्रतिबन्धकदुरितः कालेन जन्मत्रयादिव्यवधानकालेन ऐकान्त्यं पारमैकान्त्यमाप्नोति॥ २६॥

नारायणैकनिष्ठा ये सात्त्विकास्तान्निबोधत।
पुरुषा राजसा ज्ञेया नानादैवतयाजिनः॥ २७॥

सत्त्वनिष्ठानामेव मोक्षो नान्येषामिति विवक्षुः क्रमेण सत्त्वरजस्तमोनिष्ठानाह—नारायणेति। एकनिष्ठा य इत्यनेनानन्ययाजित्वमुच्यते। स्पष्टमन्यत॥ २७॥

बाह्या निर्दैवताश्चैव तामसाः परिकीर्त्तिताः।
रजस्तमोऽभिभूतानां न तु मोक्षः कथंचन॥ २८॥

बाह्येति। बाह्या वेदबाह्याः। निर्दैवताः निरीश्वराः। रजस्तमोऽभिभूतानां रजोऽभिभूता नानादैवतयाजिनः। तमोऽभिभूता नानादैवतयाजिन इत्यत्र भगवत्साम्येन पारम्येण वा दैवतयाजिनो गृह्यन्ते 'न तु मोक्षः कथञ्चन' इत्यनेन व्यवधानेनापि मोक्षप्रतिषेधात्॥ २८॥

मुनयः सत्त्वनिष्ठानां लक्षणानि निबोधत।
विष्णोर्दास्यैकफलता तदेकोपायता स्थितिः॥ २९॥

नारायणैकनिष्ठा इत्यनेन विवक्षितानि सत्त्वनिष्ठानां लक्षणानि निबोधत। विष्णोर्दास्यैकफलतां विविच्याह मुनय इति।

मुनय इति सम्बोधनम् । दास्यमेव एकं फलं येषां तेषां भावो दास्यैकफलता एव शब्दोऽवधारणार्थः । मुख्यार्थो वा तदेकोपायतास्थितिः अङ्गत्वेन प्रधानत्वेन वा भगवदेकोपायनिष्ठा । उभयेषामपि प्रवृत्तत्वात् ॥ २९ ॥

तदाज्ञाकरणे प्रीतिस्तत्कर्मगुणकीर्त्तनम् ।
तच्चिह्नाङ्कितदेहत्वं तदीयाराधने रतिः ॥ ३० ॥

तदेति । तदाज्ञाकरणे 'श्रुतिस्मृती ममैवाज्ञे' इत्यादिप्रमाणप्रसिद्धे नित्यनैमित्तिकात्मभगवद्दास्ये कैंकर्ये प्रीतिस्तत्कर्म गुणकीर्त्तनं दुष्टनिग्रहाशिष्टपरिपालनार्थानां भगवच्चेष्टितानां ज्ञानशक्त्यादीनाम् आश्रितवात्सल्यादीनां गुणानां च तत्कीर्तनम् । तच्चिह्नाङ्कितदेहत्वं चक्रादिभगवल्लाञ्छनलाञ्छितशरीरत्वम् । तदीयाराधने भागवताराधने रतिः प्रीतिः ॥ ३० ॥

तदन्यस्पर्शवैराग्यमिन्द्रियार्थेष्वलोलता ।
आचार्य्याधीनवृत्तित्वमाचार्यार्थात्मवृत्तिता ॥ ३१ ॥

तदन्येति । तदन्यस्पर्शवैराग्यं भगवद्व्यतिरिक्तोपायेपि सम्बन्धासहिष्णुत्वम् इन्द्रियार्थेषु विषयेष्वलोलता अनासक्तिः धर्मानुबन्धिभोगेष्वपि 'शरीरं प्राणवत्पश्येदन्नम्प्राणविलेपनम् । प्राणाभावेन च न तावानन्दस्तन्तु प्राणव'दित्यादिक्रमेण प्रावण्यविधुरत्वम् आचार्य्याधीनवृत्तित्वम् ॥ ३१ ॥

क्रोधलोभमदालस्यमानमोहविहीनता ।
सत्यशौचदयाधैर्य्यक्षमासन्तोषयुक्तता ॥ ३२ ॥

क्रोधेति । क्रोधः कोपः । लोभः उचितव्ययप्रतिबन्धकजनितस्तब्धभावापादकवित्तौन्नत्यविशेषः । आलस्यं कर्त्तव्येषु प्रवृत्त्यभावप्रयोजको मनोदौर्बल्यविशेषः । मानः उत्कृष्टजनावमानहेतुरहङ्कारपदवाच्यो गर्वः । मोहो यथावस्थितज्ञानाभावः ।

पुत्रदारादिष्वनिरुद्धा ममता बुद्धिर्वा तत्रापि । तच्छब्दप्रयोगात् । एतद्विहीनता अभावः । सत्यं यथार्थवचनम् । शौचं मृज्जलादिभिः शरीरशुद्धिरिति । इन्द्रियार्थेष्वलोलतेत्यादिना रागाद्यभावलक्षणाया आन्तरशुद्धेरुक्तत्वात् । दया दुःखप्रहारणेच्छा । धैर्यं व्यसनैरभिभवे सत्यपि कर्त्तव्येष्वप्रमत्तत्वम् । अनवसन्नचित्तत्वमित्यर्थः । सन्तोषो यथालब्धेन प्रहर्षः । एतैर्युक्तता विशिष्टत्वम् ॥ ३२ ॥

इत्येतैर्लक्षणैर्युक्ता वैष्णवा वीतकल्मषाः ।
सभाज्या दर्शनेनैव नावज्ञेयाः कदाचन ॥ ३३ ॥

इत्येतैरिति । दर्शनेनैव दर्शनमात्रेणैव, सभाज्याः पूज्याः । यदा दृष्टाः तदानीमेव प्रणामादिना पूजनीया इत्यर्थः । कदाचिदपि नावज्ञेयाः नावमन्तव्याः । प्रत्युत्थानाभावलक्षणमवज्ञानं न कर्त्तव्यमित्यर्थः ॥ ३३ ॥

अज्ञैः कुदृष्टिभिर्बाह्यैर्नास्तिकैः संशयात्मभिः ।
न तु भागवतः किंचित्प्रच्युतैश्च समाचरेत् ॥ ३४ ॥

एवमेकान्तिनां भक्तप्रपन्नभेदेन तत्रापि शुद्धमिश्रभेदेन च वैविध्यमुक्त्वा तेषामेव सत्त्वनिष्ठत्वकथनार्थं सत्त्वरजस्तमोनिष्ठानां वृत्तिमुक्त्वा सत्त्वनिष्ठानामेव मोक्षो नान्येषामित्यनन्तरमभिधाय सत्त्वनिष्ठानां लक्षणानि च निर्दिश्य तेषां दर्शनमात्रेणैव पूजनीयत्वं विधाय तदन्येषां संसर्गः सर्वप्रकारेणापि परित्याज्य इत्याह—अज्ञैरिति । अज्ञाः शास्त्रज्ञानशून्याः कुदृष्टयः वेदं प्रमाणतया परिगृह्याप्यन्यथाप्रतिपत्तिविपरीत प्रतिपत्तिभिर्विनष्टाः पापिष्ठाः । बाह्या वेदविरुद्धैकपरस्परविरुद्धेषु तन्त्रेष्वन्यतरप्रामाण्यनिर्णयरहिताः प्रच्युतानां तन्त्रैक शरणाः नास्तिकाश्चार्वाकमतस्थाः संशयात्मनां स्वरूपं वक्ष्यति । एतैः सह किञ्चिदपि न समाचरेत ॥ ३४ ॥

तुल्याभिजनचारित्रा बान्धवास्तुल्यदृष्टयः ।
आपाद्य दृष्टयोऽपि स्युर्न कदापि कुदृष्टयः ॥ ३५ ॥

बान्धवमपि परमैकान्तिभिः सममेव सम्पादनीयम् । न पूर्वोक्तैरित्याह-तुल्येति । तुल्याभिजनचारित्रा बाह्यान्तरतुल्यकुल वृत्तयः । तुल्यदृष्टयः समानज्ञानाः । बान्धवाः स्युः । आपदि तुल्याभिजनचारित्रतुल्यदृष्टयभावा आपत् तस्यां दशायाम् । अदृष्टयः ज्ञानशून्या बान्धवाः स्युः कदाचिदपि आपदि कुदृष्टयः अन्यथा ज्ञानविपरीतज्ञानग्रस्ता बान्धवा न स्युः ॥ ३५ ॥

विवाहयज्ञाध्ययनस्पर्शसंवासभोजनम् ।
एकान्तिनान्तु कर्त्तव्यं तादृशैः सह बान्धवैः ॥ ३६ ॥

श्लोकद्वयेनोक्तमर्थं विशदयति-विवाहेत्यादि । विवाहः तत्कन्यकानां स्वीकारः स्वकन्यकानां तेभ्यः प्रदानञ्च । यज्ञः तेषु याजकेषु सत्सु स्वयं यजनम्; तेषु यष्टृषु स्वयं याजनं च । अध्ययनं तेषु अध्यापकेषु स्वय मध्ययनम् । तेष्वध्येतृषु स्वयमध्यापनञ्च । एवं सद्यस्तत्साम्यापादकं विवाहयाजनाऽध्यापनलक्षणं सम्बन्धत्रयमुक्तम् । अथोपवृत्त्या तत्साम्यापादकं सम्बन्धान्तर माह । स्पर्शसंवासभोजनमिति स्पर्शः प्रसिद्धः । संवासः एकशय्यायां सह वासः । भोजनं तदन्नभोजनम् । एकपंक्तौ भोजनञ्च 'एकशय्यासनं पंक्तिभाण्डपक्वान्नमिश्रणम् । याजनाध्यापने योनिस्तथैव सहभोजनम् ॥ नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः' सह इतिवचनाद्विवाहादिकं सर्वमेकान्तिनान्तादृशैरेकान्तिभिरेव सकलं कम कारयेत् ॥ ३६ ॥

सतामनवकाशत्वात्कालांशेषु न लौकिकम् ।
तस्मादलौकिकैरेव सकलं कर्म कारयेत् ॥ ३७ ॥

भगवदेकफलसाधनैरपि भगवच्छास्त्रसिद्धपञ्चकालविभागेनाच्छिद्रभगवत्कर्मकारिभिरेव सममाच्छिद्रपञ्चकालः परमैकान्तिभिः सकलं याजनाध्यायनादिकं कर्म कारयेत्। न तु दक्षाद्युक्तप्रकारेणाष्टधा विभागेना 'ष्टमे लोकयात्रा चे'त्यादिप्रक्रियया लोकयात्रापरायणैरित्यभिप्रायवानाह—सतामिति। सतामनवकाश त्वात्पञ्चस्वपि कालेष्वच्छिद्रभगवत्कैङ्कर्यैकरतितया कालांशेषु कालभागेषु अवकाशाभावाल्लौकिकं लोकयात्रारूपकर्म नास्ति अतः स्वयमलौकिकत्वादलौकिकैर्लोकयात्राविमुखैरेव सकलं कर्म कारयेत्। कालांशेष्वित्यस्य उपादानाद्द्व्यर्थकालेषु अप्रयोजनसिद्धद्रव्यादिकस्य पुरुषार्थः। अतिरिक्तांशेष्विति वार्थःअतिरिक्तांशेष्वपि हि स्वाध्यायादेव सुप्रवेशो भगवच्छास्त्रेषु कथितः।न तु लोकयात्रायाः।द्रव्ययोजनाभावात्॥३७॥

समित्पुष्पहविस्तोयपात्रोपनयनादिषु ।
अवैष्णवान्विशेषेण न कर्मसु नियोजयेत् ॥ ३८ ॥

चतुर्थाध्याये न चैषां कर्म कुर्वीत न स्वकर्म च कारयेदित्युक्तस्यार्थं विशयदयन्नाह समिदिति—विशेषेण समिधां पुष्पाणाञ्च यज्ञियानाम् । आनयनादिषु कर्मस्ववैष्णवान्न नियोजयेत् ॥ ३८ ॥

नोपभोक्तव्यमन्नाद्यमवैष्णवनिवेदितम् ।
नावैष्णवाय दातव्यं स्वयं विष्णोर्निवेदितम् ॥ ३९ ॥

नेति । अवैष्णवनिवेदितं वैष्णवैः स्वादितमपि अवैष्णवैर्भगवते निवेदितमन्नाद्यं न नियोक्तव्यम्। यद्वा भगवत्प्रसादबुद्ध्यापि अवैष्णवनिवेदितं न स्वीकार्यमित्यर्थः ॥ ३९ ॥

ये त्ववैष्णवभर्तव्या ये चावैष्णभर्तृकाः ।
ऐकान्त्यस्योपघातेन न तैः कर्माण्यनापदि ॥ ४० ॥

येत्विति । अवैष्णवा भर्त्तव्या पुत्रदारादिका येषां ते तथोक्ताः।ये वावैष्णवा भर्त्तारो भरणकर्त्तारो पित्रादयो येषां ते तथोक्ताः । ये चेति पुल्लिङ्गमविवक्षितं वा । तदा भर्तृशब्दः पतिवाची । भर्त्तव्यशब्दश्च भार्यावाची यस्या भर्त्ता न वैष्णवः यस्य भार्य्या न वैष्णवी उभयोरप्यैकान्त्योपघातेन उपहतैकान्त्यत्वाद्भार्याया भर्तुरर्द्धत्वेन श्रूयमाणतया भर्तुरपि तदर्द्धतया अर्द्धस्य अपारमैकान्त्योपहतत्वादनापदि । आपदि एवं विधपरमैकान्त्यलाभदशायां तु न दोष इति भावः ॥ ४० ॥

त्यक्ताचारस्त्यक्तदृष्टिस्त्यक्तार्थस्त्यक्तलक्षणः ।
त्यक्ताचार्यस्त्यक्तमन्त्रः प्रत्येकं प्रच्युतो नरः ॥ ४१ ॥

'न तु भागवतः किञ्चित्प्रच्युतैश्च समाचरे' दिति पूर्वमुक्तम् । इदानीं प्रच्युतानाह-त्यक्तेति । विहिताचारदृष्टिभक्तिलक्ष्मसत्सेवाख्येषु पञ्चसु वृत्त्यवयवेष्वेकैकविकलः प्रच्युत इत्याशयः । त्यक्ताचारः वृत्त्यवयवाविहिताचाररहितः । त्यक्तदृष्टिः दृष्ट्याख्यवृत्त्यवयवरहितः । त्यक्तार्थार्थः । इदमुपलक्षणम् । भक्तिलक्षणवृत्त्यवयवविकल इत्यर्थः । त्यक्तलक्षणः लक्ष्माख्यवृत्त्यवयवशून्यः। त्यक्ताचार्यः सत्सेवारूपवृत्त्यवयवविधुरः । त्यक्तमन्त्रः लक्ष्मान्तर्गतत्वेऽपि मन्त्रस्य पृथगुपादनं प्रधानत्वात् । प्रत्येकं प्रच्युतः त्यक्ताचारः । एवं त्यक्तदृष्टिः त्यक्ताचार्यश्च प्रत्येकं प्रच्युत इत्यर्थः ॥ ४१ ॥

पातकेन कुदृष्ट्यान्यभजनेनान्यलक्षणैः ।
अवैष्णवोपसत्त्यान्यमन्त्रेणापि च्यवन्ति वै ॥ ४२ ॥

एवं विहिताचारादिवृत्त्यवयवविरुद्धान्विता अपि प्रत्येकं प्रच्युता इत्याह-पातकेनेति । पातकं विहिताचारविरुद्धम् । कुदृष्टिर्दृष्टिविरुद्धा अन्यभजनं भक्तिविरुद्धम् ।

अन्यलक्षणानि लक्ष्मीविरुद्धानि । अवैष्णवापसाराः सत्सेवा विरुद्धा । अन्यमन्त्रेण इतरमन्त्रेण । अत्रापि त्यक्तमन्त्र इत्यत्रेव निर्वाहो द्रष्टव्यः । च्यवन्ति प्रत्येकं प्रच्युता भवन्ति प्रत्येकमिति योज्यम् । वृत्त्यवयवेष्वेकैकाननन्वयिनां प्रत्येकं प्रच्युतत्वेतद्विरुद्धानां षण्णां प्रत्येकं प्रच्युतत्वस्य कैमुत्यन्यायेनसिद्धत्वात् ।४२।

यो दिव्यशास्त्रमन्त्रेषु कुरुते त्ववधीरणाम् ।
तथान्यशास्त्रमन्त्रेषु प्रसक्तिं न च वैष्णवः ॥ ४३ ॥

त्यक्ताचार इति श्लोके त्यक्तदृष्टिस्त्यक्तमन्त्र इति पदाभ्यां तदनन्तरं श्लोकेषु च कुदृष्टया अन्यमन्त्रेणेति पदाभ्यां च विवक्षितमर्थं पूर्वोत्तराभ्यां स्फुटयति–य इति दिव्यशास्त्रमन्त्रेषु दिव्यशास्त्रेषु दिव्यमन्त्रेषु चेत्यर्थः। अवधीरणामवज्ञां यः कुरुते तथा अन्यशास्त्रेषु अन्यमन्त्रेषु च यः प्रसक्तिम् अत्यादरेण संगं करोति स दिव्यशास्त्रमन्त्रप्रसक्तश्च न वैष्णवः दिव्यशास्त्रमन्त्रेष्वपि दृढविश्वासे पर्याकलनासक्ततया वा देशकालादिवैगुण्येन वा देशे काले येन दिव्यशास्त्रविलोकनं दिव्यमन्त्रजपो वा न कृतः येन निरासार्थं हेयत्वेन ज्ञानार्थं वा अन्यशास्त्रमन्त्रावलोकनं कृतं न तयोरभागवतत्वमिति भावः । यद्वा त्यक्ताचार इत्यादि श्लोके वृत्त्यवयवविकल्पः। प्रच्युत इच्युक्ताः । अनन्तरश्लोक तद्विरुद्धसेविनस्ततोऽपि निकृष्टा उक्ताः । अनेन श्लोकेन वृत्त्यवयवबाधितकरणपूर्वकं तद्विरुद्धसेविनस्ततोऽपि निकृष्टा उक्ता इति ध्येयम् ॥ ४३ ॥

सर्वैश्च लक्षणैर्युक्तो नियतश्च स्वकर्मसु ।
यस्तु भागवतान्द्वेष्टि सुदूरं प्रच्युतो हि सः ॥ ४४ ॥

अथैकैकवृत्त्यवयवविकलतद्विरुद्धसेवा तदवधीरणापूर्वकतद्विरुद्धसेविभ्योऽपि निकृष्टं प्रच्युतमाह–सर्वैरिति। सर्वैश्च लक्ष-



णैस्तापपुण्ड्रादिलक्षणैर्युक्तः। स्वकर्मसु विहिताचारे नियतो यस्तु भागवतान् परमैकान्तिनः साम्यतो वैष्णवान्वा द्वेष्टि स सुदूरं प्रच्युतः त्यक्ताचारादिभ्यः पातकाद्यन्वयिभ्यः दिव्यशास्त्राव-मन्तृभ्योऽपि अत्यन्तं प्रच्युत इत्यर्थः। हि शब्दः 'नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात् । नाग्न्यर्कसोमा-निलवित्तपास्त्राच्छङ्के भृशं ब्रह्मविदोऽवमानात्'। 'पद्मकोटिशते-नापि न क्षमामि वसुन्धरे' इत्यादिप्रसिद्धिं द्योतयति ॥४४॥

अपि चेत्सेवनपरो न चेत्तापादिसंस्कृतः ।
अनर्चार्हतया विष्णोर्दास्यात्प्रच्यवते ध्रुवम् ॥ ४५ ॥

त्यक्तलक्षण इति पूर्वोक्तं लक्षणत्यागं स्पष्टयति-अपि चेति-अपीति सत्सेवनपरोऽपि भागवतसेवारतोऽपि तापादिसं-स्कृतो न चेत् तापपुण्ड्रनामादिसंस्कारहीनो यदि स्यात्तथा विष्णोरर्चानर्हतया विष्ण्वर्चायामनर्हतया दास्यात्प्रच्यवते प्रच्युतो भवति ध्रुवं नात्र कार्य्या विचारणेत्यर्थः ॥ ४५ ॥

यस्तु प्राप्य गुरोर्विद्यां नार्चयेत्पुरुषोत्तमम् ।
प्रणमेदन्यदेवाय न स भागवतः स्मृतः ॥ ४६ ॥

त्यक्तार्च इत्युक्तं विशदयति यस्त्विति-गुरोराचार्याद्विद्यां मन्त्रं प्राप्य लब्ध्वा पुरुषोत्तमं भगवन्तं नार्चयेदन्यदेवान्वा प्रणमेद्देवतान्तरनमस्कारं वा कुर्यात् स भगवदनर्चकः देवता-न्तरप्रणामो वात्र न भागवत इत्यर्थः। देवतान्तरप्रणामी तृतीये त्यक्तार्चपदेन संगृहीत इति भावः। भागवतो न स्मृतः ॥४६॥

ये नात्मानमनात्मानं विद्याविद्ये फलाफले ।
उपास्यमनुपास्यञ्च वेत्ति भागवतो न सः ॥ ४७ ॥

त्यक्तदृष्टिस्वरूपमाह-येनेति। आत्मानं ज्ञानाधिकरणमात्म-स्वरूपम् । अनात्मानं ज्ञानानधिकरणं प्रकृतिस्वरूपम् ।

विद्याविद्ये विद्याशब्दो मोक्षोपायज्ञानपरः। अविद्याशब्दस्तद्विरोधिपरः। मोक्षोपायस्वरूपं तद्विरोधिस्वरूपञ्चेत्यर्थः। फलाफले मोक्षाख्यफलस्वरूपं तद्विरोधिस्वरूपं चेत्यर्थः। उपास्यमीश्वरस्वरूपमनुपास्यं तदितरांश्च यो न वेत्ति स भागवतो न स्मृतः। अर्थपञ्चकज्ञानरहितो भागवतो न भागवत इत्यर्थः ॥ ४७ ॥

देवतानाञ्च याथात्म्यं कैङ्कर्य्यस्य हरेरपि।
अविदित्वाचरन् कर्म विहीनां गतिमश्नुते ॥ ४८ ॥

त्यक्ताचार इति पदेनाभिप्रेतमाह–देवतानामिति। देवतानामित्यादिश्लोकद्वयेन देवतानां तत्कर्मसु चोदितानाम्। अग्नीन्द्रादीनां याथात्म्यं भगवद्देहभावं हरेः कैङ्कर्यञ्च अविदित्वा अज्ञात्वा कर्मवर्णाश्रमनियतम्। आचरन् कुर्वन् विहीनां निकृष्टां गतिमश्नुते अनुभवति। क्रियमाणेषु वर्णाश्रमनियतेषु कर्मसु तत्तद्देवतान्तर्याम्याराधनत्वं भगवदाज्ञाकैङ्कर्यत्वं च ज्ञात्वा तत्तकर्म कुर्वाणोऽपि त्यक्ताचारपदेन संगृहीतः। मच्युत इत्यर्थः। अविदित्वा त्यजन्कर्मेत्यपरः पाठः। तत्र देवतानां कंचुकत्वं हरेराराध्यत्वं कर्मणां कैङ्कर्य्यत्वमविदित्वा देवतान्तरविषयत्वबुद्ध्या साधनत्वबुद्ध्या च कर्म त्यजन् विहीनां गतिमश्नुत इत्यर्थः ॥ ४८ ॥

देवर्षिभूतात्मतया त्यजन्केवलमेव वा।
विष्णुं तत्तत्फलाकांक्षी पारमैकान्त्यतश्च्यवेत् ॥ ४९ ॥

देवर्षीति। देवतानामृषीणां भूतानात्मतया केवलं देवर्षिभूतव्यवधानं विना वा तत्तत्कर्मफलाकांक्षी आपाततस्तत्तत्कर्मसाध्यतयावगतफलाकांक्षी सन् विष्णुं यजन् पारमैकान्त्यतश्च्यवेत् च्युतो भवेत्। वर्णाश्रमनियताचारेषु देवाद्यन्तर्यामितया

८



भगवन्तमाराधयन्नपि स्वधर्मेषु साक्षादेव यजन्नपि फलाकांक्षी चेत् च्युतोभवेत् पारमैकान्त्याच्च्युतोभवेदित्यर्थः ॥ ४९ ॥

तेषां न परिशुद्धानि योनिर्विद्या च कर्म च ।
ये विष्णुचरणैकान्त्यविहीना ब्राह्मणादयः ॥ ५० ॥

तेषामिति । विष्णुचरणैकान्त्यविहीनाः भगवत्पदारविन्द-पारमैकान्त्यविधुराः ये ब्राह्मणादयः । आदिशब्देन वर्णान्तर-संग्रहः । तेषां योनिर्विद्या च कर्मचेत्येतानि न परिशुद्धानि । तैः सह योनिसम्बन्धो विद्यासम्बन्धो याजनादि लक्षणकर्म-सम्बन्धश्च न कर्त्तव्य इति भावः ॥ ५० ॥

मरणं जन्मने जन्म मरणायैव केवलम् ।
तेषां भगवदैकान्त्यविमुखा ये नराधमाः ॥ ५१ ॥

पारमैकान्त्यरहितानां जन्म विफलमिति तान्निन्दति-मरण मिति । ये भगवदैकान्त्यविमुखाः नराधमाः, तेषां जन्म मरणायैव केवलं मरणातिरिक्तफलकं न भवतीत्यर्थः । मरणमपि जन्मने केवलं न तु मुमुक्षोर्मरणमिव मोक्षफलकमितिभावः ५१

न विद्या केवलार्थाय नाचारो नार्चनं हरेः ।
न चक्राद्यङ्कदेहत्वं विना भागवतार्चनम् ॥ ५२ ॥

वृत्त्युदयस्य एकैकमित्यनेन आवश्यकत्वम् । अवरोहक्रमेण प्रपञ्चयन् प्रथमं सत्सेवां प्रपञ्चयति-न विद्येति । केवल भागवतार्चनं विना भागवताराधनेन विना कृता विद्या दृष्टिः अर्थाय प्रयोजनाय । आचारो विहिताचारः । अत्रापि केवल इति लिङ्गव्यत्ययेन सम्बन्धः । एवमुत्तरत्रापि सम्बन्धो-द्रष्टव्यः । सोऽपि नार्थाय केवलं चक्राद्यङ्कदेहत्वमपि नार्थाय । केवलशब्दः विना भागवतार्चनमित्येतदनुवादकरूपो वा मन्तव्यः ॥ ५२ ॥

न प्रपत्तेः परा विद्या न विष्णोर्दैवतम्परम् ।
न तद्दास्यात्परा सिद्धिर्न गुरुर्वैष्णवात्परः ॥ ५३ ॥

न प्रपत्तेरिति । प्रपत्तेः परा अधिका विद्या न । "सत्कर्मनिरताः शुद्धाः सांख्ययोगविदस्तथा । नार्हन्ति शरणस्थस्य कलांकोटितमामपि" इत्यादिकमत्रानुसन्धेयम् । वेदान्ताचार्य्याश्चाहुः 'तन्निष्ठोऽप्यन्यनिष्ठान्प्रभुरतिशयितुंकोटिकोटचंशतोऽपि' इति। विष्णोः परमधिकं दैवतं नास्ति । सर्वानन्दातिशाय्यवाङ्मनसगोचरं ब्रह्मानन्दानुभवजनितप्रीतिकारिततत्कैङ्कर्य्यादधिका सिद्धिर्नास्तीत्यर्थः । एतत्रयं दृष्टान्तार्थम् । वैष्णवात्परमैकान्तिनः परः अधिको गुरुर्नास्ति पूजनीय इति । "आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात्परतरं प्रोक्तं तदीयाराधनं नृप । मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् । तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः" इत्यादिकमत्रानुसन्धेयम् ॥ ५३ ॥

नित्यमच्युतभक्तानां कुर्यात्पादावनेजनम् ।
नम्रः समुपभुञ्जीत सर्वपातकनाशनम् ॥ ५४ ॥

नित्यमिति । अच्युतभक्तानां नित्यं पादावनेजनं पादप्रक्षालनं कुर्यात । तत्तीर्थं पादतीर्थम् उपयुञ्जीत सेवेत पिबेत ॥ ५४ ॥

वैष्णवस्यांकशय्यायां वैष्णवस्य गृहेऽपि वा ।
देशे वा तद्विचरिते संस्थिता यान्ति सद्गतिम् ॥ ५५ ॥

वैष्णवस्येति । वैष्णवस्याङ्क एव शय्या तस्यां वैष्णवस्य गृहे भवनेऽपि वा तद्विचरिते वैष्णवसञ्चारवति विविक्ते देशे वा संस्थिताः मृताः । समपूर्वतिष्ठतेर्मरणवाचित्वात्तदुक्तं श्रीवत्साङ्कमिश्रैः 'पुत्रादयः कथममी मयि संस्थिते स्युरित्यप्रतिक्रियनिरर्थकचिन्तनेन । दूये न तु स्वयमहं भविताऽस्मि कीदृगित्थं न हस्तिगिरिनाथविमर्शितैति' इति सद्गतिं यान्ति ॥ ५५ ॥



यत्र क्वाप्यथ वा देशे वैष्णवो म्रियते यदा ।
तदा तत्राशु सान्निध्यं करोति गरुडध्वजः ॥ ५६ ॥

यत्रेति । यत्र क्वापि देशेऽपि "रथ्यान्तरे मूत्रपुरीषमध्ये चण्डालवेश्मन्यथ वा श्मशाने । कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभते च मुक्तिम्" इत्यादिकमत्रानुसन्धेयम् । गरुडध्वज इत्यस्य गरुडस्कन्धमारोप्य दिव्यं धाम नेतुं तेन सह गच्छतीति भावः ।

न जन्मनो नाध्ययनान्न यज्ञान्न तपःश्रमात् ।
न त्यागादश्नुते ब्रह्म गुरूपसदनं विना ॥ ५७ ॥

मत्सेवायामपि गुरुवश्यता प्रधानेत्यभिप्रायेणाह—न जन्मन इति । गुरूपसदनं विना आचार्यसमाश्रयणं विना जन्मनः ब्राह्मणाद्युत्तमवर्णाज्जननादपि ब्रह्मभगवद्वासुदेवनारायणशब्दवाच्यं परं ब्रह्म नाश्नुते न प्राप्नोति।अध्ययनाद्वेदाध्ययनादपिनाश्नुते । यज्ञाद्यज्ञाद्यनुष्ठानादपि नाश्नुते।तपःश्रमाच्चान्द्रायणादितपोऽनशनक्लेशादपि नाश्नुते । त्यागात् विषयत्यागात् । अध्ययनयज्ञतपस्त्यागशब्दैस्तत्प्रधानमाश्रमचतुष्टयमुच्यते ॥ ५७॥

देहकृन्मन्त्रविन्न स्यान्मंत्री संस्कारकृत्परः ।
तौ च नात्मविदौ स्यातामन्यस्त्वात्मविदात्मकृत्॥५८॥

आचार्यतया को वा करणीय इत्यपेक्षायामाह—देहकृदिति। देहकृत् पिता मन्त्रविन्न स्याच्चेत्परः अन्यः मन्त्री मन्त्रवित्संस्कारकृदुपनयनादिसंस्कारकृत् उपनयनादिसंस्कारकर्त्ता तौ देहकृतसंस्कारकृतौ च आत्मविदौ आत्मज्ञौ न स्यातांश्चेदन्यः ताभ्यामन्यः आत्मविदात्मज्ञः आत्मकृद्ब्रह्मविद्योपदेष्टा आचार्यः पिता चेन्मन्त्रज्ञः स्यात्सएव संस्कारकृद्भवितुमर्हति। स एव आत्मविच्चेदात्मकृद्भवति सोऽप्यात्मविन्न स्याच्चेदन्य एवात्मज्ञः आत्मकृदित्यर्थः । देहकृदित्यनेन 'शरीरमेव

मातापितरौ जनयतः' इत्ययमंशः स्मारितः। आत्मकृदित्यनेन 'सहि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्मे'त्येतत्स्मारितम्॥५८॥

न चक्राद्यंकनं नेज्या न ज्ञानं न विरागता।
न मन्त्रः पारमैकान्त्यं तैर्युक्ता गुरुवश्यता ॥ ५९॥

न चक्रेति। चक्राद्यङ्कनन्न केवलं तप्तचक्रादिधारणमपि पारमैकान्त्यम् न इज्या। इदञ्च भक्त्युपलक्षणम्। केवलेज्यापि पारमैकान्त्यं न ज्ञानं दृष्टिरपि पारमैकान्त्यं न विरागता वैराग्यमपि पारमैकान्त्यं न वृत्त्यवयवविरोधिवर्ज्जनं वैराग्यम्। 'निन्द्यवर्जन'मित्यत्रैवान्यत्रोक्तेः। मन्त्रः केवलमन्त्रोऽपि पारमैकान्त्यं न किन्तु तैश्चक्राद्यङ्कनादिभिर्युक्ता गुरुवश्यता आचार्याधीनता पारमैकान्त्यमित्यर्थः ॥ ५९ ॥

विद्या विभूषणं पुंसस्तस्या वृत्तं विभूषणम्।
विष्णुभक्तिर्विभूषास्य सा चक्राद्यंकभूषणा ॥ ६० ॥

एवं सत्सेवां प्रपंच्य इदानीं लक्ष्म प्रपश्चयन् विहिताचारादेर्भूष्यभूषणभावमाह–विद्येति। पुंसः विद्यादृष्टिर्विभूषणम्। तस्या वृत्तं विहिताचारो विभूषणम् अस्य वृत्तस्य विष्णुभक्तिर्विभूषा सा विष्णुभक्तिश्चक्राद्यङ्कभूषणा विष्णुभक्तेर्लक्ष्मभूषणमित्यर्थः। आत्मनः हेयोपादेयविवेककारणं शास्त्रजन्यज्ञानं भूषणवदतिशयावहन्तस्य च ज्ञानस्य यथाज्ञानमाचारोभूषणवत 'शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम्। नाच्छादयति कौपीनं न दंशमशकापह' मित्यादिवदुपहास्यत्वप्रसङ्गात वृत्तमतिशयावहम् 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति समचारस्य भक्तिफलकतया फलभूता भक्तिः वृत्तस्यातिशयावहा। तस्यापि भक्तेर्लक्षणतया चक्राद्यङ्कनं भूषणमित्यर्थः ॥ ६० ॥

ध्यानेन मन्त्रयोगेन पूजनेनांकनेन च ।
तोषयन्ति जगन्नाथं वासुदेवं युगक्रमात् ॥ ६१ ॥

कलियुगस्य पापभूयिष्ठतया विशेषतोऽन्तिमयुगे सकलपापनिवर्त्तकं चक्राद्यङ्कनमावश्यकमित्यभिप्रायवानाह-ध्यानेनेति। मन्त्रयोगो मन्त्रजपो जपानुष्ठानम् । कृतयुगे ध्यानेन त्रेतायां मन्त्रयोगेन द्वापरे पूजनेन कलौ चक्राद्यंकनेन जगन्नाथं वासुदेवं तोषयन्ति ॥ ६१ ॥

अष्टमात्षोडशाब्दाद्वा धार्य्यं चक्रादिभूषणम् ।
प्रतप्तैरंकनं पश्चात् सदा वा भूषणं स्त्रियाः ॥ ६२ ॥

स्फुटतया यस्मिन्काले निष्कर्तुं शक्यते तावत्पर्यन्तभूषणतया पञ्चायुधधारणं कर्त्तव्यम् । ततः प्रतप्तैश्चक्रादिभिरंकनं कार्यमित्यभिप्रायेणाह-अष्टमादिति । अष्टमाब्दादारभ्य इदं चोपनयनोपलक्षणार्थम् अष्टमाब्दस्य ब्राह्मणोपनयनकालत्वात् । अथवा आषोडशाब्दात् अष्टमादूर्ध्वम् आषोडशब्दाद् ब्राह्मणस्य गौणोपनयनकालत्वात् । केषु चिद्वचनेषु उपयनकाले चक्राद्यंकनस्य विधानात् उपनयनस्य षोडशाब्दपर्य्यन्तं सम्भावितत्वात्तावत्पर्य्यन्तं चक्रादिभूषणं धार्यम् । पश्चात्प्रतप्तैश्चक्रादिभिरङ्कनम् । स्त्रिया भीरुतया कस्याश्चिदङ्कनाशक्तायाः सदा भूषणमेव वाञ्छन्तीत्यर्थः । वा इत्यनेन अमुख्यत्वम् । अन्यमतत्वं च ज्ञाप्यते ॥ ६२ ॥

शिष्यपुत्रकलत्राणां भृत्यानाञ्च गवामपि ।
कुर्यादचेतनानाञ्च वैष्णवं नाम लक्ष्म च ॥ ६३ ॥

लक्ष्मधारणवत् वैष्णवनामधारणमपि पुत्रादीनां कार्यमित्याह-शिष्येति । भृत्यः भृतिमूलदास्यसम्बन्धवान् गर्भाधानादिमान् अचेतनानां गृहोपकरणानां वैष्णवं विष्णुसम्बन्धि लक्ष्म चक्राद्यङ्कनम् ॥ ६३ ॥

आमा ह्यतप्ततनवस्तप्ताङ्का हरिलाञ्छनैः ।
सुशृता भोग्यतां प्राप्य भुज्यन्ते परमात्मना ॥ ६४ ॥

'अतप्ततनूर्नतदामोअश्नुते,' इति श्रुतिमुपबृंहयति—आमा हीति । अतप्ततनवः तप्तचक्रानङ्कितदेहाः आमाः अपक्वाः अदग्धपापा इति यावत् । हरिलाञ्छनैश्चक्रादिभिस्तप्ताङ्काः सुशृताः परिपक्वाः । दग्धपापा इति यावत् । श्रा पाक इति धातुः । भोग्यतां भोगयोग्यतां प्राप्य आमस्य अपक्वस्य भोगायोग्यत्वादिति भावः । परमात्मना नारायणेन भुज्यन्ते 'अहमन्नमन्नमदन्तमद्मी,' तिवत् । भोगयोग्यो भूत्वा भुज्यत इत्यर्थः ॥ ६४ ॥

ऊर्द्ध्वपुण्ड्रान्तरालस्थांश्चक्रादीन्धारयेत्सदा ।
बहिष्कृता ह्यतिक्रुद्धाः पदात्प्रच्यावयन्ति ते ॥ ६५ ॥

ऊर्द्ध्वपुण्ड्रेति । चक्रादीन्हेतीन्सदा ऊर्द्ध्वपुंड्राणामन्तरालस्थान्धारयेत् । बहिष्कृताः उर्द्ध्वपुण्ड्रान्तरालस्थतया अधृताश्चेत्पदात्प्रच्यावयन्ति । चक्रादिभिरङ्कनं बाहुवक्षोललाटमस्तके धार्य्योर्द्ध्वपुण्ड्रान्तरालस्थलेष्वेव कर्त्तव्यमित्यर्थः ॥ ६५ ॥

प्रातर्मध्यंदिने सायमूर्द्ध्वपुण्ड्रेण केशवः ।
अकृतैर्वापि सुकृतैस्तैस्तैः प्रीणाति कर्मभिः ॥ ६६ ॥

प्रातरिति । अकृतैः सुकृतैः सम्यगनुष्ठितैर्वातैस्तैस्तत्कालचोदितैः कर्मभिः केशवः प्रीणाति । कालत्रयोर्द्ध्वपुण्ड्रधारणं तत्तत्कालविहितकर्मणां न्यूनातिरिक्तदोषशामकतया भगवत्प्रीणनमिति भावः ॥ ६६ ॥

प्रभाते दिव्यलोकस्थं मध्याह्ने चार्कमध्यगम् ।
तोषयन्त्यूर्द्ध्वपुण्ड्रेण सायं स्वात्मगतं हरिम् ॥ ६७ ॥

प्रभात इति । दिव्यलोकस्थं परमपदवासिनं मध्याह्ने अर्कमध्यगम् । आदित्यमण्डलान्तर्वर्तिनं सायङ्काले ॥ ६७ ॥

सन्तः सतोऽनुगृह्णन्ति दर्शनादेव लक्ष्मभिः ।
त्यजन्त्यन्ये तदुभयं मुख्यमैकान्त्यकारणम् ॥ ६८ ॥

लक्ष्मधारणस्य फलान्तरमाह-सन्तइति । सन्तः शेषत्वज्ञानलब्धसत्ताका लक्ष्मभिः चक्राद्यूर्द्धपुण्ड्रान्तैः चिह्नैर्दर्शनादेव दर्शनमात्रेण सतः सत्पुरुषाननुगृह्णन्ति सतो मत्वा परिगृह्णन्तीत्यर्थः । अन्ये असन्तः अवैष्णवा वैष्णवचिह्नं दृष्ट्वा वैष्णवा इमे इति त्यजन्ति । तदुभयं सत्परिग्रहासत्परिग्रहात्मकद्वयमपि मुख्यं प्रधानम् ऐकान्तस्य परमैकान्तित्वस्य कारणमतो लक्ष्मधारणमावश्यकमित्यर्थः ॥ ६८ ॥

क्रमाप्तभगवन्मन्त्रः कल्पविच्छुद्धमानसः ।
धृतोर्द्ध्वपुण्ड्रश्चक्रादिलाञ्छितो हरिमर्चयेत् ॥ ६९ ॥

अथ भक्तिं प्रपञ्चयन् लक्ष्माङ्गत्वाद्भक्तेर्लक्ष्मप्रपञ्चनानन्तरं भक्तिप्रपञ्चनमुचितमिति सङ्गतिमभिप्रदर्शयन्नाह-क्रमाप्तेति क्रमाप्तभगवन्मन्त्रः सम्प्रदायक्रमलब्धभगवन्मन्त्रः । कल्पविन्मन्त्रकल्पज्ञः भगवत्समाराधनकल्पज्ञो वा ॥ ६९ ॥

यथापूर्वाकृतीन्नित्यान्मुक्तांश्चैव यथागमम् ।
यथावतारदेहं च पूजयेद्धरिमिच्छया ॥ ७० ॥

अर्चयेदित्यर्चनं प्रस्तुतम् । तच्च सपरिवारकं भगवद्विषयकं परिवाराश्च नित्यमुक्ताः । किमाकृतींस्तानर्चयेत् । कीदृशाकृतिं हरिं वा पूजयेदित्यपेक्षायामाह-यथेति । मुक्तान्यथापूर्वाकृतीन् तादृशाकृतिमतः पूजयेदित्यर्थः । इच्छया बहुष्ववतारेषु स्वेच्छाविषयं पूजयेदित्यर्थः ॥ ७० ॥

अवैष्णवाद्वैष्णवाद्वा चेतनं वाप्यचेतनम् ।
यदवाप्तं समस्तं तद्विष्णवे विनिवेदयेत् ॥ ७१ ॥

त्मकं भगवते निवेदनीयमित्याह–अवैष्णवादिति। अवैष्णवोऽप्यत्र शाण्डिल्यादिप्रतिषिद्धकुलटापाखण्डपतितादिव्यतिरिक्तः अनुकूलो ज्ञेयः । वैष्णवात्तस्मादलाभे अवैष्णवाद्वा प्राप्तं चेतनाचेतनात्मकं सर्वं विष्णवे विनिवेदयेदित्यर्थः ॥ ७१ ॥

वासः स्रग्गन्धभूषादि भक्ष्यभोज्यादिकं तथा ।
न किञ्चिदुपभोक्तव्यमनिवेद्य श्रियःपतेः ॥ ७२ ॥

भगवदर्थमुपादत्तस्य भगवते निवेदनात्पूर्वमुपयोगो न कर्त्तव्य इत्याह–वास इति। वासो वस्त्रम् स्रक् माला गन्धः मलयजादिः। भूषा भूषणम् आदिशब्दादायुधादिसंग्रहः भक्ष्यं शष्कुल्यादि भोज्यमन्नादि आदिशब्दाच्चोष्यादिग्रहणम् ॥ ७२ ॥

वेदवेदाङ्गतत्त्वज्ञो वेदान्तपरिनिष्ठितः ।
मीमांसान्यायनिपुणो धर्मशास्त्रविशारदः ॥ ७३ ॥

अथ दृष्टिं प्रपञ्चयन् 'यदेव विद्यया करोति तदेववीर्य्यवत्तरं भवती' ति न्यायेन ज्ञानपूर्वकमेव पारमैकान्त्यनियतं धर्मानुष्ठानं कर्त्तव्यमित्याह–वेदेति । वेदाः ऋग्यजुःसामाथर्वाख्याः वेदाङ्गानि शिक्षाकल्पव्याकरणनिरुक्तज्योतिश्छन्दांसि वेदान्तपरिनिष्ठितः मीमांसान्यायनिपुणः वेदपूर्वोत्तरभागार्थनिर्णायकमीमांसाद्वयनिपुणः । धर्मशास्त्रविशारदः पूर्वभागोपबृंहणमन्वादिधर्मशास्त्रपरिशीलनपरः। अस्य श्लोकस्य उत्तरश्लोकेनान्वयः ॥ ७३ ॥

इतिहासपुराणज्ञः पंचरात्रार्थतत्त्ववित् ।
परं भगवदैकान्त्यं ज्ञात्वा धर्मं समाचरेत् ॥ ७४ ॥

इतिहासेति । इतिहासपुराणज्ञः उत्तरभागोपबृंहणभारतरामायणवैष्णवपुराणभागवतादिषु गृहीततात्पर्यः। पंचरात्रार्थ-



तत्ववित् परमैकान्तिधर्मानुष्ठानपरस्य परमकारुणिकेन भगवता वेदवेदान्तार्थनिर्णयाय प्रवर्तितस्य पंचरात्राख्यस्य दिव्यशास्त्रस्य तत्त्वज्ञः परं 'सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः' इत्यादिभिः ॥ ७४ ॥

सर्वसंस्कारसंस्कारो ज्ञानं भागवतं परम् ।
तत्संस्कृता हि संस्काराः कल्पन्ते मुक्तिहेतवः ॥ ७५ ॥

सर्वेति । भागवतं भगवद्विषयकं ज्ञानम् इदं चार्थपंचकज्ञानस्याप्युपलक्षणार्थम्। यद्वा, सप्रकारकभगवज्ज्ञाने अर्थपंचकज्ञान स्यापि सिद्धत्वात्तथोक्तिः । सर्वेषामपि संस्काराणां वर्णाश्रमनियतानां चत्वारिंशत्संस्काराणां वैष्णवत्वनियतानां चक्राद्यंकनादीनां च संस्कारः अतिशयापादकः । हि यस्मात्कारणात संस्कारास्तत्संस्कृताः ज्ञानसंस्कृताः मुक्तिहेतवः कल्पन्ते अतो भागवतज्ञानं सर्वसंस्कार इत्यर्थः ॥ ७५ ॥

परमात्मा हरिः स्वामी स्वतोऽहं तस्य किङ्करः ।
कैङ्कर्य्यमखिला वृत्तिरित्येष ज्ञानसंग्रहः ॥ ७६ ॥

किं तद्भागवतं ज्ञानं यत्पुनः सर्वसंस्काररूपमुच्यत इत्यपेक्षायां संग्रहेणाह—परमात्मेति । परमात्माआत्मनामन्तरात्मा। 'हरिर्ब्रह्माणमीशमिन्द्रश्च यमं वरुणमेव च।प्रसह्य हरते यस्मात्तस्माद्धरिरिहोच्यते' इति प्रमाणनिरूपणनिरुक्तहरिनामा स्वामी मध्यस्थः स्वतःशब्दः काकाक्षिन्यायादत्राप्यन्वेति। निरुपाधिकशेषीत्यर्थः । अहम् अहंबुद्धिवेद्यः प्रत्यगर्थः । स्वतः किङ्करः निरुपाधिकशेषभूतः।'दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनः। नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैवच'इत्यादिकमनुसन्धेयम्। अखिला वृत्तिः सर्वोऽपि व्यापारः लौकिकरूपः कैङ्कर्य्यलीलारसग्रहनिवर्त्तकतया कैङ्कर्य्यरूपमिति । इत्येष ज्ञा-

नसंग्रहः । अवश्यापेक्षितं संग्रहरूपं ज्ञानमित्यर्थः । यद्वा इति-शब्दः पूर्वोक्तप्रतिपादितपरः।'परमात्मा हरिः स्वामी स्वतोऽहं तस्य किङ्करः । कैङ्कर्यमखिला वृत्ति' रित्येषश्लोकांशो ज्ञानस्य संग्रहः संगृह्यत इति संग्रहः संग्राहक इत्यर्थः ॥ ७६ ॥

नित्यमर्चाजपध्यानस्नानदानव्रतादिकम् ।
विशुद्धमेव कर्त्तव्यमनन्यैर्न विमिश्रितम् ॥ ७७ ॥

अथ विहिताचारम्प्रपंचयन् नित्यनैमित्तिककाम्यरूपेण त्रिविधस्यापि तस्य शुद्धमिश्रभेदेन भिन्नत्वात्काम्येषु विमिश्रा नन्वयेऽपि नित्यनैमित्तिकयोस्तदन्वयाभ्यनुज्ञानात् नित्यनैमि-त्तिकयोरविशेषेण सर्वशोऽपि विमिश्रस्य प्राप्त्या तयोरपि कानिचित्कर्माणि शुद्धान्येव कुर्यात् इत्याह—नित्यमित्या-दिना । अर्चा देवपूजा । जपः निष्ठामन्त्रजपः ध्यानं स्मृति-संततिः व्रतम् एकादश्युपवासादिकम् अर्चादिकन्नित्यन्ताद्वि-शुद्धमेव कर्त्तव्यम् । देवतान्तरसम्बन्धसहितमर्चनादिकम् तन्न-कर्त्तव्यमित्यर्थः । ऐच्छमिच्छाजपध्यानेत्यपरः पाठः । तथावि-धम् इच्छायां सत्यां कर्तव्यमनुज्ञाकैंकर्यमित्यर्थः । ऐच्छ मिति पाठान्नित्यमिति पाठ एव साधुः । उत्तरं नैमित्तिककाम्य योर्वक्ष्यमाणत्वात् नित्यस्यार्चाजपादेः शुद्धसेवाचारात् कैश्चि-दपि परमैकान्तिभिरर्चादेर्मिश्रस्यानुष्ठानात् । 'तथाशुद्धं पर-ब्रह्मविशुद्धपरिवारकम् । इज्यतेविविधैर्भोगैर्नित्यं च प्रतिमादि ष्विति' नित्यार्चायाः शुद्धाया एवं पूर्वमुक्तत्वाच्च । ननु गायत्री जपः कथमिति चेन्न तस्य सन्ध्योपास्त्यन्तर्गतत्वेन पृथक्कर्मत्वा-भावात्तस्याश्च मिश्राया एवाभावाभ्यनुज्ञातत्वेन तदन्तर्गतस्य तस्याप्यनुज्ञातत्वात्।अत्रोच्यमानस्य नह्यतिरिक्तनिष्ठामन्त्रजप त्वात् न च मन्त्रः कश्चिदपि देवतान्तरमिश्रितः पारमैकान्ति-भिर्निष्ठामन्त्रतया जप्य इत्यर्थः ॥ ७७ ॥

सद्ब्रह्म वासुदेवाद्यैर्विविक्तैर्यत्र नामभिः ।
प्रोच्यते भगवान्विष्णुस्तद्विशुद्धमुदाहृतम् ॥ ७८ ॥

शुद्धस्य स्वरूपमाह-सद्ब्रह्मेति । यत्र कर्मणि विविक्तैः केवलभगवद्वाचकैः सदादिभिर्नामभिः भगवान्विष्णुः प्रोच्यते तत्कर्म विशुद्धमुदाहृतम्।देवतान्तरान्तर्य्यामिभावमन्तरेण साक्षाद्भगवद्देवताकं विशुद्धमित्यर्थः ॥ ७८ ॥

यत्राविविक्तैः शब्दैस्तु प्रोच्यते पुरुषोत्तमः ।
देवादीनामशुद्धानां व्यामिश्रं तत्प्रचक्षते ॥ ७९ ॥

विमिश्रितस्वरूपमाह-यत्रेति । यत्र कर्मणि अविविक्तैः केवलभगवद्वाचकेभ्यः सद्ब्रह्मादिशब्देभ्यो विविक्तेभ्यो भिन्नैः अशुद्धानां रजस्तमोऽभिभूतानां देवादीनां शब्दैः धातृशक्तिशिवादीनां नामभिः पुरुषोत्तमः प्रोच्यते तत्कर्म व्यामिश्रं प्रोच्यते । अशुद्धदेवतान्तर्यामिभावेन भगवद्देवताकं विमिश्रितमित्यर्थः ॥ ७९ ॥

दुर्निमित्तमये पापे ग्रहादीनां विपर्य्यये ।
विष्णुतद्भक्तपूजाभिः शान्तिं कुर्वीत नान्यथा ॥ ८० ॥

नैमित्तिकान्यपि कानिचिद्विशुद्धान्येव कर्तव्यानीत्याह-दुरिति । दुर्निमित्तत्वलक्षणं भयमकस्मान्मानसोद्वेगरूपम्।यद्वा भयशब्दस्य तत्कारणे लक्षणया दुर्निमित्तादिविशेषणत्वम् । तत्प्रभृतिभिरुत्थितं वा पापम् अकृत्यकरणकृत्याकरणभगवदपचारभागवतापचारादिकम् । ग्रहादीनां सूर्यादीनां विपर्ययो द्वादशाष्टमजन्मादिव्यवस्थानम् एषु निमित्तेषु यथायोग्यं विष्णुतद्भक्तपूजादिभिः शान्तिं कुर्वीत नान्यथा । ग्रहयज्ञादिना विमिश्रितेन न कुर्वीतेत्यर्थः । विष्णुपूजाभिः शान्तिश्च परमाख्या, वैयूही मूर्त्याख्या, वैभवीतिचेत्युक्ता चतुष्टयीमहा-

शान्तिस्तद्भक्तपूजा[illegible]
सौदर्शनी ततः 'इत्युक्ता उपशान्तिचतुष्टयी'। तथा च वक्ष्यति 'करणे प्रतिषिद्धानां विहिताकरणे तथा । विधेयामहतीशान्तिर्विज्ञायगुरुलाघवम् । अवैष्णवेभ्यो यत्किंचित्प्रतिगृह्य प्रदाय वा । कृत्वोपशान्तिं शुद्ध्येत परिवादे सतामपि । असतः परिगृह्णीयात् पुत्रदारादिकान् यदि । विधाय परमां शान्तिं वृत्तिमाचारयेन्निजाम् । भजनेचान्यदेवानामनाचारे च शार्ङ्गिणः । वैयूहीं परमां वापि कुर्याच्छान्तिं विशुद्धये । लक्षणानामकरणे धारणे चान्यलक्षणे । मूर्तिं कुर्यान्महाशान्तिं तथा सौदर्शनीन्तु वा । अपचारे गुरूणाञ्च वैष्णवानां च सर्वशः । वैष्वक्सेन्यथ वा शान्तिः कार्या चासन्निषेवणे । असाच्छास्त्राभियोगं सच्छास्त्राणां निराकृतौ । कर्त्तव्या गारुडी शान्तिर्दुर्निमित्तेषु वैष्णवी' इत्यादि ॥ ८० ॥

प्राज्यैः प्रियतमैर्भोगैर्विशेषेण जनार्दनम् ।
आराधयेन्निमित्तेषु वैष्णवाँश्च विशेषतः ॥ ८१ ॥

अल्पेषु निमित्तेषु चन्दनकुसुमादिभिः पायसापूपादिभिश्च भगवन्तमाराध्य वैष्णवानप्याराधयेदित्यत्राह—प्राज्या इति । यद्वा उक्तमेवार्थं विशदयन्नाह—प्राज्यैरिति । प्राज्यैः श्रेष्ठैः प्रियतमैरिष्टैः । प्राज्यैरित्यनेन लोके श्रेष्ठतया प्रसिद्धवृत्तान्तैः । प्रियतमैरित्यनेन आत्मनः प्रियतमा उच्यन्ते । 'यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते' इत्युक्तम् । भोगैर्गन्धपुष्पधूपदीपसूपापूपादिभिः विशेषेण नित्यपरिकरादाधिक्येन । ननूक्तं 'न पापेन न पुण्येन नात्यायासेन कर्मणा । सम्पदां संग्रहं कुर्याद्विपदां च प्रतिक्रियाम् ।' इति तत्कथमुच्यते दुर्निमित्तेत्यादिना पुण्येन विपत्प्रतीकार इति । उच्यते । तत्रापि प्राप्तायाः रोगदारिद्र्यादिरूपाया विपदः प्रतीकारः पुण्यने

कर्त्तव्य इत्युच्यते । न प्रत्यवायपर्य्यवसन्ना प्रतीकारकेषु दुर्निमित्तादिषु विहिता शान्तिः प्रतिषिध्यते । तत्रापि 'विनैव प्रतिषेधेन सर्वार्थान्साधयेत्सतामिति' पुण्येनापि वैष्णवानां सम्पत्संग्रहविपत्प्रतीकारयोश्चोक्तत्वात्तदर्थं वा उक्तनिमित्तेषु भगवद्भागवताराधनस्याविरोधात 'घृतश्च परितानेन शान्तिं शश्वत्प्रयोजये,दिति स्वधर्माविभेदार्थमपि शान्त्यनुष्ठानं परिनिष्ठम्। तस्मान्न पापेनेत्यादिना प्रत्यवायपर्य्यवसन्ना प्रतिकारविपत्प्रतीकारो निषध्यत इति न विरोधः ॥ ८१ ॥

कुर्वन्ति वैष्णवार्थाय स्वधर्माणाञ्च सिद्धये ।
शान्तिकर्म हरेः केचित्प्रपत्तिं केवलं हरेः ॥ ८२ ॥

शान्त्यनुष्ठानस्य वैष्णवप्रयोजनवृत्तेः परिपोषलक्षणफलद्वयेन संग्रहप्रपत्त्या समविकल्पं दर्शयति-कुर्वन्ति इति । वैष्णवार्थाय वैष्णवप्रयोजनाय स्वधर्माणां स्ववृत्तेः सिद्धये परिपोषाय च शान्तिकर्म कुर्वन्ति केचिद्धरेः केवलां प्रपत्तिमेव कुर्वन्ति । केचिदित्यनेन शान्तिकर्मकरणानधिकारिण उच्यन्ते । प्रपत्तिलक्षणपरीक्षायां स्वाभीष्टस्वानन्यसाध्यत्वावश्यं भावादकिंचनस्य चाधिकारित्वात ॥ ८२ ॥

यास्तत्रतत्रश्रूयन्ते पुंसां काम्यतया श्रुतौ ।
ताः किलैकान्तिना दिव्या भगवद्भोगसम्पदः ॥ ८३ ॥

शुद्धानि काम्यान्यपि कर्माणि स्वयं प्रयोजनभगवत्कैंकर्यतयानुष्ठेयानीत्याह-या इति । श्रुतौ तत्रतत्र याः क्रियाःकाम्यतया श्रूयन्ते एकान्तिनां विद्याशुद्धास्ताः क्रियाभगवद्भोगसम्पदः भगवतोऽत्यन्तमभिमता इत्यर्थः 'याः क्रियाः संप्रयुक्ताः स्युरैकान्त्यगतबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयमि'त्युक्तत्वात । यद्वा पुंसां काम्यतया श्रुतौ याः क्रियाः

श्रूयन्ते ताः परमैकान्तिनां भगवद्भोगसम्पदः भगवदाराधनरूपाः। संपच्छब्देन स्वयं पुरुषार्थत्वमुच्यते। स्वयं पुरुषार्थः भगवत्कैंकर्यमित्यर्थः॥ ८३॥

आरम्भे कर्मणां सिद्ध्यै विघ्नानां प्रशमाय च।
कुर्यात्सपरिवारस्य विष्वक्सेनस्य पूजनम्॥ ८४॥

कर्मारम्भेषु विघ्नोत्सारणार्थं कर्मानुष्ठानमविशुद्धमेव कुर्यादित्याह—आरम्भे इति। सिद्ध्यै अभिवृद्धये सपरिवारस्य गजाननजयत्सेनहरिवक्रकालप्रकृतिसंज्ञाख्यपार्षदसमेतस्य। गजाननादीनामपि विघ्ननिवर्तकत्वं प्रसिद्धम्।'यस्य द्विरदवक्त्राद्याः पारिषद्याः परः शतम्। विघ्नं निघ्नन्ति भजतां विष्वक्सेनं तमाश्रये' इति सकलशिष्टैर्वाक्यतयानुसन्धानात। उक्तंच भट्टपराशरैः। 'विदधतु सकलं विष्वक्सेनस्य ते प्रथमैर्विषमैर्भटैः करिमुखजयत्सेनौ कालप्रकृतिसिंहमुखाद्योगणाः। जगति भवन्ति भजतां तत्प्रत्यूहतूलदवानला दिशिदिशि विचरन्तः श्रीरङ्गपालनकर्मठाः' इति॥ ८४॥

स्वल्पापि हन्ति भूयांसं स्वधर्मं निन्दिता क्रिया।
दृष्टिं कुदृष्टिर्भक्तिन्तु देवतान्तरसंश्रयः॥ ८५॥

वृत्तिं प्रपञ्चयँस्तद्विरुद्धवर्जनमाह—स्वल्पेति। भूयांसं स्वधर्मं स्वल्पापि निन्दिता क्रिया हन्ति कुदृष्टिर्दृष्टिं हन्ति देवतान्तरसंश्रयश्च भक्तिं हन्ति॥ ८५॥

सत्सेवनमसत्सेवा लक्षणं चान्यलक्ष्मता।
तस्माद्विरुद्धान्येकान्ती विशेषेण विवर्जयेत्॥ ८६॥

सत्सेवनामिति। असत्सेवा सत्सेवनं हन्ति। अन्यलक्ष्मता देवतान्तरचिह्नधारणं लक्षणं लक्ष्माख्यं वृत्त्यवयवं हन्ति॥८६॥

---

१ प्रत्यन्तरविरहाच्छोद्धुन्नाशकं सम्यक्श्लोकमिमम्॥

एकस्यापि हि धर्मस्य विनाशे च विरोधिभिः ।
अनन्वयापचारेण नश्यत्येकान्तिवृत्तिता ॥ ८७ ॥

एकस्येति । एकस्यापि विहिताचारादिष्वेकस्यापि धर्मस्य विरोधिभिर्निन्दितक्रियादृष्टिभिर्विनाशे सति अनन्वयापचारेण वृत्त्यन्वयाभावरूपापचारेण ऐकान्त्यवृत्तिता नश्यति। अनन्वयापचारेति पाठे धर्मस्य अन्वयरूपे अकरणरूपे चेत्यर्थः॥८७॥

परमैकान्तिनां धर्मः कृते पूर्णः प्रवर्त्तते ।
क्षीयमाणः क्रमेणायं कलौ स्थास्यति वा न वा ॥८८॥

परमैकान्तिनामाचारस्यान्यदुर्लभत्त्वं ज्ञापयितुं तस्य कृते पूर्णतां क्रमेण हानिं चाह—परमैकान्तिनामिति । कृते कृतयुगे क्रमेण युगक्रमेण स्थास्यति वा न वेत्यन्वयस्य 'यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः।कलिः कृतयुगं तस्य कृतं तस्य कलिर्भवेत्' इति । कलावपि कृतयुगसम्भवादिति विरलतया क्वचिदेव महानुभावे पुरुषधौरेये परमैकान्तिधर्मोऽयं वर्तते न प्रचुरतयेति भावः ॥ ८८ ॥

नानाकामहतज्ञाना नानादैवतयाजिनः ।
नरा भगवदैकान्त्ये न स्थास्यन्ति कलौ युगे ॥ ८९ ॥

नानेति । नानाकामहतज्ञाना बहुविधफलाभिलाषा नष्टबुद्धयः नानादैवतयाजिनः रजस्तमःप्रचुरदेवतान्तरपूजकाः । इदञ्च विशेषणद्वयं पारमैकान्त्यानवस्थाने हेतुतयोक्तम् ॥ ८९॥

परं भागवतं वर्त्म दृष्ट्वापि कलिमोहिताः ।
प्रभवन्ति न विद्वांसस्त्यक्तुं पूर्वान्धवर्त्मनीम् ॥ ९० ॥

एवं पारमैकान्त्यज्ञानस्याभावे केचित्पारमैकान्त्ये न स्थास्यन्ति; इत्युक्त्वा केचित् ज्ञात्वापि दुर्वासनामहिम्ना पारमै-

कान्त्येन स्थास्यन्तीत्याह-परमिति । परं सर्वोत्कृष्टं सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिरित्युक्तत्वाद्भागवतं धर्मं वैष्णवं मार्गं दृष्ट्वा ज्ञात्वापि विद्वांसो विबुधाः कलिमोहिताः सन्तः पूर्वेषामन्धानां वर्त्तनीं त्यक्तुं न प्रभवन्ति समर्था न भवंति पितृपितामहादिपरिगृहीतवर्त्तनीदुर्वासनादार्ढ्यात् । ज्ञात्वापि पारमैकान्त्यं न तत्र तिष्ठन्तीत्यर्थः ॥ ९० ॥

भविष्यन्ति कलौ केचित्क्वचिदेकान्तिनो हरेः ।
मोहयिष्यन्ति च परे कुतर्कैस्तान्कुदृष्टयः ॥ ९१ ॥

भविष्यन्तीति । केचिन्न सर्वे क्वचिन्न सर्वत्र एकान्तिनः परमैकान्तिन इत्यर्थः।कुतर्कैः प्रमाणविरुद्धतर्कैः कुदृष्टयः रजस्तमोमूलग्रन्थजन्यविपर्ययज्ञानाः ॥ ९१ ॥

निरीश्वराः कर्मफला निष्क्रिया ब्रह्मवादिनः ।
परावरविमूढाश्च भविष्यन्ति कलौ युगे ॥ ९२ ॥

निरीश्वरा इति । केचित्कर्मपराः कर्मरताः निरीश्वराः भविष्यन्ति इत्यनेन कबन्धमीमांसका उक्ताः केचिद् ब्रह्मवादिनो निष्क्रिया भविष्यन्तीत्यनेन राहुमीमांसका उक्ताः। केचित्परावरविमूढा भविष्यन्ति कुत्र? कलौ युगे ॥ ९२ ॥

क्षीणायुर्ज्ञानशक्तित्वान्मनुष्याणां कलौ युगे ।
विद्यानां परमा विद्या न्यास एव परायणम् ॥ ९३ ॥

एवं कलियुगस्य सकलपरमधर्मं लब्धुमनर्हतया पापिष्ठत्वमुक्त्वा तस्मिन्नुपायान्तरानुष्ठानाशक्तानां पुरुषाणां प्रपत्तिरेव भवभयसंतरणोपाय इत्याह-क्षीणायुरिति क्षीणमल्पम् आयुर्ज्ञानं शक्तिश्च येषां तेषां भावस्तत्त्वं तस्मात् । क्षीणायुष्यकथनेन बहुकालसाध्योपायान्तराभाव उक्तः। एवं ज्ञानशक्तिसाध्य-

त्वादुपायान्तराणां क्षीणज्ञानशक्तित्वकथनेनापि तदन्वय उक्तः विद्यानां परमाविद्या अनवधिकायाससाध्यकर्मज्ञानाङ्गकत्रैवर्णिकाधिकारिकाविलम्बितफलकेभ्यो विध्यन्तरेभ्योऽधिकाविद्या न्यास एव न्यासशब्दवाच्या प्रपत्तिरेव परायणम् उपायः 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहु' रिति श्रुतिः स्मारिता विद्यानां परमा विद्या न्यास इत्यर्थः ॥ ९३ ॥

कर्म ज्ञानञ्च भक्तिश्च साधनानि मनीषिणाम् ।
न्यास एवाचिरात्सिद्धिं वाञ्छतां सर्वदेहिनाम् ॥ ९४ ॥

परमविद्यात्वमेव विशदयति—कर्मेति । कर्म कर्मयोगः । ज्ञानं ज्ञानयोगः । भक्तिर्भक्तियोगः । मनीषिणां ज्ञानिनाम् । साधनानि सद्वारकतया च मोक्षं प्रतिसाधानानि कर्मज्ञाने तु सद्वारकतया साधनम् । मनीषिणामित्यनेन अधिकृताधिकारत्वं ज्ञाप्यते । अचिरात् क्षिप्रमेव सिद्धिं वाञ्छतां सर्वदेहिनां न्यास एव साधनमिति वचनव्यत्ययेन सम्बन्धः । अचिरादित्यनेन शीघ्रफलप्रदत्वरूपातिशयः सिद्धिमिति सामान्यशब्देन सकलफलप्रदत्वातिशयः । सर्वदेहिनामित्यनेन सर्वाधिकारकत्वरूपातिशयश्च प्रतिपाद्यते ॥ ९४ ॥

ज्ञानानन्दमयो नित्यः शुद्धो देहान्तरं हरेः ।
जीवोऽयं संसरत्यस्य माययैव विमोहितः ॥ ९५ ॥

नित्यशुद्धार्हस्यापि जीवस्य भगवन्मायातिरोहितस्वभावतया कर्मकृतनिरतिशयावार्याशुद्धिभोक्तृत्वम् । तद्वारणाय प्रपत्तिरवश्यं कर्तव्येत्याह—ज्ञानानन्दमयेत्यादिश्लोकद्वयेन । अयं जीवो ज्ञानानन्दमयः ज्ञानानन्दस्वरूपः ज्ञानानन्दगुणक इति वा नित्यः । उभयावधिरहितः । शुद्धः । नित्यशुद्धार्ह इति वा । अन्यथासंसरतः शुध्यभावात् । हरेः देहान्तरं शरीरान्तर-

मित्यर्थः। तथापि अस्य हरेः चेतनकर्मानुरूपसङ्कल्पेन तदधीनतया प्रकृत्या वा विमोहितः सन्संसरति ॥ ९५ ॥

अनीश्वरोऽहमीशोऽहमिति धीर्मायया हरेः।
भवेत्सा संसृतेर्मूलं तं प्रपद्यैव तां त्यजेत् ॥ ९६ ॥

अनीश्वर इति। अहम् अनीश्वर ईश्वररहितः। अहमेवेश इति-धीर्बुद्धिर्हरेर्मायया भवति सा अनीश्वरोऽहमीश्वरोऽहमिति धीः संसृतेः संसारस्य मूलं भवति। अतस्तां मायान्तं प्रपद्यैव वर्जयेत भगवन्तं शरणमुपगम्य वर्जयेत्। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यत्रानुसन्धेयम्। तं प्रपद्यैवेत्येवकारेण लिङ्गभावेन वा प्रपत्तिमभिगम्यैव मायां जयेत्। नान्यथेत्यवगम्यते ॥ ९६ ॥

ज्ञानानन्दमयोऽनन्तो दिव्यात्मगुणविग्रहः।
नारायणो जगद्योनिः प्राप्यो लक्ष्मीपतिः स्वयम् ॥ ९७ ॥

एवं विद्यानां परमा विद्येत्यादिना उपायस्वरूपमुक्तम्—ज्ञानेति। ज्ञानानन्दमयो ज्ञानानन्दस्वरूपः ज्ञानानन्दप्रचुर इति वा। अनन्तः देशादिपरिच्छेदरहितः। दिव्या अकर्मकृताः आत्म गुणविग्रहाश्च यस्य स तथोक्तो नारायणः नारशब्दवाच्यत्वेन चेतनात्मकनित्यवस्तुसर्वायनभूतः। जगद्योनिः जगाद्भिन्ननिजभिन्नोपादानभूतः। लक्ष्मीपतिर्नारायणः सतां प्राप्य इत्यन्वयः ॥ ९७ ॥

आब्रह्मलोकाल्लोकानां यदैश्वर्यं न तद्ध्रुवम्।
अथ नित्यं महत्साधु यद्दास्यं परमात्मनः ॥ ९८ ॥

अथ प्राप्तिस्वरूपमाह—आब्रह्मेति। आब्रह्मलोकादित्यत्राभिविधिरेव ग्राह्यः। ब्रह्मलोकमभिव्याप्य यल्लोकानामैश्वर्यं

तन्न ध्रुवम्, अनित्यं कर्मणां परिपाकत्वादाविर्भावममङ्गलम् इत्यादिकमत्रानुसन्धेयम् । अथ परमात्मनो यद्दास्यं तत्साधु निरवद्यं महत् निरातिशयं नित्यम् अन्तरहितं फलमिति शेषः । यत्साधु मोक्षदशायां साधुतया भासमानं महत्सर्वोत्तरं दास्यं तन्नित्यमिति वान्वयः ॥ ९८ ॥

एवंविधस्वधर्मेण युक्तस्यानन्यचेतसः ।
नित्यमाराधनं विष्णोर्यत्तद्दास्यमिहोच्यते ॥ ९९ ॥

मुमुक्षुत्वावस्थायामपि भगवद्दास्यरूपं फलमाह–एवंविधेति। एवंविधस्वधर्मेण गुणयुक्तस्यानन्यचेतसः प्रयोजनान्तरविमुखस्य चेतनस्य यन्नित्यमहरहर्हरेर्विष्णोराराधनं तदिह अस्मिन् लोके दास्यमुच्यते । मोक्षभगवदिच्छासाक्षात्कारपूर्वकं क्रियमाणस्य निरातिशयकैङ्कर्यस्यैव पुरुषार्थत्वात्तस्य चात्र सम्भवान्नित्यं भगवदाराधनात्मकं दास्यमिह पुरुषार्थ इतिभावः॥९९॥

अनुज्ञाताः स्त्रियश्चैवमर्चयन्त्यो जगद्गुरुम् ।
यथार्हमपि शूद्राद्याः सर्वे यान्ति परां गतिम्॥ १०० ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहितायां परिशिष्टे
प्रथमोऽध्यायः ॥ १ ॥

---

भगवदाराधनात्मके दास्ये स्त्रीशूद्रादीनामप्यधिकारोऽस्तीत्याह–अनुज्ञाता इति । अनुज्ञाता आचार्यादिभिः पतिपुत्रादिभिर्वा यथार्हं स्वार्हकत्वेन अर्चयन्त्यः शूद्राद्या इत्यादिशब्देन अनुलोमप्रतिलोमजातानां ग्रहणम् ॥ १०० ॥

इति श्रीनारदपंचरात्रे भारद्वाजसंहितापरिशिष्टटीकायां प्रथमोऽध्यायः ॥ १ ॥

---

उपासितगुरोर्वर्षं विष्णोर्दास्यमभीप्सतः ।
विहिताः पञ्च संस्कारा युक्तस्यैकान्त्यहेतवः ॥ १ ॥

अथ भगवदाराधनस्य संस्कारपञ्चकसंस्कृताधिकारिकत्वादनेनाध्यायेन तत्संस्कारमाह—उपासितेति। वर्षमुपासितगुरोः। अत्यन्तसंयोगे द्वितीया युक्तस्य शिष्यगुणयुक्तस्य ॥ १ ॥

तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः ।
अमी हि पञ्च संस्काराः पारमैकान्त्यहेतवः ॥ २ ॥

संस्कारानन्नुक्रमते—ताप इति। परमसंस्कारा गर्भाधानादिभ्यः संस्कारेभ्योऽपि अविलम्बेन मोक्षप्रदतया अत्यन्तमुत्कृष्टाः । पारमैकान्त्यहेतवः परमैकान्तित्वप्राप्तिकारणानि ॥ २ ॥

तापयिष्यन् गुरुः शिष्यं चक्राद्यैर्हेतिभिर्हरेः ।
पुण्येऽह्नि नियतः स्नात्वा स्नातं मन्त्रजलाप्लुतम् ॥ ३ ॥

तापयिष्यन्निति । तापयिष्यन् तप्तान् करिष्यन् । हेतिभिरायुधैः ॥ ३ ॥

ऋचा दक्षिणतः कुर्याद्वैष्णव्या बद्धकौतुकम् ।
ततः समर्चयेद्देवं स्वार्चायां स्थण्डिलेऽपि वा ॥ ४ ॥

ऋचेति। वैष्णव्या ऋचा विष्णुप्रकाशिकया 'विष्णोर्नुक'मित्यादिकया दक्षिणतः दक्षिणकरे बद्धकौतुकं बद्धकङ्कणं कुर्यादिति पूर्वश्लोकेनान्वयः। ततः अनन्तरं स्वार्चायां स्वाराध्यबाह्यबिम्बे स्थण्डिलेऽपि वा देवं समर्चयेत् आराधयेत् ॥ ४ ॥

पश्चिमे स्वेन मन्त्रेण कृत्वाग्नेः स्थापनादिकम् ।
मूलमन्त्रेण हुत्वाज्यं ततः प्रत्यक्षराहुतीः ॥ ५ ॥

पश्चिम इति । पश्चिमे भगवतः पश्चिमभागे प्रत्यङ्मुखतयावस्थितस्य भगवतः पुरत इत्यर्थः । स्वेन मन्त्रेण स्वसूत्रोक्तवि-

धानेन अग्नेः स्थापनादिकम् अग्निप्रतिष्ठापनादिकं गृह्यते । मूलमन्त्रेण श्रीमदष्टाक्षरमन्त्रेण आज्यं हुत्वा ततस्तदनन्तरं प्रत्यक्षराहुतीर्हुत्वा एकैकाक्षरेण एकैकामाहुतिं हुत्वेत्यर्थः ॥५॥

एकां पुनश्च सर्वेण पौरुषीभिश्च षोडश ।

हुत्वा त्रीन्विष्णुगायत्र्या वैष्णव्या चाथ हेतिभिः ॥ ६ ॥

एकामिति।पुनश्च पुनरपि सर्वेण सकलेन श्रीमदष्टाक्षरेण एकामाहुतिं हुत्वेत्यर्थः। पौरुषीभिः पुरुषसूक्तस्थाभिः षोडशऋग्भिः षोडशाहुतीर्हुत्वा विष्णुगायत्र्या 'नारायणाय विद्महे' इत्यादिकया त्रिर्हुत्वा वैष्णव्या 'विष्णोर्नुक'मित्यादिकया ऋचा एकामाहुतिं हुत्वा अथ अनन्तरं हेतिभिः पञ्चायुधमन्त्रैर्हुत्वा॥६

हविर्निवेद्य देवाय तच्छेषेण तथाहुतीः ।
अथोपसन्ने हैमानि ताम्राणि राजतानि वा ॥ ७ ॥
प्रक्षाल्य पञ्चगव्येन मन्त्रतोयाप्लुतानि च ।
बिम्बानि पूर्वहेतीनां स्वभागनिहितानि वै ॥ ८ ॥
निधाय वह्नौ प्रत्येकं तत्रावाह्य स्वमन्त्रतः ।
अर्घ्यं पाद्यं तथाचम्यं गन्धं पुष्पञ्च धूपकम् ॥ ९ ॥
दीपञ्च दत्त्वाथाभ्यर्च्य प्रणम्याग्निसमप्रभम् ।
आचार्यः स्वयमादाय नियुक्तो वाथ मन्त्रवित् ॥ १० ॥
प्राङ्मुखस्योपविष्टस्य न्यसेद्बाहौ च दक्षिणे ।
सुदर्शनं तथा वामे पाञ्चजन्यं स्वमन्त्रतः ॥ ११ ॥

हविरिति । देवाय पूर्वमर्चिताय भगवते हविर्निवेद्य तच्छेषेण हविर्निवेदितशेषेण तथा आज्याहुत्युक्तक्रमेण आहुतीर्हुत्वा मूलमन्त्रेण ततः प्रत्यक्षरं पुनः सर्वेणैव पौरुषीभिः षोडशभि-

विष्णुगायत्र्या त्रिः वैष्णवैर्वा हेतिमन्त्रैश्च हुत्वेत्यर्थः । अथेति उपसन्ने शिष्ये उपसन्नेइत्यनुवादः। अर्चिताहानि इत्यपरः पाठः । अथनान्तरं हैमानि स्वर्णनिर्मितानि ताम्राणि ताम्रमयानि राजतानि रजतनिर्मितानि वा पूर्वं प्रथमं स्वभागनिहितानि देवस्य दक्षिणवामपार्श्वनिहितानि हेतीनां बिम्बानि चक्रादिकमुद्राः पञ्चगव्येन प्रक्षाल्य मन्त्रतोयाप्लुतानि कृत्वा प्रत्येकमग्नौ निधाय तत्र वह्निविनिहितचक्रादिमुद्रासु स्वमन्त्रतः चक्रादिमन्त्रेणावाह्य चक्रादिकामिति शेषः । चक्रमुद्रां वह्नौ निधाय तत्र सुदर्शनमावाह्य एवं पाञ्चजन्यमुद्रादिकमपि वह्नौ निधाय तत्र स्वमन्त्रेण पाञ्चजन्यादिकमावाह्येत्यर्थः इति श्लोकद्वयस्यार्थः । अर्घ्यमित्यादि । अर्घ्यादिभिरुपचारैः समभ्यर्च्य अथ प्रणम्य अग्निसमप्रभं सम्यक्तप्तं सुदर्शनमाचार्यः स्वमादाय नियुक्तः आचार्येण नियुक्तः अन्यो वा मन्त्रवित् ब्राह्मणास्योपविष्टस्य शिष्यस्य दक्षिणे बाहौ स्वमन्त्रतः 'सुदर्शनमहाज्वाले' ति मन्त्रेण सुदर्शनं न्यसेत् । ततोऽनन्तरं स्वमन्त्रतः । 'पाञ्चजन्यनिजध्वाने' ति मन्त्रेण वामे बाहौ पाञ्चजन्यं न्यसेदिति । श्लोकत्रयस्यार्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

एवं गदां धनुः खड्गं ललाटे मूर्ध्नि वक्षसि ।
चक्रं वा शङ्खचक्रे वा धारयेत्सर्वमेव वा ॥ १२ ॥

एवमिति । एवं पंचरात्रोक्तेन क्रमेणैव गदां कौमोदकीं धनुः शार्ङ्गं खड्गं नन्दकञ्च क्रमेण ललाटे मूर्ध्नि वक्षसि स्वमन्त्रेण न्यसेत् चक्रं वा केवलं चक्रमात्रञ्च धारयेत् । शंखचक्रद्वयमात्रं वा धारयेत् । सर्वमेव पञ्चायुधानि धारयेत् । अत्र व्यवस्थित विकल्पो वेदितव्यः ॥ १२ ॥

तन्त्रं समाप्य देवेशं सहशिष्यः प्रदक्षिणम् ।
कृत्वा प्रणम्य सान्निध्यं प्रार्थ्य शेषं समापयेत् ॥ १३ ॥

तन्त्रमिति । तन्त्रं होमतन्त्रं समाप्य सहशिष्यः शिष्यसहितो देवेशं प्रदक्षिणं कृत्वा प्रणम्य सान्निध्यं प्रार्थ्य याचनं कृत्वा शेषमिज्याशेषं समापयेत् ॥ १३ ॥

कुर्यात्सर्वत्र कर्मान्ते द्विजैः पुण्याहवाचनम् ।
आचार्यस्यार्चनं चैव वासःस्रग्भूषणादिभिः ॥ १४ ॥

कुर्य्यादिति । कर्मादौ अन्ते सर्वत्र तापादौ सर्वसंस्कारान्ते विशेषं प्रायश्चित्ताहुतिकरणेन द्विजैर्विप्रैः सह पुण्याहवाचनं कुर्यात् । वासःस्रग्भूषणादिभिराचार्यस्यार्चनं कुर्याच्चैवेत्यत्र एवकारो भिन्नक्रमः । आचार्यस्यार्चनं कुर्यादेव । अङ्गेष्विद मत्यावश्यकमित्येवकरार्थः ॥ १४ ॥

सर्वमङ्गलसंयुक्तमिति चिह्नानि शार्ङ्गिणः ।
धारयित्वा यथोत्साहं वैष्णवानभितर्पयेत् ॥ १५ ॥

सर्वेति । 'सर्वमङ्गलसंयुक्तम्' इति क्रियाविशेषणम् । सर्वमङ्गलसंयुक्तं शार्ङ्गिणः चिह्नानि आयुधानि धारयित्वा यथोत्साहं वैष्णवानभितर्पयेत् भोजनदक्षिणादानादिभिस्तत्प्रीणनं कुर्यात् ॥ १५ ॥

धारयिष्यंस्ततः शिष्यमूर्द्धपुण्ड्रान्यथाविधि ।
पुण्येऽह्नि नियतः स्नात्वा पूर्ववद्बद्धकौतुकम् ॥ १६ ॥
उपवेश्याथ देवेशं भोगैर्दीपान्तमर्चयेत् ॥
स्थण्डिलं कल्पयेत्पश्चात्पुरुषस्य प्रमाणतः ॥ १७ ॥

अथ पुण्ड्रसंस्कारमाह-धारयिष्यन्निति । ततः तापसंस्कारानन्तरं गुरुर्यथाविधि शिष्यमूर्द्धपुण्ड्रं धारयिष्यन् पुण्येऽहानि शुभदिवसे स्नात्वा पूर्ववत् 'ऋचो दक्षिणतः कुर्याद्वैष्णव्या बद्धकौतुक' मित्युक्तप्रकारेण कृतकौतुकं कृतकङ्कणम् उपवेश्य उप-

विष्टं कारयित्वा अथ देवेशं भोगैरापीठदीपोपचारपर्यन्त-मर्चयेत्। पश्चादर्चनानन्तरं पुरुषस्य प्रमाणतः पुरुषप्रमाणेन स्थण्डिलं कल्पयेदिति श्लोकद्वयार्थः॥ १६॥ १७॥

स्थानानि सैकतान्यत्र वर्णचूर्णमयानि वा।
कुर्याद्द्वादश पूर्वादिचतुर्दिक्षु समान्तरम्॥ १८॥
तथा मध्येऽस्य चत्वारि तेष्वभ्यर्चासनं पृथक्।
केशवादींस्तत्रतत्र वासुदेवादिकांस्तथा॥ १९॥
प्रत्येकं च यथारूपं ध्यात्वा नामभिरावहेत्।
हविरन्तैरथार्घ्याद्यैरर्चयेत्तान्यथाक्रमम्॥ २०॥

स्थानानीति। अत्र स्थण्डिले सैकतानि सिकतामयानि वर्ण-चूर्णानि वा स्थानानि ऊर्द्ध्वपुण्ड्रस्थानानि पूर्वादिचतुर्दिक्षु द्वाद-श कुर्यात्। समान्तरमितिक्रियाविशेषणम्। समव्यवधानानि समानि अन्तराणि अवकाशा यस्मिन्कर्मणि तत्। समव्यवधा-नानि एकैकस्यां दिशि त्रीणि मिश्रयित्वा द्वादश स्थानानि कुर्यादित्यर्थः तथा समान्तराणीत्यर्थः। अस्य स्थण्डिलस्य मध्ये चत्वारि स्थानानि कुर्यात् तेषु षोडशसु स्थानेषु अभ्यर्चा-सनमर्चासनं च पृथक्पृथक् कुर्यात्। ततोऽनन्तरं तत्र स्थानेषु केशवादिकाँस्तथा वासुदेवादिकाँश्च प्रत्येकं यथारूपं ध्यात्वा तेषां नामभिरावहेत् पूर्वादिचतुर्दिक्षु कृतेषु द्वादशस्थानेषु केशवादिद्वादशमूर्तीस्तत्तदसाधारणरूपेण कृत्वा तत्तन्नामभि-रावहेत्। मध्ये कृते स्थानचतुष्के वासुदेवादिचतुर्व्यूहांस्तत्तद-साधारणरूपेण ध्यात्वा तत्तन्नामभिरावहेदित्यर्थः। अथान-न्तरमर्घ्यादिभिरेतैरुपचारैस्तान्केशवादीन्यथाक्रममर्चयेदिति श्लोकत्रयार्थः॥ १८॥ १९॥ २०॥

परीत्य सह शिष्येण सर्वांस्तान्प्रणिपत्य च ।
उपविश्याथ शिष्याय प्रणिपत्योपसीदते ॥ २१ ॥
एषां नामानि रूपाणि यथावदुपदर्शयेत् ।
शिष्यो हृदि समावेश्य तान्सर्वान्क्रमयोगतः ॥ २२ ॥
निर्घृष्य मृत्स्नां विधिवन्मूलमन्त्राभिमन्त्रिताम् ।
आदायाङ्गुलिभिर्दद्याल्ललाटाद्यूर्द्ध्वपुण्ड्रकान् ॥ २३ ॥

परीत्येत्यादिना । शिष्येण सह सर्वांस्तान्केशवादीन्परीत्य प्रदक्षिणीकृत्य प्रणिपत्योपविश्य अथ प्रणिपत्योपतिष्ठते शिष्याय तेषां केशवादीनां नामानि रूपाणि च यथावत् असङ्कीर्णमुपदर्शयेत् शिष्योऽपि सर्वांस्तान् केशवादीन् क्रमयोगतः उपदेशक्रमेण हृदि समावेश्य मृत्स्नां विधिवद्यथाविधि निर्घृष्य मूलमन्त्राभिमन्त्रितां कृत्वा तामंगुलिभिरादाय ललाटाद्यूर्द्ध्वपुण्ड्रकान् ललाटादिस्थानूर्द्ध्वपुण्ड्रकान् दद्यादिति श्लोकत्रयस्यार्थः॥निर्घृष्य मृत्स्नां विधिवदित्यत्रापेक्षितो विधिःब्रह्मरात्रे दर्शितः।"अथातु लक्षणोपेतां सुगन्धां सात्त्विकां शुभाम्। वामेऽस्त्रशोभिते हस्ते वाग्यतः प्रणवेन तु। निधाय जलमादाय गन्धद्वारेति सेचयेत् । अस्त्रमन्त्रेण रक्षाञ्च कृत्वा दशसु दिक्ष्वपि । तारमन्त्रेण संमिश्र्य मूलमन्त्रेण मन्त्रयेत् । नृसिंहबीजञ्च लिखेद्रक्षार्थं दोषशान्तये । शतधारेण मन्त्रेण तीर्थतोयञ्च निक्षिपेत् । तामेकीकृत्य तर्जन्या स्मृत्वा मम पदद्वयम् । विष्णोर्नुकेन मन्त्रेण मन्त्रयित्वा यथाक्रमम् । पञ्चोपनिषदैर्मन्त्रैर्मूलमन्त्रेण मन्त्रयेत् । द्वादशाक्षरमुच्चार्य प्रार्थयेदिष्टसिद्धये । सप्तभिर्वैष्णवैर्मन्त्रैर्मन्त्रयेत्सौख्यसिद्धये । मृदं श्वेतेरमन्त्रेण तर्जन्या मूर्ध्नि विन्यसेत् । चतुश्चक्रधरं मां तु स्मृत्वा जाम्बूनदप्रभम् । ललाटे केशवायेति धारयेदूर्ध्वपुण्ड्रकम् । चतुःशंखधरं देवं नीलजीमूतसन्निभम्"॥२१॥२२॥२३॥

त्रयोदश द्वादश वा चतुरो वैकमेव वा ।
नमोऽन्तैर्नामभिर्ध्यात्वा स्थापयेत्तत्र तत्र च ॥ २४ ॥
केशवादीन् द्वादशसु वासुदेवं त्रयोदशे ।
केशवं वासुदेवं वा ललाटे केवलं न्यसेत् ॥ २५ ॥
व्यूहाँश्चतुर्षु तान्नत्वा सदा सान्निध्यमर्थयेत् ।
अतो हि वैष्णवस्यांगं विष्णोरायतनं विदुः ॥ २६ ॥
हविर्निवेद्य देवाय गुरुः शेषं समापयेत् ।
तत्र त्वाचार्य्यमभ्यर्च्य भोजयेद्वैष्णवानपि ॥ २७ ॥

अथ संख्याविकल्पमाह—त्रयोदशेति । त्रयोदश द्वादश वा चतुरो वा पुण्ड्रान् एकमेव वा पुण्ड्रं नमोऽन्तैर्नामभिर्धृत्वा द्वादशसु च पुण्ड्रेषु तत्र तत्र केशवादीन् स्थापयेत् । त्रयोदशे वासुदेवं स्थापयेत् । एकोर्द्धपुण्ड्रपक्षे ललाटे केशवं वासुदेवं गलके न्यसेत् । चतुरूर्द्धपुण्ड्रपक्षे चतुर्षूर्द्धपुण्ड्रेषु व्यूहान्न्यसेत् । तान्केशवादीन्नत्वा सदा सान्निध्यमर्थयेत् याचेत । अतो हि एतस्माद्धि कारणात् वैष्णवस्याङ्गं शरीरं विष्णोरायतनं गृहं विदुः । अनन्तरं गुरुर्देवाय हविर्निवेद्य शेषं समापयेत् । ततोऽनन्तरं शिष्यः आचार्यमभ्यर्च्य वैष्णवान्भोजयेत् । इति श्लोकचतुष्टयार्थः।'नमो नारायणायेति मन्त्रमुच्चार्य धारयेत्।इन्द्रनीलमणिश्यामश्चतुर्हस्तैर्गदाधरम् ॥ हृदयेऽसिधरायेति धारयेदंगुलाष्टकम्। चतुर्भुजं धनुष्मन्तं चन्द्रमस्सदृशप्रभम्॥गोविन्दायेति मन्त्रेण कण्ठे तु चतुरंगुलम् । चतुर्हलधरं देवं पद्मकिञ्जल्कसान्निभम् ॥ विष्णवे त्वेति मन्त्रेण धारयेद्दक्षिणोदरे । मुसलास्त्रं महाविष्णुमरविन्दाभमेव च ॥ मधुसूदनं मन्त्रेण धारयेद्दक्षिणे भुजे । चतुःखड्गधरं देवमग्निसन्निभतेजसम् ॥ त्रिवि-

क्रमायेतिमन्त्रेण धारयेद्दक्षिणे गले । चतुर्वज्रधरं देवं तरुणादित्यसंनिभम्॥ वामनायेति मन्त्रेण वामकुक्षौ तु धारयेत्। पट्टिशायुधहस्तं च पुण्डरीकाक्षमेव च ॥ श्रीधरायेति मन्त्रेण भुजे वामे तु धारयेत् । चतुर्भिर्मुद्गरधरं भुजैर्विद्युत्समप्रभम् ॥ हृषीकेशेति मन्त्रेण धारयेद्वामकन्धरे । पञ्चायुधधरं माञ्च सहस्रांशुसमप्रभम् ॥ पद्मनाभेति मन्त्रेण पृष्ठे वै धारयेत् क्रमात् । पाशहस्तधरं देवं बालार्कशतसंनिभम् ॥ दामोदरेति मन्त्रेण धारयेत्पश्चिमे गले । द्वादशाक्षरमुच्चार्य शेषं मूर्द्धनि विन्यसेत्॥ इत्येषां नामरूपाणि यथावदुपदर्शयेत्॥" इत्युक्तानि नामरूपाण्यप्युक्तान्येव दृष्टानि ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

करिष्यन् वैष्णवं नाम वैष्णवाश्रयमेव वा ।
पुण्येऽहनि गुरुः स्नात्वा पूजयित्वा जगद्गुरुम् ॥ २८ ॥
पूर्ववत्स्थण्डिलं कृत्वा पूर्ववत्सिकतामये ।
षोडशे पीठमभ्यर्च्यावाहयेन्नामदेवताम् ॥ २९ ॥

अथ नामसंस्कारमाह—करिष्यन्निति वैष्णवं विष्णुसम्बन्धि-वैष्णवाश्रयं भागवतसम्बन्धिदेवतां ध्यात्वा हविरन्तमर्चयेत् अर्घ्याद्यैर्हविःसमर्पणान्तैरुपचारैरर्चयेदिति श्लोकसार्द्धद्वयार्थः ॥ २८ ॥ २९ ॥

भगवद्रूपिणं ध्यात्वा हविरन्तमथार्चयेत् ।
उपपन्ने ततः शिष्ये कौपीनं कटिबन्धनम् ॥ ३० ॥

भगवादिति । ततोऽनन्तरं कौपीनं कटिबन्धनं द्वे नवे वस्त्रे च गुरवे निवेद्य शिष्ये उपपन्ने सति गुरुरपि तस्मै शिष्याय कौपीनादिकं तं शिष्यं ग्राहयेत् । कौपीनादिकं शिष्येण धृतं कुर्यादित्यर्थः । अथवा शिष्ये उपपन्ने सति कौपीनं कटिबन्धनं

नवे वस्त्रे निवेद्य भगवते निवेद्य शिष्याय दत्त्वाथ शिष्यं कौपीनादिकम् ग्राहयेत ॥ ३० ॥

निवेद्य वस्त्रे च नवे तस्मै तं ग्राहयेद्गुरुः ।
तच्छेषं गन्धमाल्यादि तथा चान्नं निवेदितम् ॥ ३१ ॥

निवेद्येति। तथा कौपीनादिकवदेव तच्छेषं नामाधिदेवतापूजाशेषं गन्धमाल्यादि गन्धपुष्पादिसहितं निवेदितं नामाधिदेवतानिवेदितमन्नं च ग्राहयेत् ॥ ३१ ॥

नाम दासादिशब्दान्तं श्रावयेत्केवलं तु वा ।
परीत्य प्रणतोऽभ्यर्च्य देवतां हृदि निक्षिपेत् ॥ ३२ ॥

नामेति। दासादिशब्दान्तं नाम श्रावयेत् । 'केशव वासुदेव नारायण' दास इत्यादि प्रकारेण भगवन्नाम अनन्तदासो भरणदास इत्यादिप्रकारेण भगवतो नाम श्रावयेत् । केवलं केशवो नारायणः अनन्तो बकुलाभरण इत्यादि प्रकारेण दासशब्दरहितं वा नामकुर्यादित्यर्थः परीत्येति । परीत्य नामाधिदेवतां प्रदक्षिणीकृत्य प्रणतः कृतप्रणामः। अभ्यर्च्य नामाधिदेवतां सम्पूज्य देवतां नामाधिदेवतां हृदि शिष्यहृदये निक्षिपेत् ॥ ३२ ॥

हविर्निवेद्य देवाय तन्त्रशेषं समापयेत् ।
शिष्यो देशिकमभ्यर्च्य वैष्णवान् परितोषयेत् ॥ ३३ ॥

हविरिति । ततो देवाय हविर्निवेद्य शेषं समापयेत। ततो गुरुमभ्यर्च्य वैष्णवान् परमैकान्तिनः परितोषयेत् भोजनदक्षिणादिना सन्तुष्टान् कुर्यादिति सार्द्धश्लोकार्थः ॥ ३३ ॥

स्वयं ब्रह्माणि निक्षिप्तान् जातानेव च मन्त्रतः ।
विनीतानथ पुत्रादीन् संस्कृत्य प्रतिबोधयेत् ॥ ३४ ॥

अथ मन्त्रसंस्कारमाह-स्वयमिति। अथ नामसंस्कारानन्तरं स्वयमाचार्यः मन्त्रतो जातान् मन्त्रसंस्कारेण पुनरुत्पन्नान् ब्रह्मणि निक्षिप्तान् पुत्रशिष्यान् संकृत्य संस्कारैः संस्कृत्य प्रतिबोधयेन्मन्त्रार्थं बोधयेत् मन्त्रसंस्कारसंग्रहः। संस्कृत्येत्यनुवादः। न तु मन्त्रसंस्कारानन्तरं पुनः संस्कारो विधीयते किंतु नामादिसंस्कारचतुष्टयानन्तरं मन्त्रार्थं बोधयेदित्यर्थः ॥ ३४॥

अनुकूलेऽहनि शुभे गुरुः स्नात्वा समाहितः।
हुताग्निः पूर्ववच्छिष्यं निष्पाद्य कृतकौतुकम् ॥ ३५ ॥

अथ मन्त्रसंस्कारप्रकारमाह-अनुकूल इति अनुकूले ग्रहनक्षत्राद्यानुकूल्यवति शुभेऽहनि गुरुः स्नात्वा समाहितः सन् हुताग्निः कृतनित्योपासनः पूर्ववन्नामसंस्कार इव कृतकौतुकं धृतकङ्कणं शिष्यं निष्पाद्य दक्षिणतः कुर्याद्वैष्णव्या बद्धकौतुकमित्युक्तम् ॥ ३५ ॥

ततः सम्पूज्य देवेशं पश्चादग्निं निधाय वै।
स्वेन तन्त्रेण तत्राथ हुत्वा पूर्ववदाहुतीः ॥ ३६ ॥

तत इति। ततोऽनन्तरं देवेशं सम्पूज्य पश्चात्पूजानन्तरं स्वेन मन्त्रेण स्वसूत्रोक्तविधानेन अग्निं निधाय अग्निं प्रतिष्ठाप्य अथ तत्र वह्नौ पूर्ववदाहुतीर्हुत्वा 'मूलमंत्रेण हुत्वाज्यं ततः प्रत्यक्षराहुतीः। एकां पुनश्च सर्वेण पौरुषीभिश्च षोडश हुत्वा त्रिर्विष्णुगायत्र्या वैष्णव्या चाथ हेतिभि'रित्युक्तप्रकारेण हुत्वेत्यर्थः ॥ ३६ ॥

स्थाने हेत्याहुतीनान्तु मूलमन्त्राहुतीः पुनः।
हविर्निवेद्य देवाय तच्छेषेण तथाहुतीः ॥ ३७ ॥
स शिष्योऽथ गुरुः कृत्वा साग्निं देवं प्रदक्षिणम्।

प्रणम्य पुनरासीनः प्रणिपत्योपसेदुषः ॥ ३८ ॥
संहारादिक्रमं कुर्याद्विधिवच्छोषणादिकम्।
अस्त्रमन्त्रेण रक्षाञ्च प्रणमय्य गुरूंस्ततः ॥ ३९ ॥
न्यासाख्यं परमं मन्त्रं वाचयित्वाथ बोधयेत्।

स्थानेत्यादि। हेत्याहुतीनां स्थाने पुनर्मूलमन्त्राहुतीर्हुत्वा अथ हेतिभिरित्युक्तक्रमेण हेत्याहुतिस्थाने मूलमन्त्राहुतीर्हुत्वेत्यर्थः। ततो देवाय हविर्निवेद्य तच्छेषेण तथा मूलमन्त्रेण हुत्वाज्यमित्युक्तप्रकारेण आहुतीर्हुत्वाथ गुरुः सशिष्यः शिष्यसहितः सन् साग्निं देवं प्रदक्षिणं कृत्वा अग्निं देवञ्च प्रदक्षिणीं कृत्येत्यर्थः। प्रणम्य साग्निं देवं प्रणम्य पुनरासीनः सन् प्रणिपत्य प्रणिपातं कृत्वा उपसेदुषः उपसंनस्य शिष्यस्य संहारादिक्रमं कुर्यात्संहारादिन्यासं कुर्याद्विधिवद्यथाविधि शोषणादिकञ्च कुर्यादादिशब्देन दाहसंप्लावने गृह्येते अस्त्रमन्त्रेण रक्षाञ्च कुर्यात्ततोऽनन्तरं गुरून् प्रणमय्य गुरुपरम्परां प्रणामं कारयित्वा ततोऽनन्तरं न्यासाख्यं न्यासशब्दवाच्यं परम्परामस्मादिति परमं सकृदाचार्य्योच्चारणानुकरणमात्रेण मोक्षपदतया सत्यन्तद्रूपञ्च सकृदुच्चारो भवतीत्यादिश्रुतिप्रसिद्धवैभवं मंत्रं वाचयित्वा बोधयेज्ज्ञापयेदिति सार्द्धत्रयश्लोकस्यार्थः ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥

श्रीमन्नारायणः स्वामी दासस्त्वमसि तस्य वै ॥ ४० ॥
परमीप्सुस्तमेवार्थमनुकूलो विवर्जयेत्।
प्रातिकूल्यं सुविस्रब्धः संप्रार्थ्य शरणं हरिम् ॥ ४१ ॥
व्रज तस्यैव चरणौ तत्रैवात्मानमर्पय।
इति सम्बोधितस्त्वेवं मन्त्रेणत्मानमर्पयेत् ॥ ४२ ॥

बोधनप्रकारमाह-श्रीमन्नारायण इत्यादि । श्रीमन्नारायणः लक्ष्म्या नित्ययुक्तः नारायणः स्वामी 'मिथुनाविष्टमेकशेषित्व-मित्यर्थः त्वं तस्य दासः शेषिमिथुनशेषभूतोऽसि । परमु-त्कृष्टतमेवार्थमीप्सुः श्रीमन्नारायणरूपपुरुषार्थं प्राप्तुमिच्छुः । अनुकूलः अनुकूल्यसङ्कल्पविशिष्टः । प्रातिकूल्यं विवर्जयेत् । सुविस्रब्धः रक्षिष्यतीति विश्वासयुक्तः । तस्य श्रीमन्नाराय-णस्य चरणावेव परं शरणं व्रज संप्राप्य उपायत्वेनाध्यवस्य संप्रार्थ्येति पाठे त्वं मे गोपायिता स्या इति संप्रार्थ्येत्यर्थः । तत्रैव चरणयोरेवात्मानमर्पय आत्मसमर्पणं कुर्वित्येवं सम्बो-धितः आचार्येण बोधितः मन्त्रेणैव द्वयेनैवात्मानम् अर्प-येत् । श्रीमन्नारायणो ह्यात्मानिक्षेपं कुर्यादिति सार्द्धश्लोक-द्वयार्थः ॥ ४० ॥ ४१ ॥ ४२ ॥

ततश्च व्यापकान्मन्त्रानन्यांश्चाङ्गैः समन्वितान् ।
दत्त्वास्मै पुनरेवैवं गृहीत्वा वृत्तिमादिशेत् ॥ ४३ ॥

ततश्चेति । व्यापकान् षडष्टद्वादशाक्षरान् अङ्गैर्न्यासादिभिः समान्वितान् अन्यान् अव्यापकांश्च मन्त्रानस्मै शिष्याय दत्त्वा पुनरेव एनं शिष्यं गृहीत्वा वृत्तिमादिशेत् उपादिशेत् ॥ ४३ ॥

नित्यं विष्णुपरं कर्म कुरु निंद्यानि मा कृथाः ।
सदात्मानं विबुध्यस्व मा कामेषु मनः कृथाः ॥ ४४ ॥

वृत्युपदेशप्रकारमाह-नित्यमिति विष्णुं परं भगवदाज्ञाकैङ्कर्य-रूपं नित्यं कर्म कुरु अनेन विहिताचार उक्तः निन्द्यानि निषि-द्धानि मा कृथाः । अनेन निषिद्धवर्जनमुक्तम् । सदात्मानं विबुध्यस्व स्वरूपतो दुर्द्धषतमश्च निर्विकारं परमात्मानम् विबुध्यस्व अनेन दृष्टिः । कामेषु मनो मा कृथाः । अनेन दृष्टिविरुद्धवर्जनमुक्तम् ॥ ४४ ॥

यजस्व नित्यमात्मेशं मानंसीरन्यदेवताः ।
लक्ष्यस्व लक्षणैर्भर्तुर्लक्षिष्ठा मान्यलक्षणैः ॥ ४५ ॥

यजस्वेति । नित्यमात्मेशं नारायणं यजस्व अनेन भक्तिरुक्ता अन्यदेवता देवतान्तराणि मानंसीः । अनेन भक्तिविरुद्धवर्जनमुक्तम् । भर्तुर्नारायणस्य लक्षणैश्चक्रादिभिर्लक्ष्यस्व । अन्यलक्षणैर्देवतान्तराचिह्नैर्मालक्षिष्ठाः । अनेन लक्ष्मविरुद्धवर्जनमुक्तम् ॥ ४५ ॥

उपास्स्व वैष्णवान्नित्यमसतो मोपसीसरः ।
गुरुं प्रणम्योमित्युक्त्वा ह्यात्मानञ्च निवेदयेत् ॥ ४६ ॥

उपास्स्वेति । नित्यं वैष्णवान् उपास्स्व अनेन सतां सेवोक्ता-असतः पारमैकान्त्यविमुखान् मोपसीसरः अनेन सत्सेवाविरुद्धवर्जनमुक्तम् । असतो मोपसीसर इत्यन्तस्य सार्द्धश्लोकद्वयस्य वृत्तिमादिशेदित्यनेन पूर्वस्थितेनान्वयः अनन्तरं शिष्यः प्रीत्या देवं भगवन्तं प्रणम्य इत्यात्मानं निवेदयेदिति श्लोकत्रयार्थः । प्रत्यादेशं प्रणम्योमित्युक्त्वात्मानमिति पाठे नित्यं विष्णुपरं कर्म कुरु इत्याद्युपदेशेषु प्रत्युपदेशमोमित्युक्त्वात्मानं गुरवे निवेदयेत् तवाहमस्मीति निवेदयेदित्यर्थः ॥४६॥

ततः समापिते शेषे देवमात्मानि निक्षिपेत् ।
गुरुं विधिवदभ्यर्च्य वैष्णवान्परितोषयेत् ॥ ४७ ॥

तत इति । अनन्तरं शेषे होमशेषे समाप्ते सति देवं भगवन्तमात्मनि निक्षिपेत् स्वहृदये न्यसेत् । विधिवद्यथाविधि । गुरुमभ्यर्च्य वैष्णवाँस्तोषयेत् भोजनदक्षिणादानादिना परितुष्टान् कुर्यात् ॥ ४७ ॥

योजयिष्यन् गुरुः शिष्यं नित्यार्चनविधौ हरेः ।
शोभनेऽहनि नक्षत्रे देवमभ्यर्च्य पूर्ववत् ॥ ४८ ॥

अथ यागसंस्कारमाह-योजयिष्यन्निति । गुरुः शिष्यं हरेर्नित्यार्चनविधौ योजयिष्यन् शोभनेऽहनि दिवसे शोभने नक्षत्रे पूर्ववत् मन्त्रसंस्कार इव । देवं नारायणमभ्यर्च्य ॥ ४८ ॥

मन्त्रवत्तु हुतं हुत्वा निष्ठयाथोपसादितम् ।
यथोक्तविधिना पूर्वं स्थापितं शुभविग्रहम् ॥ ४९ ॥

मन्त्रवदिति । मन्त्रवत् मन्त्रसंस्कार इव हुतवहं हुत्वा नित्योपासनं कृत्वा तदनन्तरं मन्त्रेण संस्कारोक्तप्रकारेण आज्याहुतीरन्नाहुतीश्च हुत्वेत्यर्थः । निष्ठया आवरणेन उपसादितम् । उपवेदितमित्यन्यः पाठः । यथोक्तविधिना प्रतिष्ठाशास्त्रोक्तप्रकारेण पूर्वमेव स्थापितं शुभविग्रहम् ॥ ४९ ॥

श्रीभूमिलीलासहितं परिवारैः समन्वितम् ।
अव्यक्तपरिवारं वा देवं संग्राह्य याजयेत् ॥ ५० ॥

श्रीभूमीति । श्रीभूमिलीलासहितं परिवारैर्भूषणायुधपरिजनपरिच्छदानन्तगुरुविष्वक्सेनानन्तपार्षदचण्डादिद्वारपालकुमुदादिगणाधिपतिभिः समन्वितम् । अव्यक्तपरिवारं वा अविग्रहपरिवारकं वा देवं नारायणं संग्राह्य याजयेत् यजनं कारयेत् । परिकराणामव्यक्तत्वं च परिवारबिम्बराहित्येन मनसा चिन्त्यमानत्वमिति श्लोकत्रयार्थः ॥ ५० ॥

श्रौतदिव्यार्षकल्पानामिष्टेनान्यतमेन च ।
स्थापनं यजनं वापि मिश्रा ह्यत्राधिकारिणः ॥ ५१ ॥

श्रौतेति । श्रौतादिकल्पे मिश्राव्यामिश्रार्षकल्पानां मध्ये अन्यतमेनेष्टेन स्थापनं प्रतिष्ठापनं यजनमपि कर्त्तव्यं हि यस्मात् कारणात् । अत्र श्रौतादिकल्पे मिश्रा व्यामिश्रार्षयाजिनोऽप्यधिकारिणः । श्रौतादिव्यार्षकल्पेषु मिश्राणामप्यधिकारात् तेष्विष्टेष्वन्यतमेन स्थापनं यजनं च कर्त्तव्यमित्यर्थः ॥ ५१ ॥

ततः परिगृहीतेन गुरुभिर्येन केनचित्।
विधिना याजयित्वैवमथ शेषं समापयेत्॥ ५२॥

एवं श्रौतदिव्यार्षकल्पानामन्यतमपरिग्रहस्येच्छानिबन्धनत्व मुक्त्वा इदानीं यथा गुरुसम्प्रदायमन्यतमपरिग्रह इत्याह–तत इति। गुरुभिः परिगृहीतेन येन केन विधिना याजयित्वा शेषं समापयेत्॥ ५२॥

ततः स्वकाले स्वाध्यायं ततो योगं च कारयेत्।
इज्यान्ते गुरुपूजां च वैष्णवानां च तर्पणम्॥ ५३॥

तत इति। स्वकाले स्वाध्यायकाले अनुयागानन्तरं काले स्वाध्यायं कारयेत्। ततः स्वकाले योगकाले योगं च कारयेत्॥५३॥

केचिच्चतुर्णां पूर्वेषां क्रमं नेच्छन्ति कर्मणाम्।
सहैकदिवसे वाब्दे त्रीणि चत्वारि पञ्च वा॥ ५४॥

केचिदिति। केचिन्मुनयः पूर्वेषां चतुर्णां तापपुण्ड्रनाममंत्र संस्काराणां क्रमं नेच्छन्ति। एकदिवसे द्वौ संस्कारौ वा कुर्वीत त्रीणि वा चत्वारि वा पञ्च वा कुर्य्यात्॥ ५४॥

तदान्यतमहोमान्ते कृत्वाग्न्याद्युपसन्मुखम्।
समापयेत्प्रधानं च न मन्त्रस्यान्यशेषता॥ ५५॥

तदेति। तदा संस्काराणां चतुर्णां क्रममुपेक्ष्य एकस्मिन्नेव दिवसे सहानुष्ठानपक्षे अन्यतमहोमान्तेन संस्कारचतुष्टयेऽप्यन्यतम संस्कारहोमान्ते अग्न्याद्युपसन्मुखं संस्कारान्तरमहाग्निमुखं कृत्वा प्रधानम् अन्यतमसंस्कारहोमं समापयेत्। तन्त्रस्य मन्त्रसंस्कारस्य अन्यशेषता संस्कारान्तरशेषभावो नास्ति संस्कारान्तरानन्तरमेव मन्त्रसंस्कारो न संस्कारान्तरात्पूर्वं मन्त्रसंस्कार इत्यर्थः॥ ५५॥

यद्येकदिवसे पञ्च तथा मन्त्राहुतेः परम् ।
कृत्वा यागान्तमखिलं तन्त्रशेषं समापयेत् ॥ ५६ ॥

न मन्त्रस्यान्यशेषतेति सामान्योक्तायां संस्कारानन्तरं मन्त्रसंस्कारप्राप्तौ तां निषेधति—यदीति ।एकदिवसे पञ्चापि संस्कारा यदि क्रियन्ते तदा मन्त्राहुतेः परं मन्त्रसंस्कारात्परमेव यागान्तरमखिलं कृत्वा समापयेत् । पृथगग्निमुखं यागाहुत्यादिकं न कर्तव्यमित्यर्थः ॥ ५६ ॥

एकदेशयुतोऽप्यन्यसंस्काराणां गुणान्वितः ।
युक्तः परमसंस्कारैः स वै भागवतः स्मृतः ॥ ५७ ॥

एकदेशेति । अन्यसंस्काराणां मध्ये एकदेशयुतः कतिपयसंस्कारयुक्तोऽन्यसंस्काराणां गुणान्वितः परमसंस्कारैः तापादिसंस्कारैः सर्वैर्युक्तो भागवतः स्मृतः एकदेशवैकल्यादिना भागवतत्वमित्यर्थः ॥ ५७ ॥

तापस्तपांसि तीर्थानि पुण्ड्रं नाम नमस्क्रिया ।
आम्नायाः सकला मन्त्रः क्रतवः पूजनं हरेः ॥ ५८ ॥

अथ परमसंस्कारप्रशंसा—ताप इति । तापस्तपांसि तापसंस्कारः सर्वतपःसमानः । तीर्थानि पुण्ड्रधारणम् । सर्वतीर्थावगाहनसदृशमेवमुत्तरत्रापि नाम भगवन्नाम नमस्क्रिया । मन्त्रः मन्त्राध्ययनं सकलवेदाः सर्वे वेदाः । हरेः पूजनं क्रतवो यज्ञाः । यद्वा तापस्तपांसीत्यादिना 'तमेतं ब्राह्मणवेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादिकमुक्तं वेदानुवचनादिकं प्रपत्त्या नाङ्गं वक्ष्यति इति यजेत ॥ ५८ ॥

वृत्तिर्भागवतानां हि सर्वा भगवतः क्रियाः ।
प्रायश्चित्तिरियं तस्याः सैव यत्र क्रियते पुनः ॥ ५९ ॥

नन्वेवं तापादीनां तपआदिरूपत्वात विहिताचाराद्यात्मिका वृत्तिरनुष्ठेयैव न स्यादित्यत आह-वृत्तिरिति। भागवतानां सर्वा वृत्तिर्विहिताचाराद्यात्मिका सर्वापि भगवतः क्रिया भगवत्कैंकर्यरूपा वृत्तिस्तु कैङ्कर्यतयानुष्ठानं न प्रपत्त्यङ्गतया इति भावः। तस्या वृत्तेरननुष्ठिताया इति शेषः सैव वृत्तिरेव पुनः क्रियत इति; एवमेव प्रायश्चित्तिः पुनस्तदनुष्ठानमेव प्रायश्चित्तमित्यर्थः।न चात्रवृत्त्यननुष्ठाने दोषाभाव उच्यते। 'अपराधेषु सर्वेषु वृत्त्यंगानां यथाविधि' इत्यादिना प्रायाश्चित्तोपदेशात् किन्तु प्रमादाल्लोपेन भयानुतापे पुनस्तदनुष्ठानेन तत्समाधानं भविष्यतीत्यत्र तात्पर्यम्।यद्वा तस्यावृत्त्यात्मकभगवत्प्राप्तिकीयाया अननुष्ठितायाः सैव परमादिशान्तिरूपा भगवत्क्रियैव प्रायश्चित्तिरित्यर्थः ॥ ५९ ॥

तस्मादाराधनं विष्णोः शान्तिकर्म विधीयते।
तथैव विष्णुभक्तानां पूजनं शान्तिरुत्तमा ॥ ६० ॥

ममैवार्थं स्पष्टयति-तस्मादिति। तस्मात्प्रत्यवायविरहितत्तया भगवदाराधनात्मकतया धर्मानुष्ठानस्य प्रसिद्धत्वात 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इत्याद्यनुसन्धेयम्। भगवदाराधनात्मकधर्मानुष्ठानलोपे तस्य विष्णोराराधनमेव शान्तिकर्म विधीयते।तथैव विष्ण्वाराधनवदेव विष्णुभक्तानां पूजनमुत्तमा शान्तिः। भगवत्पूजनं शान्तिमात्रम्। भगवतः पूजनमुत्तमम्। शान्तिरित्यर्थः ॥ ६० ॥

मन्त्रसंस्कारयुक्तस्य न चेत्तापादिकं तदा।
परमाख्या भवेच्छान्तिरविभागे सतामपि ॥ ६१ ॥

मन्त्रेति।मन्त्रसंस्कारादियुक्तस्य तापादिसंस्कारो न चेत्॥६१॥

परमाख्याथ वैयूही मूर्त्याख्या वैभवीति च ।
आनन्ती गारुडी चैव वैष्वक्सेनी सुदर्शनी ॥ ६२ ॥

अथ शान्तीरनुक्रमते—परमाख्येति । एतासां स्वरूपमुत्तरत्र वक्ष्यति ॥ ६२ ॥

चतुष्टयी महाशान्तिरुपशान्तिश्चतुष्टयी ।
यथानिमित्तं कर्त्तव्यास्तथान्याः श्रीभुवादयः ॥ ६३ ॥

चतुष्टयीति । 'परमाख्याथ वैयूही मूर्त्याख्या वैभवीति च' त्येतच्चतुष्टयी महाशान्तिः । 'आनन्ती गारुडी चैव वैष्वक्सेनी सुदर्शनी' चेत्येतच्चतुष्टयी उपशान्तिः । एताश्च शान्तयो यथानिमित्तं कर्तव्याः । लघुनिमित्ते लघुशान्तिः । गुरुनिमित्ते गुरुशान्तिः । प्रयोज्येत्यर्थः । तथा तद्वत् अन्याः श्रीभुवादयः श्रीभूशान्त्यादयः यथानिमित्तं कर्तव्याः । आदिशब्देन परा शान्तिरुच्यते । 'गुरूंस्तदर्चाविप्रान्वा विधिनाभ्यर्च्य शक्तितः । यद्द्यात्सा परा शान्तिः सर्वपातकनाशिनी' इति भूशान्त्यनन्तरं वक्ष्यमाणत्वात् । श्रीभुवादय इति च्छान्दसत्वात्साधु ॥ ६३ ॥

दानहोमजपार्चानामेकद्वित्र्यखिलान्वयात् ।
नैकभेदविभिन्नास्ताः पात्रोत्कर्षश्च शक्तितः ॥ ६४ ॥

दानेति । दानहोमजपार्चानां मध्ये एकद्वित्र्यखिलान्वयात् एकमात्रान्वयात् द्विमात्रान्वयात्, त्रिमात्रान्वयात, सकलान्वयाच्च नैकभेदविभिन्ना अनेकभेदभिन्नाः स्युः।पात्रोत्कर्षं कुर्यादित्यर्थः।एकैका शान्तिर्दानादिषु एकद्वित्र्यादियोगेन बहुविधा भवति। तत्रापि पात्रोत्कर्षः शक्त्यनुसारेण भवति । एकैकस्थाने पात्राणां बहूनां वरणं पात्रोत्कर्षः स च शक्तितो भवति शक्तौ सत्याम् बहूनां वरणं शक्त्यभावे एकैकस्यैव वरणमित्यर्थः॥६४॥

हीनाः परमसंस्कारैर्दैवतान्तरबुद्धयः।
ऋत्विजो यजमानाश्च च्यावयन्ति परस्परम्॥ ६५ ॥

अनुक्रान्तेषु ऋत्विग्भिर्यजमानैश्च परमैकान्तिभिरेव भवितव्यमित्याह—हीन इति। परमैः संस्कारैः तापादिभिर्हीनः देवतान्तरबुद्धयः अन्यदैवतयाजिनः परस्परं च्यावयन्ति ऋत्विजो यजमानाश्च च्यावयन्तीत्यर्थः ॥ ६५ ॥

अपराधेषु सर्वेषु वृत्त्यङ्गानां यथाविधि।
वृत्तेश्च परिपोषाय शान्तिं शश्वत्प्रयोजयेत् ॥ ६६ ॥

अपराधोष्विति। वृत्त्यङ्गानामपराधेषु सर्वेषु वृत्तेः परिपोषाय च यथाविधि शान्तिं शश्वत्प्रयोजयेदित्यन्वयः। वृत्त्यङ्गानामपराधो नाम तदकरणं तद्विरुद्धकरणम्। वृत्तेः परिपोषो नाम तत्प्रतिबन्धकदुरितनिरसनद्वारा आवर्तनम् ॥ ६६ ॥

करणे प्रतिषिद्धानां विहिताकरणे तथा।
विधेया महती शान्तिर्विज्ञाय गुरुलाघवम् ॥ ६७ ॥

कुत्र निमित्ते का शान्तिः कर्तव्येत्यपेक्षायामाह—करण इति। विहिताकरणे प्रतिषिद्धानां च करणे महती शान्तिर्विधेया परमादिमहाशान्तिष्वन्यतमा कर्तव्येत्यर्थः। तत्रापि गुरुलाघवं विज्ञाय विधेया। अल्पनिमित्ते अल्पव्ययायाससाध्या शान्तिः कर्तव्या। अधिकनिमित्ते बहुवित्तव्ययायाससाध्या कर्तव्येत्यर्थः ॥ ६७ ॥

अवैष्णवेभ्यो यत्किञ्चित्प्रतिगृह्य प्रदाय वा।
कृत्वोपशान्तिं शुद्ध्येत परिवादे सतामपि ॥ ६८ ॥

अवैष्णवेभ्य इति। अवैष्णवेभ्यः पारमैकान्त्यरहितेभ्यः यत्किञ्चित्प्रतिगृह्य प्रदाय वा उपशान्तिमानन्तीं गारुडीं वैष्व-

क्सेनीं सौदर्शनीं वा उपशान्तिं कृत्वा शुद्धचेत सतां परमैकान्तिनां परिवादेऽपि निमित्ते एषु महाशान्तिं कृत्वाप्युपशांतिं कुर्यादित्यर्थः ॥ ६८ ॥

असतः प्रतिगृह्णीयात्पुत्रदारादिकं यदि ।
विधाय परमां शान्तिं वृत्तिमाचारयेन्निजाम् ॥ ६९ ॥

असत इति । असतो परमैकान्तिन इति पञ्चमी । तस्मात्पुत्रदारादिकं यदि गृह्णीयात् अपरमैकान्तिनः पुत्रं स्वयं यदि पुत्रत्वेन गृह्णीयात्तत्पुत्रीं यदि भार्यात्वेन गृह्णीयादित्यर्थः । तदा परमां परमाख्यां शान्तिं विधाय निजां वृत्तिमाचारयेत् । असत्परिगृहीतपुत्रदारादीन् स्ववृत्तीन्कारयेदित्यर्थः ॥ ६९ ॥

भजने चान्यदेवानामपचारे च शार्ङ्गिणः ।
वैयूहीं परमां वापि कुर्य्याच्छांतिं विशुद्धये ॥ ७० ॥

भजन इति । अन्यदेवानां भजने शार्ङ्गिणोऽपचारे तदिष्टाकरणानिष्टाकरणरूपे अपचारे च विशुद्धये वैयूहीं परमां वापि शान्तिं कुर्यात् ॥ ७० ॥

लक्षणानामकरणे धारणे चान्यलक्ष्मणाम् ।
मूर्तिं कुर्यान्महाशांतिमपि सौदर्शनींतथा ॥ ७१ ॥

लक्षणानामिति । लक्षणानां तापादिवैष्णवचिह्नानामकरणे अधारणे अन्यलक्षणानामवैष्णवचिह्नानाञ्च धारणे मूर्तिं महाशान्तिं कुर्यात् । सौदर्शनीमुपशान्तिं वा कुर्यात् इदञ्च निमित्तगुरुलाघवानुसारेणेति मन्तव्यम् ॥ ७१ ॥

अपचारे गुरूणां च वैष्णवानाञ्च सर्वशः ।
वैष्वक्सेन्यथ वानन्ती कार्य्या चासन्निषेवणे ॥ ७२ ॥

अपचार इति । गुरूणां वैष्णवानां सर्वशोऽपचारे सर्वेष्वपचारेषु असन्निषेवणे च वैष्वक्सेनी आनन्ती वा शान्तिः कार्या ७२

असच्छास्त्राभियोगे तु सच्छास्त्राणां निराकृतौ।
कर्त्तव्या गारुडी शांतिर्दुर्निमित्तेषु वैभवी ॥ ७३ ॥

असदिति । असच्छास्त्राभियोगे असच्छास्त्रपरिग्रहे सच्छास्त्राणां निराकृतौ निराकरणे च गारुडी शान्तिः कर्त्तव्या दुर्निमित्तेषु प्रादुर्भूतेषु वैभवी शान्तिः कर्त्तव्या ॥ ७३ ॥

अवैष्णवस्य भुक्तान्नमनिवेदितमेव वा ।
पीत्वा पादोदकं भक्त्या वैष्णवानां विशुद्ध्यति ॥७४॥

अवैष्णवस्येति । अनिवेदितं भगवते अनर्पितम् । अवैष्णवस्यान्नं तच्च भुक्त्वा वैष्णवपादोदकं पीत्वा प्राश्य विशुद्ध्यतीति शान्तेरेव विहितत्वात । अतो वैष्णवानामेव गृहे अवैष्णवैः तण्डुलादिकं तत्पाकद्रव्यादि यन्नीतमवैष्णवान्नं तच्च भुक्त्वा वैष्णवानां पादोदकं पीत्वा विशुद्ध्यति यद्वा; अवैष्णवान्नं तत्पक्कमेव अज्ञानेन प्रमादात्सकृद्भुक्तश्चेद्वैष्णवपादोदकपानं-तत्र प्रायश्चित्तमित्युच्यते । तदर्थं शान्त्यनुष्ठानानन्तरं वैष्णवपादोदकपानं विधीयते इति वा मन्तव्यम् ॥ ७४ ॥

सर्वपातकसंप्राप्तौ श्रियं गारुडमेव वा ।
समभ्यर्च्य विधानेन तच्छेषं प्राश्य शुद्ध्यति ॥ ७५ ॥

सर्वेति । सर्वपातकसम्प्राप्तौ विशिष्य शान्तिनिदानपातकान्तरसम्प्राप्तौ श्रियं लक्ष्मीं गां भूमिं गुरुम् आचार्यं वा विधानेन विधिना समभ्यर्च्य तच्छेषं प्राश्य भुक्त्वा शुध्यति । श्रीशान्तिं भूशान्तिं वा अनुक्तशान्तिकेषु निमित्तेषु कुर्यादित्यर्थः ॥७५॥

देवतान्तरशेषंतु भुक्त्वा स्पृष्ट्वापि वा पुनः ।
वैष्वक्सेनीं क्रियां कृत्वा तच्छेषं प्राश्य शुद्ध्यति॥७६॥

देवतेति । देवतान्तरशेषं भुक्त्वा स्पृष्ट्वा वा वैष्वक्सेनीं शान्तिं त्वा तच्छेषं प्राश्य शुद्ध्यति ॥ ७६ ॥

पीत्वानैकान्तिनां सोमं सह पंक्तौ प्रभुज्य च ।
कृतश्च तेन भुक्त्वान्नं वैयूहीं प्राप्य शुद्ध्यति ॥ ७७ ॥

पीत्वेति । अनैकान्तिनां सोमं पीत्वा अवैष्णवानां यागेषु आर्त्विज्यं कृत्वेत्यर्थः । अनैकान्तिनां पंक्तौ तैः सह प्रभुज्य भुक्त्वा च तेन अवैष्णवेन कृतं पक्कमन्नं भुक्त्वा च वैयूहीं शान्तिं प्राप्य शुद्ध्यति ॥ ७७ ॥

विप्रानैकान्तिनः प्राज्ञानृत्विजः शान्तिकर्मसु ।
गोभूधान्यहिरण्याद्यैः प्रभूतैः परितोषयेत् ॥ ७८ ॥

विप्रानिति । शान्तिकर्मसु नियुक्तान्प्राज्ञान् एकान्तिन ऋत्विजः शान्त्यनुष्ठानानन्तरं प्रभूतैः सुसमृद्धैः गोभूधान्यहिरण्याद्यैः परितोषयेत् ॥ ७८ ॥

अन्ते चैषां प्रकुर्वीत सर्वेषां शान्तिकर्मणाम् ।
नारायणस्य परमां प्रपत्तिं सर्वपूरणीम् ॥ ७९ ॥

अन्त इति । एषां सर्वेषां शान्तिकर्मणामन्ते परमां सर्वपूरणीं सकलन्यूनांशपरिपूरणीम् नारायणस्य प्रपत्तिं कुर्वीत न्यूनाधिकप्रत्यवायप्रशमनार्थं प्रपत्तिमनुतिष्ठेदित्यर्थः ॥ ७९ ॥

शान्तिं पुण्येषु देशेषु स्वक्षेत्रे स्वगृहेऽपि वा ।
कुर्यात्पुण्येषु कालेषु स्वजन्मादिषु वा पुनः ॥ ८० ॥

शान्तिमिति । स्वजन्मादिषु स्वजन्मनक्षत्रजन्मदिवसादिषु ८०

ध्यायन्नाधारशक्त्यादिपारिषद्यान्तदेवताः ।
नामभिर्वरयेद्विद्वान्परमायां विपश्चितः ॥ ८१ ॥

॥ अथ शान्तीनां स्वरूपमाह—ध्यायन्निति । परमायां शान्तौ आधारशक्त्यादिपारिषद्यान्तदेवताः आधारशक्तिमुपक्रम्य पारिषद्यपर्यन्ताः देवताःध्यायँस्तत्तन्नामभिः विपश्चितो विप्रान्

वरयेत् । आधारशक्त्यादिपारिषद्यान्तदेवताश्च भगवद्भाष्यकारोक्तनित्ये अनुसन्धेयाः ॥ ८१ ॥

आसनेषु यथाकाममुपवेश्य यथाक्रमम् ।
पाद्यमर्घ्यं तथा भोगान्दद्यात्तेभ्यश्च मन्त्रतः ॥ ८२ ॥

आसनेष्विति । आसनेषु आधारशक्त्याद्यधिष्ठानेषु वृत्तान्विप्रान्यथाक्रमं क्रममनतिक्रम्य आसनेषु यथाकामं यथासुखमुपवेश्य तेभ्यः स्वमन्त्रतः आधारशक्त्यै नम इत्यादिभिः तत्तन्मन्त्रैः तत्तत्स्थाने वृत्तेभ्यः तेभ्यः पाद्यमर्घ्यं तथा भोगाँश्च दद्यात् ॥ ८२ ॥

स्नातेभ्यश्च यथाकामं वस्त्रभूषानुलेपनम् ।
माल्यानि धूपदीपौ च दद्याद्भक्त्या धनानि च ॥८३॥

स्नातेभ्य इति। यथाकामं यथामनोरथम्। स्पष्टमन्यत् ॥८३॥

अष्टोत्तरशतावृत्त्या जपं होमं च कारयेत् ।
स्थण्डिले तत्तदर्चां च सर्वं कुर्वीत वा स्वयम् ॥ ८४ ॥

अष्टोत्तरेति । अधारशक्त्यादिस्थाने वृतैर्ब्राह्मणैस्तत्तन्मन्त्रस्य अष्टोत्तरशतावृत्त्या होमञ्च कारयेत् । स्थण्डिले आधारशक्त्यादिस्थण्डिले । तदर्चाम् आधारशक्त्याद्यर्चाञ्च कारयेत् । सर्वं जपहोमार्चादिकं स्वयं वा कुर्वीत ॥ ८४ ॥

सर्वत्राग्निमुखस्यांते समिदन्नघृताहुतीः ।
भोजयित्वा द्विजवरान्समभ्यर्च्य विसर्जयेत् ॥ ८५ ॥

अष्टोत्तरशतावृत्या होमश्च समिदन्नघृताहुतीनामित्याह– सर्वत्रेति सर्वत्र तन्त्रे मन्त्रे अग्निमुखस्यान्तेऽग्निमुखं कृत्वा तदंते समिदन्नघृताहुतीः दापयेदितिशेषः । अष्टोत्तरशतसंख्या समिदाहुतीस्तत्संख्यया अन्नाहुतीस्तत्संख्ययैव घृताहुतीश्च दापयेदित्यर्थः ॥ ८५ ॥

चतुरो वासुदेवादीन्वैयूह्यां वरयेद्द्विजान् ।
मूर्त्याख्यायां द्वादशैव केशवादीननुक्रमात् ॥ ८६ ॥

चतुर इति। वैयूह्यां शांतौ वासुदेवादींश्चतुरो द्विजान्वरयेत्। वासुदेवसंकर्षणप्रद्युम्नानिरुद्धमन्त्रेषु एकैकेन एकैकं विप्रं तत्तत्स्थाने वरयेत् । मूर्त्याख्यायां शांतौ क्रमेण केशवादिद्वादश तत्तन्मन्त्रैरर्चयेत् । अन्यत्सर्वं पूर्ववदुन्नेयम् ॥ ८६ ॥

मत्स्यं कूर्मं वराहञ्च नृसिंहं वामनं तथा ।
वैभव्यां वरयेद्विप्रान्यथेच्छमितरानपि ॥ ८७ ॥

मत्स्यमिति । वैभव्यां शान्तौ मत्स्यं कूर्मं वराहं नृसिंहं वामनं च वरयेत् । यथेच्छम् इच्छायां सत्यां तथा इतरान्परशुरामबलरामकृष्णकल्कीनपि वरयेत् । वरणानन्तरं कर्त्तव्यं परमशान्त्युक्तप्रकारेणैवोन्नेयं सर्वत्र ॥ ८७ ॥

आनन्त्याञ्चतुरोऽनन्तशेषनागेन्द्रभूधरान् ।
गारुड्याङ्गरुडं तार्क्ष्यं वैनतेयं पतत्पतिम् ॥ ८८ ॥

आनन्त्यामिति । आनन्त्यां शान्तौ अनन्तशेषनागेन्द्रभूधराँश्चतुरो वरयेत् । गारुड्यां शान्तौ गरुडं तार्क्ष्यं वैनतेयं पतत्पतिञ्च वरयेत् । अत्र च प्रणवादिचतुर्थीनमोऽन्तानि नामान्येव मन्त्रा ऊह्याः ॥ ८८ ॥

गजाननाद्यैः सहितं विष्वक्सेनं तदर्चने ।
सौदर्शिन्यां शंखगदाशार्ङ्गखड्गैः सुदर्शनम् ॥ ८९ ॥

गजाननेति । तदर्चने । वैष्वक्सेन्यां शान्तौ गजाननाद्यैः सहितं गजाननजयत्सेनहरिवक्त्रकालप्रकृतिसंज्ञादिपारिषद्यसहितं विष्वक्सेनं वरयेदेतन्मन्त्राश्च नित्ये द्रष्टव्याः । सौदर्शन्यां शान्तौ शंखगदाशार्ङ्गखड्गैः सहितं सुदर्शनं वरयेत् । एतन्मन्त्राश्च नित्ये द्रष्टव्याः ॥ ८९ ॥

ऋद्धया समृद्ध्या कीर्त्या च श्रीशान्त्यां वरयेच्छ्रियम्।
क्षमां प्रतिष्ठां बहुलां भुवञ्चाथ भुवोऽर्चने ॥ ९० ॥

ऋद्धयेति। श्रीशान्त्याम् ऋद्ध्या समृद्ध्या कीर्त्या च सहितां श्रियम् अर्चयेत। भुवोर्चने भूशान्तौ क्षमां प्रतिष्ठां बहुलां भुवं चैवार्चयेत। ९० ॥

गुरूंस्तदर्च्यान्विप्रान्वा विधिनाभ्यर्च्य शक्तितः।
यद्द्यात्सा पराशान्तिः सर्वपातकनाशिनी ॥ ९१ ॥

गुरूनिति। गुरूनाचार्य्यान् तदर्च्यान् गुर्वर्च्यान्। विप्रान्वा यथाविधि समभ्यर्च्य शक्तितो दद्यादिति। यद्दक्षिणां दद्यात् यत सा सर्वपातकनाशिनी परा शान्तिः ॥ ९१ ॥

प्रधानं स्थण्डिलं मध्ये महावेद्यां प्रकल्पयेत्।
प्रत्यङ्मुखः प्राङ्मुखः सन् सर्वञ्च परिकल्पयेत्॥९२॥

प्रधानमिति। प्रधानं स्थण्डिलं महावेद्यां मध्ये प्रत्यङ्मुखः परिकल्पयेत् अन्यत्सर्वमप्रधानं प्राङ्मुखः परिकल्पयेत्॥ ९२॥

इत्येवं शान्तयः प्रोक्ताः संस्काराश्च द्विजन्मनाम्।
यथार्हमितरेषाञ्च योजनीयः क्रियाविधिः ॥ ९३ ॥

इत्येवोति। अयं श्लोको व्याख्यानं नापेक्षते ॥ ९३ ॥

इतिसंस्कारसम्पन्नः सम्प्राप्य गुरुवश्यताम्।
आराधनं हरेरेव कुर्वाणः कर्म चोदितम् ॥ ९४ ॥

इतीति। इत्युक्तप्रकारेण सर्वसंस्कारसम्पन्नः गुरुवश्यतां सम्प्राप्य हरेरेवाराधनं भगवदेकाराधनरूपं चोदितं विहितं कर्म कुर्वाणः। अनेन विहिताचार उक्तः। हरेरेवाराधनमित्यनेन नित्येष्वपि अग्नीन्द्राद्यन्तर्यामिण एवाराध्यत्वान्न देवतान्तरसंस्पर्शशङ्का कार्येति द्योत्यते॥ ९४॥

तदप्रीतिकराण्याशु प्रतिषिद्धानि वर्जयेत् ।
पश्यन्सदागमैः स्वेशफलोपायविरोधिनः ॥ ९५ ॥
तथा कुदृष्टिकृपणशास्त्राणि परिवर्जयेत् ।
भक्त्या परमया नित्यमर्चयेत्पुरुषोत्तमम् ॥ ९६ ॥
कुदृष्टिकल्पितान्देवान्कामजांश्च विवर्जयेत् ॥ ९७ ॥

तदिति । तदप्रीतिकराणि भगवच्चित्तकालुष्यकराणि प्रतिषिद्धानि वर्जयेत् अनेन विहिताचारविरुद्धमुक्तम् । पश्यन्निति । सदागमैः सच्छास्त्रैः स्वेशफलोपायविरोधिनः स्वस्वरूपपरस्वरूपफलस्वरूपोपायस्वरूपविरोधिस्वरूपाणि 'पश्यन्कुदृष्टिदृष्टानी' त्यपरः पाठः। तथा अशुद्धदृष्टिदृष्टानि अशुद्धदृष्टिपरिकल्पितानि शास्त्राणिवर्जयेत अनेन दृष्टिस्तद्विरुद्धवर्जनञ्चोक्तम्।भक्त्येति। कामजान् काम्यकर्माणि। अनेन भक्तितद्विरुद्धवर्जने उक्ते। कामदानिति पाठे परिमितफलप्रदान ब्रह्मादीन्देवानित्यर्थः ॥ ९५ ॥ ९६ ॥ ९७ ॥

धृतोर्द्ध्वपुण्ड्रश्चक्राद्यैरंकितो हरिलाञ्छनैः ।
मुद्रापुण्ड्राङ्कनादीनि तामसानि विवर्जयेत् ॥ ९८ ॥

धृतेति । तामसानि मुद्रापुण्ड्राङ्कनादीनि । तामसानि तामस शास्त्रपरिकल्पितानि मुद्रादीनि । आदिशब्देन वस्त्वाकारा गृह्यन्ते । अनेन श्लोकेन लक्ष्यतद्विरुद्धे उक्ते ॥ ९८ ॥

आचार्यप्रमुखान्नित्यं विशेषेण प्रसादयेत् ।
प्रच्युतान्प्राकृताँश्चैवं सर्वत्र परिवर्जयेत् ॥ ९९ ॥

आचार्येति । प्रसादयेत्प्रसन्नान्कुर्य्यात् । प्रच्युतान् विकलवृत्तीन् अनेन सतां सेवा तद्विरुद्धवर्जनञ्चोक्ते ॥ ९९ ॥

आतिष्ठेत्पारमैकान्त्यमपायानपमार्जयन्।
अपायवदिहैकान्त्यमशुद्धकरणान्वयात्।
निरापायं भवेत्प्राप्यं तद्विष्णोः परमं पदम्॥ १०० ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे द्वितीयोऽध्यायः॥ २॥

आतिष्ठेदिति। अपायानपमार्जयन्निराकुलं पारमैकान्त्यमातिष्ठेत्। इह अस्मिँल्लोके पारमैकान्त्यम् अशुद्धकर्मकरणान्वयात् अपायवत् आपाययुक्तं भवति। पारमैकान्त्यं निरपायम् अपायरहितं यदि भवेत्तदातद्विष्णोः परमं पदं प्राप्यं भवेत्१००

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे टीकायां द्वितीयोऽध्यायः॥२॥

भूयः स्फुटतरं वक्ष्ये शृणुध्वं मुनिसत्तमाः।
सनातनीं सतां वृत्तिं परेषां लक्षणानि च॥ १॥

भूय इति। सनातनीम् अविच्छिन्नसम्प्रदायाम्। परेषामसतां लक्षणानि चेत्येव शश्वत्पाठः॥ १॥

सर्वभूतांतरात्मानमीशमाराध्यमच्युतम्।
बुद्ध्वा चरंति सुधियो धर्मास्तत्प्रीतये परम्॥ २॥

सर्वभूतेति। सुधियो ज्ञानिनः सर्वभूतांतरात्मानं सकलचेतनांतर्याभिणम्। ईशं स्वामिनमच्युतमाराध्यं बुद्ध्वा ज्ञात्वा तत्प्रीतये परं केवलं तत्प्रीतये वर्णाश्रमोदितान् धर्मांश्चरंति सर्वभूतानामन्तरात्मानमित्यनेन सर्वांतर्यामिण एवाराध्यत्वान्नदेवतांतरपरत्वशङ्का कार्येति व्यज्यते। तत्प्रीतये परमित्यनेन साधनांतरान्वया शङ्का व्यावर्त्यते॥ २॥

व्यामुग्धमतयः केचित् क्षुद्रा नानाफलार्थिनः।
तमेव हि यजन्त्यन्ये तथान्या अपि देवताः॥ ३॥

व्यामुग्धेति। व्यामुग्धमतयोऽज्ञाः अयंच पूर्वश्लोकस्थस्य सुधिय इत्यस्य प्रतिनिर्देशः। नानाफलार्थिनः दृष्टानुश्राविकरूपबहुविधफलाकाङ्क्षिणः। अयंच तत्प्रीतये परमित्येत्यस्य पूर्वश्लोकस्थस्य प्रतिनिर्देशः। अन्याश्च देवता यजंतोऽपि तथा सुधिय इव तमेव भगवंतमेव यजंति। स्वबुद्ध्या देवतान्तरयजनेऽपि वस्तुगत्यातमन्तर्यामिणमच्युतमेव यजन्तीत्यर्थः। तथा च गीतं भगवता 'येप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्' इति। यद्वा, नानाफलार्थिनः सन्तः तमेवयजन्ति स्वासाधारणविग्रहविशिष्टमेव क्वचित्कर्मणि यजन्ति तथा तद्देवता अपि यजन्ति। न पारमैकान्त्ये तिष्ठन्तीत्यर्थः॥ ३॥

कल्पिताः कर्मबन्धेन विष्णुमायाविमोहिताः।
अपि देवा न जानन्ति स्वात्मानं किमुतापरे ॥ ४॥

यादृशकर्मानुष्ठाननिबन्धनस्याज्ञानस्य चेतनदुष्कर्मनिबन्धनभगवत्संकल्प एव निदानमित्याह—कल्पिता इति। कर्मबन्धेन कल्पिताः विपरीतज्ञानहेतुभूतदुष्कर्मबन्धाः अत एव विष्णुमायया भगवत्सङ्कल्पेन मोहिताः 'दैवी ह्येषा गुणमयी मम माया दुरत्यये'त्युक्तया भगवदधीनया प्रकृत्या विमोहिता इति वार्थः। देवा अपि स्वात्मानं स्वान्तरात्मभूतं नारायणं न जानान्ति अपरे मनुष्यास्तु न जानन्तीति किमु वक्तव्यमिति भावः॥ ४॥

वदन्ति धर्मान्व्यामिश्रान्वेदाः स्कन्धमयाः किल।
श्रुतिर्मोक्षमयी प्राह शुद्धं मोक्षैकलक्षणम् ॥ ५॥

वदन्तीति। स्कन्धमयाः वेदाः अनुवाकोपनिषदात्मकाः व्यामिश्रान्देवतान्तर्यम्याराधनात्मकान् काम्यांश्च धर्मान्-

वदन्ति मोक्षमयीति। मोक्षप्रयोजनतया मोक्षप्रचुराश्रुतिः अनुवाकोपनिषदात्मिका मोक्षैकलक्षणं मोक्षैकप्रयोजनकं शुद्धं धर्ममाह ॥ ५ ॥

प्रायेण धर्मान्व्यामिश्रानूचुर्मन्वात्रिपूर्वकाः।
शुद्धाँस्तु वयमन्ये च पञ्चरात्रपथानुगाः ॥ ६ ॥

प्रायेणेति। व्यामिश्रान धर्मान् शुद्धान् मन्वत्रिपूर्वका ऊचुः। स्कन्धमयवेदोपबृंहणं मन्वत्र्यादिभिः कृतमित्यर्थः। पञ्चरात्रमार्गानुसारिणो वयमन्ये च शुद्धान्धर्मान् पञ्चरात्रमूलवेदोपबृंहणमस्माभिः कृतमित्यर्थः ॥ ६ ॥

व्यामिश्रः पंचरात्रेऽपि धर्मः क्वाप्यनुकृष्यते।
तत्र चागमसिद्धान्ते शुद्ध एवोपदिश्यते ॥ ७ ॥

व्यामिश्र इति। पञ्चरात्रेऽपि व्यामिश्रो धर्मः क्वापि क्वचित् स्थले अनुकृष्यते। तत्र पञ्चरात्रेऽपि आगमसिद्धान्तेऽपि विशुद्धधर्म एवोपदिश्यते। मन्त्रे मन्त्रतन्त्राख्ये सिद्धान्ते क्वचित्काचिद्व्यामिश्रधर्मोऽप्युपदिश्यते। आगमसिद्धान्ते तु शुद्धधर्म एवोपदिश्यत इत्यर्थः ॥ ७ ॥

हरेः शुद्धतनोः शुद्धं व्यामिश्रं कल्पितात्मनः।
अशुद्धं कल्पितानान्तु केवलं यजनादिकम् ॥ ८ ॥

धर्माश्चतुर्विधाः शुद्धाः शुद्धतमाः अशुद्धाः, अशुद्धतमाश्चेति। तेषां स्वरूपाणि क्रमेणाह—हरेरिति। शुद्धतनोरजस्तमःकल्पितशरीरातिरिक्तस्य देवतान्तरान्तर्यामिभावम्। अन्तरेण केवलं भगवदाराधनात्मकं कर्म शुद्धमित्यर्थः। नित्यमुक्तादिशरीरस्य यजनमपि शुद्धमेवेति तेषां रजस्तमःशून्यत्वेन शुद्धतनुत्वात्कल्पितानां रजस्तमःकल्पितानाम् आत्मनः

अन्तर्यामिणः रजस्तमःकल्पिताग्नीन्द्रादिदेवतान्तर्य्यामिभावेन भगवदाराधनव्यामिश्रमित्यर्थः । कल्पितानां केवलं यजनादिकर्मशुद्धम् अन्तर्य्यामिपर्य्यन्तमगत्वा केवलदेवतान्तराराधनमशुद्धमित्यर्थः ॥ ८ ॥

ते ह्यशुद्धतमाः सर्वे तमोनिष्ठतया स्मृताः ।
श्रीकण्ठप्रमुखैरुक्ता ये धर्माः कामकामिनाम् ॥ ९ ॥

ते हीति। ये श्रीकण्ठप्रमुखैः कामकामिनां धर्मा उक्ताः; ते सर्वे तमोनिष्ठतया अशुद्धतमाः स्मृताः तामसतन्त्र एव प्रसिद्धाः अशुद्धतमा इत्यर्थः । तमोनिष्ठतयेत्यनेन या वेदबाह्याः; स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठाहिताः स्मृताः इतिवचनमत्र प्रतिज्ञातम् ॥ ९ ॥

त्रैविद्यानां सदामिश्राः प्रायेण विहिताः क्रियाः ।
ज्ञानं भक्तिश्च वैराग्यं सर्वं शुद्धमुदाहृतम् ॥ १० ॥

त्रैविद्यानामिति । त्रैविद्यानां स्कन्धमयवेदनिष्ठानां परमैकान्तिनां प्रायेण प्राचुर्य्येण मिश्राः क्रियाः विहिताः त्रैविद्यानाम् । अपि ज्ञानं भक्तिः वैराग्यश्च शुद्धमेवोदाहृतम् । आज्ञाकैङ्कर्येष्विव देवतान्तर्याम्याराधनं सर्वत्रेत्यर्थः ॥ १० ॥

न्यासनिर्द्धूतपाप्मानः प्रियैः प्रियतमैरपि ।
मिश्रैः शुद्धैश्च नियमैर्विष्णुमाराधयन्ति ये ॥ ११ ॥

न्यासेति । न्यासनिर्द्धूतपाप्मानः प्रपत्तिबलपरिग्रहास्तसकलपापास्ते त्रैविद्याः क्रमेण प्रियैः प्रियतमैरपि मिश्रैः शुद्धैश्च नियमैर्विष्णुमाराधयन्ति । मिश्राः शुद्धाः प्रियाः प्रियतमा इत्यर्थः ॥ ११ ॥

---

(१) मेत्य इति पाठान्तरम् ।

निन्दितक्रियया हानाद्विहीनानाञ्च कुप्यति ।
ऐच्छैरपि पुनः शुद्धैः परं तुष्यति माधवः ॥ १२ ॥

निन्दितेति । विहितानां हानात् त्यागात् निन्दितक्रियया च माधवः कुप्यति । विहिताकरणं निषिद्धाकरणञ्च भगवन्निग्रहजनकम् इत्यर्थः । आज्ञारूपफलानुष्ठानवत् अनुज्ञारूपधर्मानुष्ठानवत् भगवदनुग्रहजनकम् इत्याह । ऐच्छैरिति । ऐच्छैः इच्छायां सत्यामेव कर्त्तव्यैर्न पुनर्नित्यनैमित्तिकाद्यकरणैः प्रत्यवायवद्भिः शुद्धैः देवतान्तरान्तर्यामिविषयत्वशून्यैः दीपारोपणमालाकरणादिभिः माधवः श्रियः पतिः अनेन कैङ्कर्यप्रतिबन्धिमिथुनमिति गम्यते । नित्येष्विव व्यामिश्रिता अनुज्ञामूलास्तु शुद्धा एव कर्त्तव्या इत्यर्थः । यद्वा, निन्दिताक्रियाविहितहानजनितो भगवन्निग्रहः शुद्धधर्मरूपपरमादिशान्त्यनुष्ठानेनापि नापैतीत्युत्तरार्द्धाभिप्रायः ॥ १२ ॥

विशुद्धपरिवारस्य नित्यं शुद्धा हरेः क्रिया ।
तयैव शुद्धकर्मेति त्रैविद्योऽपि न गद्यते ॥ १३ ॥

विशुद्धेति । विशुद्धपरिवारस्य रजस्तमःस्पर्शशङ्काविरुद्ध नित्यादिपरिवारयुक्तस्य नित्यमहरहः कर्त्तव्या हरेः क्रियाआराधनात्मिका शुद्धा तयैव नित्यार्चनात्मकक्रिययैव त्रैविद्योऽपि हि व्यामिश्रधर्मानुष्ठातापि शुद्धकर्मेति निगद्यते व्यामिश्रधर्मानुष्ठताप्रपन्नोऽपि देवतान्तरस्पर्शरहितः ; भगवन्नित्यार्चनानुष्ठातृत्वात् शुद्धकर्मेति मुनिभिरुच्यत इत्यर्थः ॥ १३ ॥

शुद्धो मिश्रस्तथान्यो वा समर्पितभरो हि यः ।
सर्वः स वासुदेवस्य कैंकर्य्यानन्दमश्नुते ॥ १४ ॥

शुद्धानुष्ठातुरिव व्यामिश्रानुष्ठातुः परिमोक्षो नियत इत्याह शुद्ध इति। शुद्धः शुद्धयाजी। मिश्रः मिश्रयाजी अन्य इति व्यामिश्रयाजिविशेषणं शुद्धो वा तथान्यः शुद्धाद्यन्यो व्यामिश्रो वा समर्पितभरः भगवन्न्यस्तात्मीयभरः सद्यो वासुदेवस्य कैङ्कर्यात्मकमानन्दमश्नुते । सद्य इति पदं तत्कालविषये तत्कालपरमेव दृष्टिविषये अविलम्बाभिव्यापकं मन्तव्यम् । शुद्धो मिश्र इत्यादेरेवं वार्थः। शुद्धो व्यामिश्रो वा तथा अन्यः अशुद्धो वा न्यस्तभरः कैङ्कर्य्यानन्दमयमश्नुत इति। शुद्धत्वञ्च भरन्यासानुष्ठानानन्तरभावि मन्तव्यम् । तदुत्तरमशुद्धधर्मानुष्ठानायोगात्। अथवा अन्योऽपीति पाठः । अशुद्धयाज्यपि न्यस्तभरो मुक्तो भवति । किं पुनर्व्यामिश्रयाजीत्येतदभिप्रायः । प्रपन्नस्य दुःस्वभावासनादिना अशुद्धान्वयेऽपि पुनः सत्रपानुतापं ह्यन्वितप्रायश्चित्तान्वयप्रवासेन तमपराधं निवर्त्य समनुष्ठितो भरन्यास एव कैङ्कर्यानन्दं ददातीति वाभिप्रायः ॥ १४ ॥

शुद्धादीनां तु धर्माणामधिकारादियोगतः ।
क्रियते पुरुषादीनां व्यपदेशस्तथाविधः ॥ १५ ॥

पुरुषे शुद्धादिव्यपदेशः। शुद्धादिधर्मानुष्ठाननिबन्धन इत्याह शुद्धादीनामिति । शुद्धादीनां धर्माणाम् अधिकारादियोगः आदिशब्दादनुष्ठानं गृह्यते । पुरुषादीनाञ्च तथाविधो व्यपदेशः क्रियते । शुद्धधर्माधिकारी तदनुष्ठाता शुद्ध एवं मिश्राधिकारी मिश्र इत्यवगन्तव्यम् ॥ १५ ॥

एकायने ह्यधिकृताः सर्वे यान्त्यञ्जसा हरिम् ।
ये च नानापथेऽन्यत्र प्रतिबुद्धास्तु केचन ॥ १६ ॥

एकायन इति । एकायने मूलवेदे अधिकृताः तदुक्तधर्मानुष्ठातार इत्यर्थः । सर्वे हरिं यान्ति । एकायनस्य मोक्षैकल-

क्षणत्वात् तन्निष्ठाः सर्वेऽपि हरिं प्राप्नुवन्तीत्यर्थः । नानापथे नानामार्गे अन्यत्र तु वेदान्ते तु अधिकृताः केचन प्रतिबुद्धाः न सर्वे । त्रैविद्यास्तु स्वर्गापवर्गादिरूपनानापुरुषार्थतदुपाया-दिप्रतिपादिकतया तत्र त्रिवर्गमात्र एव सर्वे लग्ना भवन्ति केचि-देव सुकृतपरिपालनेन महताम् अपवर्गतदुपायौ ज्ञात्वा हरिं प्राप्नुवन्तीत्यर्थः ॥ १६ ॥

एकायना व्रजन्तोऽपि त्रैविद्या वा स्ववर्त्मना ।
स्खलन्तो दृष्टिवैषम्याच्च्यवन्त्यैकान्त्यतो हरेः ॥१७॥

एकायनानां त्रैविद्यानामपि स्वधर्मात्स्खलने पारमैकान्त्य-हानिस्तुल्येत्याह–एकायना इति । स्ववर्त्मना स्वमार्गेण व्रजंतोऽपि दृष्टिवैषम्यात् विपरीतज्ञानेन स्खलन्तः हरेः पार-मैकान्त्याच्च्यवन्ति । अतः स्वमार्गेणैव गन्तव्यमित्यर्थः॥१७॥

यायाच्छुद्धेन मार्गेण मिश्रेष्वन्यतमेन वा ।
परं भगवदैकान्त्यं पूर्वैराचरितेन वा ॥ १८॥

यायादिति । शुद्धेन मार्गेण परं भगवदैकान्त्यं यायात् । मिश्रेषु व्यामिश्रयोगेषु पूर्वैराचरितेन अन्यतमेन वा भगव-दैकान्त्यं यायात् । व्यामिश्रेषु बहुषु मार्गेषु पूर्वपरिगृहीतेन केनचिद्भगवदाराधनतया धर्माननुतिष्ठतः पारमैकान्त्यमभङ्गुर-मित्यर्थः । पूर्वैराचरितमित्यनेन सूत्रप्रयोगप्रक्रियामुत्सृज्य सूत्रान्तरप्रक्रियापरिग्रहः प्रात्यवायिक इति गम्यते ॥ १८ ॥

यथैवाश्रमिणः पूर्वं व्रजन्त्युत्तममाश्रमम् ।
तथैव शुद्धं त्रैविद्यामिश्रं नैकायनाः पुनः ॥ १९ ॥

व्यामिश्राणां शुद्धे प्यधिकारोऽस्ति शुद्धानां न व्यामिश्र इत्याह–यथैवेति । पूर्वं आश्रमिणः ब्रह्मचार्यादयः उत्तमाश्रमं

गृहाश्रमादिकं यथा व्रजन्ति नोत्तरे पूर्वमाश्रमं तथैव त्रैविद्याः व्यामिश्रा एकायनः पुनः शुद्धास्तु मिश्रं न व्रजन्ति ॥ १९ ॥

ऐच्छश्च नियतश्चेति नित्यनैमित्तिकं तथा।
काम्यश्च विविधं सर्वं शुद्धाशुद्धोभयात्मकम् ॥ २० ॥

ऐच्छमिति । ऐच्छं विहिताकरणप्रत्यवायरहितं दीपारोपणमालाकरणादिनियतं वर्णाश्रमनियतं सन्ध्योपासनपञ्चमहायज्ञादिनित्यम् एकादश्युपवासादिकं यद्यपि नियतमपि नित्यान्तःपात्येव तथापि पृथग्विभागः प्रमाणप्रमेयेत्यादाविव आवश्यकज्ञातव्यत्वात् कृत इति । तथा नैमित्तिकं निमित्ते सति कर्तव्यमुपरागस्नानादिकं विविधं बहुविधं काम्यं कामनोपाधिना कर्तव्यं चित्रचैत्यादिकं सर्वमपि शुद्धाशुद्धोभयात्कं शुद्धात्मकमशुद्धात्मकमुभयात्मकञ्च भवति । उभयात्मकमित्यनेन व्यामिश्रात्मकं विवक्षितम् । ऐच्छादिषु कर्मसु कानिचिच्छुद्धानि कानिचिदशुद्धानि कानिचिद्व्यामिश्राणीत्यर्थः । एतेषु शुद्धेष्वेव एकायनानामधिकारः । त्रैविद्यानां मुमुक्षूणां तु तेषां अशुद्धेष्वधिकारादिति भावः । यद्वा नियतमित्येतस्य, विवरणं नित्यं नैमित्तिकं तथेति;ऐच्छमित्येतद्विवरणं काम्यश्च विविधं सर्वमिति। अन्यत्तुल्यम्॥२०॥

स्वतः सङ्कल्पतश्चापि कर्मणां भिद्यते गतिः ।
फलानामिह सर्वेषां प्रदाता स्वयमच्युतः ॥ २१ ॥

न केवलं देवतान्तरविषयत्वेन कर्मणामशुद्धत्वम् । अतद्विषयाणामपि फलकामनया अनुष्ठाने त्वशुद्धत्वमेवेत्याह-स्वत इति । स्वतः स्वरूपेण सङ्कल्पतः स्वरूपभेदाभावेऽपि सङ्कल्पेन च कर्मणां गतिर्भिद्यते । इह फलकर्माणि सर्वेषां फलानां कर्मणि प्रदाता अच्युतो नारायण एव,देवतान्तराराधनरूपतया कृतानामपि कर्मणां फलप्रदाता भगवानेवेत्यर्थः ॥ २१ ॥

यथा कामफला यज्ञाः सृष्टा भगवता स्वयम्।
त एव विदुषां तर्हि निर्वाणाय निराशिषाम् ॥ २२ ॥

सङ्कल्पभेदमात्रेण कर्मगतिभेदं दर्शयति यथेति। भगवता कामफलाः, काम्यत इतिकामः स्वर्गादिः। तत्फलाः यज्ञाः भगवता यथा सृष्टाः यादृक्प्रकाराः सृष्टा अत एव तादृक्प्रकाराः त एव यज्ञा निराशिषां विदुषां निर्वाणतया भवन्ति अतः कामनया यज्ञाद्यनुष्ठानस्याशुद्धत्वान्मुमुक्षुभिः कामनया तदनुष्ठानं न कर्त्तव्यमिति फलितार्थः ॥ २२ ॥

अबुद्ध्वा परमात्मानं हरिमन्या हि देवताः।
ये यजन्ति निरस्ताशास्तेषां ज्ञानाय तच्छनैः ॥ २३ ॥

भगवदाराधनबुद्ध्या अनुष्ठितान्यपि कामनोपाधिमन्तरेणानुष्ठितानि कर्माणि शनैः कालान्तरे ज्ञानसाधनानि भवंतीत्याह अबुद्ध्वेति। हरिं परमात्मानमबुद्ध्वा तत्तद्देवतान्तर्यामितया भगवन्तमाराध्यमबुद्ध्वेत्यर्थः। अन्यदेवताश्च ये निरस्ताशाः निष्कामा यजन्ति भगवद्यजनन्तेषां शनैर्ज्ञानाय भवति। विलम्बेन कालान्तरेण ज्ञानसाधनमित्यर्थः। वस्तुतस्तत्रापि भगवत एवाराध्यत्वात्स एव भगवान्स्वाभाविकसंबन्धेन कृपया शनैर्ज्ञानं ददातीति भावः ॥ २३ ॥

बुद्ध्वापि परमात्मानं पारमैकान्त्यवर्ज्जिताः।
इष्ट्वापि परमैर्यज्ञैः स्थानं यान्ति न शाश्वतम् ॥ २४ ॥

तत्तत्कर्माराध्यस्तत्तद्देवतान्तर्यामीति ज्ञानेऽपि पारमैकान्त्याभावे तु न मोक्षप्राप्तिरित्याह—बुद्ध्वापीति। परमात्मानमन्तर्यामिणमाराध्यं बुद्ध्वापि ये पारमैकान्त्यवर्जिता भवन्ति ते विविधैर्यज्ञैरिष्ट्वापि शाश्वतं स्थानं न यान्ति बहुविधयज्ञानुष्ठानेऽपि पारमैकान्त्यराहितानां परमपदप्राप्तिर्नास्तीत्यर्थः॥२४॥

व्यामिश्राँश्चापि शुद्धाँश्च तत्तत्कालविभागवित् ।
यथान्यायं प्रयुञ्जीत धर्मानैकान्त्यनिष्ठितः ॥ २५ ॥

पारमैकान्त्ये दृढव्रतः सन्नेव यथाधिकारं शुद्धान्व्यामिश्राँश्च धर्माननुतिष्ठेदित्याह–व्यामिश्रानिति । तत्तत्कालविभागवित् अभिगमनादिकालतत्त्वज्ञः । विभागवदिति पाठे विभागयुक्तं यथाभवति तथेति क्रियाविशेषणम् । यथान्यायं यथाधिकारम् ॥ २५ ॥

बुद्ध्वापि परमात्मानमशुद्धं कर्म कामिनाम् ।
शुद्धं सर्वमकामानामेतद्धि परमं मतम् ॥ २६ ॥

न केवलं देवतान्तरत्वमेव पारमैकान्त्यहानिपरम् अपि तु प्रयोजनान्तरत्वमपीत्यभिप्रायवानाह–बुद्ध्वापीति । परमात्मानं बुद्ध्वापि तत्तत्कर्माराध्यं तत्तद्देवतान्तर्यामिणं ज्ञात्वा विद्यमानानामपि कामिनां प्रयोजनान्तरार्थिनां कर्म अशुद्धं परमात्मानं बुद्ध्वा अकामानामनन्यप्रयोजनानां सर्वं शुद्धम् एतत्परमं मतं परमरहस्यमित्यर्थः ॥ २६ ॥

नानाफलक्रियायोगदेवताव्याकुलात्मभिः ।
दुर्ज्ञानं दुरवाप्यञ्च दास्यं विष्णोः परं पदम् ॥ २७ ॥

भगवत्कृपाविधुराणां पुंसां प्रयोजनान्तरोपायान्तरदेवतान्तरव्याकुलचित्तत्वात्तैः स्वयं पुरुषार्थरूपं भगवद्दास्यं ज्ञातुं प्राप्तुं च न शक्यमित्याह–नानेति । नानाफलैर्बहुविधैः प्रयोजनान्तरैर्नानाप्रयोगैः क्रियात्मना नानोपायान्तरैः अनेकविधैः क्रियात्मनोपायान्तरैर्नानाविधैर्दैवतैरनेकदेवतान्तरैश्च व्याकुलात्मभिर्व्याकुलचित्तैश्च परं पदं मोक्षरूपं स्वयं पुरुषार्थमित्यर्थः । विष्णोर्दास्यं दुर्ज्ञानं दुरवाप्यञ्च ज्ञातुं प्राप्तुञ्चाशक्यमित्यर्थः ॥ २७ ॥

यत्तु विश्वपतेर्विष्णोर्नित्यं दासत्वमात्मनः।
तज्ज्ञानन्तत्क्रिया वा तत्प्रसादादेव सिध्यति ॥ २८ ॥

भगवत्प्रसादात्तेषां चित्ते ज्ञानादिकं सिध्यतीत्याह—यत्त्विति विश्वपतेः सर्वलोकानां नायकस्य विष्णोः प्रतिसम्बन्धिनः आत्मनोऽधिकरणस्य स्वस्य यत्तु नित्यं दासत्वं तज्ज्ञानं तस्य दासस्य ज्ञानं तत्क्रिया तदनुगुणकैङ्कर्यं वापि तत्प्रसादात् विष्णोः प्रसादादेव सिध्यति। विश्वपतेरित्यनेन पतिं विश्वस्यैतत्प्रमाणमित्ययम्, आत्मनो दास्यत्वमित्यनेन आत्मेश्वरमित्ययमंशः स्मारितः ॥ २८ ॥

प्रसादनानामीशस्य श्रेयसी शरणागतिः।
तत्प्रधाना हि सिध्यन्ति यथान्याः सकलाः क्रियाः२९

ननु तत्प्रसादादेवेत्युक्तम्। प्रसादनोपायश्च कः? इत्याह—प्रसादनानामिति। ईशस्य प्रसादनानां प्रसादनोपायानां मध्ये शरणागतिः श्रेयसी परमप्रसादनोपास्तिरस्तीत्यर्थः। तद्वास्यात्सकलाः क्रियाः तत्प्रधाना हि सिध्यन्ति उपायान्तराण्यपि हि अङ्गभावेन प्रपत्त्यनुष्ठानादेव सिद्ध्यन्तीत्यतः श्रेयसी शरणागतिरिति भावः ॥ २९ ॥

यश्चायमात्मनिक्षेपः क्रियते परमात्मनि।
तेनैव हि भरन्यासस्तथा फलसमर्पणम् ॥ ३० ॥

आत्मनिक्षेपापरपर्य्याया शरणागतिः। भरसमर्पणेन फलसमर्पणेनाविनाभूतेत्याह—येनेति। येन येन मन्त्रेण परमात्मन्यात्मनिक्षेपः क्रियते तेन मन्त्रेणैव भरन्यासः कार्यः। तथा फलसमर्पणं कर्त्तव्यमिति शेषः ॥ ३० ॥

य: शरण्यमशेषाणां प्राप्नोति शरणं हरिम् ।
स मुक्तः सर्वपापेभ्यः स्वकुलञ्च समुद्धरेत् ॥ ३१ ॥

भगवन्न्यस्तभरस्य कुलमपि कृतार्थमित्याह य इति । अशेषाणां शरण्यमित्यनेन प्रपत्तेः सर्वाधिकारितोक्ता 'समुक्तः सर्वपापेभ्य' इत्यनेन 'सर्वपापेभ्यो मोक्षयिष्यामि' इति भगवद्वचनं स्मारितम् ॥ ३१ ॥

न तथा विविधैर्दानैर्न तपोभिर्न चाध्वरैः ।
यथैव गुरुतां यान्ति नरा नारायणाश्रयात् ॥ ३२ ॥

सत्कर्मनिरताः शुद्धाः सांख्ययोगव्यवस्थिताः। नार्हन्ति शरणस्थस्य कलां कोटितमामपीत्यभिप्रायेणाह—न तथेति। यज्ञाः पञ्चमहायज्ञाः । अध्वराः ज्योतिष्टोमादयः । गुरुतामुत्कर्षम् ३२

यथैव भगवान्विष्णुर्देवानां परमो गुरुः ।
तथैव हि मनुष्याणां वैष्णवः परमो गुरुः ॥ ३३ ॥

यथैवेति । परमः परमार्थः परा मास्मादिति परमः वैष्णवः परमैकान्ती सामान्यपरत्वेऽपि प्रपन्नविषयेषु गुरुत्वं किं पुनर्न्यायसिद्धमिति भावः ॥ ३३ ॥

न परीक्ष्य वयो वन्द्या नारायणपरायणाः ।
अपि स्युर्हीनजन्मानो मान्या निघ्नेन चेतसा ॥ ३४ ॥

नेति । वयः परीक्ष्य वन्द्याः न स्युर्वयसो नापि वन्द्या एवेत्यर्थः । हीनजन्मानोऽपि स्युरपकृष्टजातिजाता अपि भवन्तु निघ्नेन आयत्तेन चेतसा मान्याः उत्कृष्टजन्मप्रयुक्तमहङ्कारं विहाय प्रतिपत्तिं कुर्यादित्यर्थः ॥ ३४ ॥

समर्पितात्मनः श्रीशे सत्त्वयुक्तेन चेतसा ।
नापायोऽभिभवेत्सन्तं सद्यः प्रशमयेदपि ॥ ३५ ॥

समर्पितेति। सत्त्वयुक्तेन सत्त्वगुणयुक्तेन चेतसा श्रीशे समर्पितात्मनः न्यस्तात्मभरन्यासात् अपायो नाभिभवेत् सत्त्वप्राचुर्येण प्रपन्नतया उत्तमाधिकारित्वान्नापायस्तेषु प्रवर्त्तेत इत्यर्थः। सन्तं दैवात्प्राप्तमपायं सद्यः प्रशमयेत। प्रपत्तेर्हि प्रामादिकन्त्वपायम् अपायः प्रपत्तिमाहात्म्यादेव अश्लिष्टो भवतीत्यर्थः। यद्वा, सन्तमित्यनेन कादाचित्कुबुद्धिपूर्वापराध उच्यते। सद्य इति पदञ्चाविलम्बपरम्। अचिरादेव यथोचितप्रायश्चित्तान्वये सद्यः प्राप्तमपायं नाशयतीत्यर्थः। अस्मिन्व्याख्याने तु प्रशमयेदिति स्वरसम् (१) पूर्वव्याख्याने तु सद्य इति पदम्। प्रशमयेदित्यस्य कर्त्ता उत्तरश्लोकस्थमाधवो द्रष्टव्यः। नापायोऽभिभवेदित्यनेन उत्तमाधिकारिणः अपायेष्वन्वय एव नास्तीत्युक्तम्॥ ३५॥

प्रपन्नमपि यं कश्चित्प्रसक्तं पापकर्मणि।
चिरात्संयोज्य विनयैः परिगृह्णाति माधवः॥ ३६॥

प्रपन्नमिति। प्रकर्षेण सक्तमनेन बुद्धिपूर्वकोत्तराद्यसंपत्तिरुच्यते। विनयैः काणत्वखञ्जत्वादिशिक्षाभिः संयोज्य सम्यग्योजयित्वा चिरात् परिगृह्णाति चिरात्संयोज्येति यथाश्रुत एवान्वयः। बहुकालानुवर्तिक्लेशैरपायान् कृत्वा परिगृह्णातीत्यर्थः॥ ३६॥

पूर्वेषामुत्तरेषां च न्यासो न्यासाय पाप्मनाम्।
सर्वेषामपचाराणामयं हि क्षमापणं परम्॥ ३७॥

बुद्धिपूर्वोत्तराद्ये प्राप्तेऽपि अशक्तस्तत्प्रायश्चित्तत्वेन न्यासमेवानुतिष्ठेदित्याह—पूर्वेषामिति। पूर्वेषां न्यासात्पूर्वमनादिकालार्जितानां प्रारब्धव्यतिरिक्तानाम् उत्तरेषां न्यासनिर्वृत्त्यनन्तरं कृतानां प्रामादिकानां पाप्मनाञ्च नाशाय न्यासो

(१) बहुव्रीहिः। विधेयतया बलवद्विवक्षितमित्यर्थः।

भवत्ययमेव न्यासः । सर्वेषामुपर्युपरि प्राप्तानां समस्ताना मपचाराणां च क्षमापणमशक्तस्य बुद्धिपूर्वोत्तराद्यमपि तन्निमित्तकृतो न्यासो निवर्त्तयतीत्यर्थः । हिशब्देन शक्तौ प्रतिपदोक्तं स्यादशक्तौ शरणागतिरित्यादि प्रसिद्धिर्द्योत्यते । समर्पितात्मनः श्रीशे इत्यादिनोक्तानर्थान् आचार्य्याः संगृहीतवान् । प्रारब्धेतरपूर्वपापमखिलं प्रामादिकं चोत्तरं न्यासेन क्षपयन्नभ्युपगतप्रारब्धखण्डश्च नः धीपूर्वोत्तरपाप्मनामजननाज्जातेऽपि तन्निष्कृते कौटिल्ये सति शिक्षयाप्यनघयन् क्रोडीकरोति प्रभुरिति ॥ ३७ ॥

नारी वा पुरुषो वापि प्रपद्य शरणं हरिम् ।
तत्र चैकान्त्यवृत्त्यैव गच्छेतां भुवि भाव्यताम् ॥ ३८ ॥
सकृदेव कृतो न्यासो वृत्तिर्भवति शाश्वती ।
तथापि तन्मूलतया तस्यास्तादात्म्यमीरितम् ॥ ३९ ॥

नारीति । सकृदेवेति च । न्यासः प्रपत्तिः सकृदेव भवेत् । आवृत्तिर्नास्तीत्यर्थः।वृत्तिस्तु शाश्वती विहिताचाराद्यात्मिका वृत्तिस्तु आप्रयाणादावर्तनीया । एवमनुवृत्तितया च भिन्नयोरैक्यव्यपदेशो मूल आविर्भावविनिबन्धन इत्याह । तथापीति तन्मूलतया न्याससमूलतया तस्या वृत्तेस्तादात्म्यं न्यासरूपत्वमीरितम् ॥ ३८ ॥ ३९ ॥

ईशे न्यस्तभराणां हि कर्त्तव्यं नास्ति किंचन ।
यद्यस्ति शुद्धमेच्छन्तत्सामान्यमिति यौक्तिकाः ॥ ४० ॥

वृत्तेरवश्यकर्त्तव्यतामुक्त्वा प्रपन्नस्य कृतकृत्यत्वात् कर्त्तव्यत्वं न किञ्चिदस्तीति मतं कुतर्कमूलमित्याह-ईश इति । ईशे न्यस्त भराणां किञ्चन कर्त्तव्यं नास्ति भगवन्न्यस्तभरतया कृतकृत्य-

त्वात् कर्त्तव्यमेषां नास्तीत्यर्थः। यद्यस्ति अस्ति चेव, शुद्धं तत्राप्यैच्छमेव। सामान्यं सर्वसाधारणं देवतान्तर्याम्याराधनरूपम् अकरणे प्रत्यवायरहितं सर्ववर्णाश्रमसाधारणं दीपारोपणमालाकरणादिरूपमिति पदत्रयार्थः। इति यौक्तिका वदन्ति न प्रामाणिका इत्यर्थः। व्यामिश्रान्वयेऽपि पारमैकान्त्यभङ्गाभावात्। नित्यनैमित्तिकानुष्ठानस्य उपायत्वाभावेन कृतकृत्यताभङ्गाभावात्। अननुष्ठाने च तेषां चित्तकालुष्यजननेन तदजननार्थमवश्यानुष्ठाने उपायत्वाच्च वृत्त्यादेरप्यकरणप्रसङ्गात्। तदकरणे तन्मूलतया सर्वासामपि क्रियाणां मूलाकरणादवद्यानन्वयप्रसङ्गादितः पूर्वं कैश्चिदपि वैष्णवमर्य्यादानुप्रविष्टैरकृतशौचाचमनैर्भगवदाराधनकरणाद्यदर्शनात्प्रत्युतनियतैरेव, न हीनवर्णानधिकृतकल्पेन भगवदाराधनाद्यनुष्ठानदर्शनाच्च नित्यनैमित्तिकाद्यनुष्ठानस्य सम्यङ्नयनिर्णीतार्थप्रमाणमूलत्वात्।केवलं युक्तिमूलं यद्यस्ति शुद्धमैच्छं तत्समान्यमिति मतमनादरणीयमित्यर्थः॥ ४० ॥

दृप्ताः प्रपद्य लक्ष्मीशं चपला मुक्तमानिनः।
प्राप्यान्तमपि देहस्य च्यवन्त्युज्झितवृत्तयः॥ ४१ ॥

निर्भरत्वानुसन्धानजनितौद्धत्येन परित्यक्तवृत्तीननुशोचति–दृप्ता इति। चपलाः विषयान्तरमनोरथाः। लक्ष्मीशं प्रपद्य दृप्ताः भरन्यासबलानुसन्धानेन अकुतोभयाः। मुक्तमानिनः मुक्तानात्मनो मन्यमानाः। उज्झितवृत्तयोऽसन्तः। देहानामन्तं प्राप्यापि च्यवन्ति च्युता भवन्ति॥ ४१ ॥

अथैतत्परमर्षीणां ज्ञेयं तत्त्वविदां मतम्।
दास्यं हि शुद्धं मिश्रं वा व्यामिश्रं चोदितं पृथक्॥४२॥

अतो यावद्देहं यथाधिकारं शुद्धं व्यामिश्रं भगवदाराधनात्मकं कर्मावश्यमनुष्ठेयमित्याह—अथेति । तत्त्वविदां परमर्षीणां मतमेतत् ज्ञेयमवश्यं ज्ञातव्यम् । तत्किमित्यत आह । दास्यमित्यादिना शुद्धं व्यामिश्रं वा दास्यम् । आमुक्ति मोक्षपर्य्यन्तं पृथक् चोदितमेकायनैः शुद्धं त्रैविद्यैर्व्यामिश्रं यथासम्बन्धं शुद्धं भगवद्दास्यात्मकं यावद्देहपातमनुवर्त्त ीयमित्यर्थः ॥४२॥

सामान्या च विभक्ता च वृत्तिः सर्वस्य देहिनः ।
दुस्त्यजां नियतामेवमिमां प्रत्यवधार्य्यताम् ॥ ४३ ॥

सामान्येति।सामान्यादिर्देहिनः वृत्तिः सामान्या देहसाधारणी विभक्ता वर्णाश्रमप्रतिनियता च भवति । एवंभूतां नियताम् अवश्यं कर्त्तव्यम् अत एव दुस्त्यजाम् इह वृत्तिं प्रति अवधार्य्यताम् ॥ ४३ ॥

यथा यथा निषेवेत सतो वृद्धान्निरन्तरम् ।
तथा तथास्य वै वृत्तिर्निरपाया हि वर्द्धते ॥ ४४ ॥

वृत्तिवैकल्याभावश्च सत्सेवया भवतीत्याह—यथेति । सतः परमैकान्तिनो वृद्धान्नियतमविच्छेदेन यथायथा येनयेन प्रकारेण सेवते तथातथा तेनतेन प्रकारेण अस्य वृत्तिर्निरपाया अपायरहिता सती अभितो वर्द्धते स्वस्य स्वाभिमतानाञ्च वर्द्धत इत्यर्थः ॥ ४४ ॥

वीर्य्यं स्वकर्मधीर्दृष्टिस्तेजोऽङ्कः शक्तिरर्चनम् ।
बलं वैराग्यमैश्वर्य्यं सत्सङ्गः षड्गुणा हि सा ॥ ४५ ॥

विरुद्धवर्जनसहितानां वृत्तीनां षाड्गुण्यभेदं निरूपयति वीर्य्यमिति । स्वकर्म्म विहिताचारो वीर्य्यम् । दृष्टिः धीर्ज्ञानम् अंको लक्ष्मतेजः । अर्चनं भक्तिः । शक्तिर्वैराग्यम् । निन्द्यवर्जनम्

बलम् । सत्सङ्गः सतां सेवा । ऐश्वर्यमेवं सा वृत्तिः षड्गुणा हि अतो वृत्तिमाश्रितः षाड्गुण्यपरिपूर्ण इत्यर्थः ॥ ४५ ॥

सेव्योऽयं कर्महस्ताङ्घ्रिर्ज्ञानदृष्टिर्भजाननः ।
सत्सेवनाशिरा धर्मो वैराग्यौजाः सुलक्षणः ॥ ४६ ॥

सेव्य इति । कर्मविहिताचार एव हस्तावङ्घ्री पादौ च यस्य स तथोक्तः । ज्ञानं दृष्टिरेव दृष्टी नेत्रे यस्य स तथोक्तः । भजो भक्तिरेवाननं मुखं यस्य स तथोक्तः । सत्सेवनं सतां सेवनमेव शिरो यस्य ससत्सेवनशिराः वैराग्यं निन्द्यवर्जनमोजो यस्य स वैराग्यौजाः । सुलक्षणः शोभनं लक्षणं लक्ष्म यस्यासौ सुलक्षणः । श्लिष्टरूपकमिदम् । अयं धर्मः सेव्य अनेनाराध्यत्वेन रूपणं कृतमित्यर्थः ॥ ४६ ॥

वदन्तोऽपि गुणान्विष्णोः कुर्वन्तोऽपि च तत्क्रियाः ।
मन्दपुण्या न विन्दन्ति पारमैकान्त्यसम्पदम् ॥ ४७ ॥

वदन्त इति । तत्क्रियाः भगवद्धर्मान् सत्यपि भगवद्गुणे सद्धर्मानुष्ठाने च सति पुण्यवन्तः पारमैकान्त्ये तिष्ठन्तीत्यर्थः ॥ ४७ ॥

सम्भूय च कुले श्लाघ्ये सर्वान्वेदानधीत्य च ।
विधाय च महत्कर्म विष्णोर्दास्यं हि दुर्लभम् ॥ ४८ ॥

सम्भूयेति । विशिष्टकुले जन्म सर्ववेदाध्ययनं दुष्करधर्मानुष्ठानं वा न पारमैकान्त्यप्रयोजकमित्यर्थः ॥ ४८ ॥

सतां निषेवणं वापि जननं वा सतां कुले ।
विविक्तमथवा ज्ञानं विष्णोर्दास्यावलम्बनम् ॥ ४९ ॥

किं तर्हि पारमैकान्त्यनिमित्तमित्यत आह—सतामिति । सतां निषेवणं सतां परमैकान्तिनां कुले जन्मनिमित्तसंशय-

विपर्ययेभ्यो व्यावृतं ज्ञानं वा विष्णोर्दास्यावलम्बनमाधारः कारणमिति यावत् ॥ ४९ ॥

अस्वतन्त्राः सदा नार्य्यः स्थिता गुर्वादिशासने ।
वर्जयेयुर्विरुद्धानि यत्किंचिद्धर्मसंश्रयाः ॥ ५० ॥

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपासन(१)मित्यादिभिः स्त्रीणां पृथग्धर्मनिषेधात् अस्वतन्त्रतया आचार्यनियमने स्थित्वा विरुद्धवर्जनपूर्वकं स्वोचितयत्किञ्चिद्धर्मानुष्ठानेनापि वृत्तिः पूर्णा भवतीत्याह-अस्वतन्त्रा इति । नार्य्यः स्त्रियः गुर्वादिशासन इत्यत्रादिशब्देन पतिपित्रादयो गृह्यंते ॥ ५० ॥

तूष्णीं प्रायाः क्रियाः स्त्रीणां मन्त्रश्रावणबोधने ।
वाचनञ्च परेऽन्येऽपि धारणं चार्चने पुनः ॥ ५१ ॥

तूष्णीं प्राया इति । स्त्रीणां क्रियाः तापादिसंस्काराः तूष्णीं प्रायाः अमन्त्रका होमादिशून्या इत्यर्थः । मन्त्रश्रावणबोधने मन्त्रस्य श्रावणं तदर्थज्ञापनञ्च ऋषय इच्छन्तीति शेषः । परे केचन ऋषयस्तु वाचनमपीच्छन्ति । अन्ये तु मन्त्रस्य धारणमपीच्छन्ति । अर्चने पुनः आराधने तु प्रकारभेदोऽस्तीति शेषः ॥ ५१ ॥

भर्तुरासनदानाद्यैः स्नापनालंक्रियादिभिः ।
यथा चाभ्यवहाराद्यैः परिचर्य्या हरेस्तथा ॥ ५२ ॥

प्रकारभेदमाह-भर्तुरिति । भर्तुः पत्युः आसनदानाद्यैः आसनप्रदानादिभिः स्नापनालंक्रियादिभिश्च यथा परिचर्य्या भवति तथैवाभ्यवहाराद्यैरुपचारैश्च परिचर्या भवति । स्त्रीणामिज्या तु अमन्त्रकैः केवलोपचाररूपैरित्यर्थः ॥ ५२ ॥

(१) नाप्युपोषितमिति पाठान्तरम् मनु ५ अ० १५५ श्लो० ।

यद्वा परमसंस्काराः प्राप्या गुणसमानतः ।
सर्वत्र हरिरेवार्च्यो नाग्निकर्मेति केचन ॥ ५३ ॥

एवं पुंसां समं त्रिकालाग्निकर्म पूर्वोक्तास्तापादिसंस्काराः स्त्रीणां तूष्णीं प्राया इत्युक्ता इदानीं सर्वेषामपि सर्वेष्वपि संस्कारेषु भगवदर्चनमेव पूर्वं कर्त्तव्यं न होमादिकामिति केषाञ्चित् पक्षमाह—यद्वेति । परमसंस्काराः तापादयः सर्वत्र सर्वेष्वपि संस्कारेषु ॥ ५३ ॥

परमैकान्तिनां नित्या या वृत्तिर्विहिता गुरौ ।
तदभावे तु तत्पुत्रे गुर्वर्चा दैवतेषु सा ॥ ५४ ॥

परमैकान्तिनामिति । परमैकान्तिनां आचार्य्यविषये या वृत्तिर्विहिता सा वृत्तिस्तदभावे गुर्वभावे तु तत्पुत्रगुर्वर्चादैवतेषु विहिता आचार्ये विहितावृत्तिराचार्य्याभावे आचार्य्यपुत्रे आचार्यस्याचार्य्ये आचार्याराध्यभगवद्विग्रहे वा कर्त्तव्येत्यर्थः।५४।

सर्वेषां याग एवायं सामान्यो मुनिभिः स्मृतः।
अभ्येत्यप्रणिपत्याग्रे देवायात्मनिवेदनम् ॥ ५५ ॥

सर्वेषामिति । अभ्येत्य आभिमुख्येनागत्य भगवतः पुरस्तात्प्रणम्य देवाय भगवतो आत्मनिवेदनम् आत्मसमर्पणमितियत् अयं सर्वेषां वर्णानां सामान्यः साधारणो यागो यजनं यथा ॥ ५५ ॥

सर्वेषामुपचाराणामर्घ्यं परममुच्यते ।
कृतेनैकेन तेनैव सर्वमेव कृतं भवेत् ॥ ५६ ॥

सर्वेषामिति । सर्वेषामप्युपचाराणां मध्ये अर्घ्यं परमं श्रेष्ठमुच्यते । कृते समर्पिते सति । तेनार्घ्येणैकेनैव सर्वमप्युचारजातं कृतं भवेत् देशकालकरणादिवैगुण्यादशक्त्या अज्ञानेन वा

पूर्णानुष्ठानासमर्थानामपि आराधनैकदेशभूतकेवलार्घ्यदानमात्रेणापि आराधननिष्पत्तिर्भवितीत्यर्थः ॥ ५६ ॥

अर्च्योऽर्चायां हरिर्नित्यं तदभावे तु कुत्रचित् ।
पुष्पेणार्घ्येण हविषा नत्या स्तुत्यापि वा परम् ॥५७॥

अर्च्य इति । हरिरर्चायामेव नित्यमर्च्यः । तदभावे अर्चाबिम्बाभावे कुत्रचिदग्निसूर्याम्बुगगनादिष्वर्च्यः । केन प्रकारेणेत्यत आह पुष्पेणेति । परमिति पदं केवलार्थकं पुष्पेणेत्यादिना तृतीयान्तेन सर्वेणाप्यन्वेति पुष्पादिहविःस्तुतिनत्यादिष्वेकमेव तदाराधनमित्यर्थः । अनेन भगवतः स्वाराध्यतोक्ता ॥ ५७ ॥

शालग्रामशिलायांतु पूजनं स्नापनादपि ।
सा हि दिव्या हरेर्मूर्त्तिर्दर्शनादेव सिद्धिकृत् ॥ ५८ ॥

शालग्रामेति । शालग्रामशिलायां स्नापनादिकं पूजनं स्नानप्रदानमाराधनमित्यर्थः । अन्यत्सुगमम् ॥ ५८ ॥

प्राप्त्याभिगमनं दृष्ट्योपादानं नमसार्चनम् ।
स्वाध्यायः कीर्तनाद्योगः स्वार्पणादपि केवलम् ॥५९॥

पूर्णाभिगमनाद्यनुष्ठानासमर्थं प्रत्याह—प्राप्त्येति । प्राप्त्या भगवत्सन्निधिप्राप्त्या वापि केवलम् अभिगमनं कृतं भवतीति शेषः । दृष्ट्या ज्ञानेन वापि केवलमुपादानं कृतं भवति । आराधनार्थपदार्थसंग्रहरूपत्वादुपादानस्य आत्मगुणानामप्याराधनौपयिकत्वात्तेषु ज्ञानस्य प्राधान्यादिति भावः । नमसा नमस्कारेण वापि केवलम् अर्चनमिज्या कृता भवति । कीर्तनाद्भगवन्नामकीर्त्तनादपि वा केवलं स्वाधायः कृतो भवति । स्वार्पणादात्मसमर्पणादपि केवलं योगः कृतो भवति 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' । इत्युक्तं भगवद्धर्ममाहात्म्यमनुसन्धेयम् ॥ ५९ ॥

एवं विद्वानेकदापि कुर्वन्सन्पाञ्चकालिकः।
कृतम्भवति वा सर्वमिज्ययैव हि केवलम् ॥ ६० ॥

एवमिति। एवमुक्तप्रकारेण एकदा एकस्मिन्काले दिवसे वापि पञ्चकाले सर्वेषां वर्णानां सामान्यः पाञ्चकालिको भवति अपाञ्चकालिकप्रयुक्तास्पृश्यत्वादिरहितो भवतीत्यर्थः। पूजयैव केवलं केवलभगवदिज्ययैव वा सर्वमभिगमनादिकं कृतं भवति। इज्यायामेवाभिगमनस्य प्रथमाङ्गतयानुप्रविष्टत्वात् भूतशुद्धयादिना आराधनोपयुक्तशरीरादिसम्पादनेन उपादानस्याप्यनुप्रविष्टत्वात्। मन्त्रानुसन्धानरूपेण स्वाध्यायस्याप्यनुप्रविष्टत्वात् तमेव भगवन्तं सर्वेश्वरमात्मनः स्वामित्वेनानुसन्धायात्यर्थप्रियविशदतमप्रत्यक्षरूपानुध्यानेन ध्यायन्नासीतेति नित्योक्तप्रक्रियया योगस्यापि प्रविष्टत्वाच्चेति भावः। एकदापि कुर्वन्नित्यस्यैवं वार्थः। तत्तत्कालविभागेनाभिगमनाद्यनुष्ठानाशक्यत्वावस्थायां पञ्चसु कालेष्वेकस्मिन्नेव काले अभिगमनादिपञ्चकं कुर्वन्नपि पाञ्चकालिको भवति ॥ ६० ॥

स्वाध्यायेनापि विदुषा सर्वं योगेन वा कृतम्।
पूजनेन गुरोर्वापि सताञ्चापि निषेवणात् ॥ ६१ ॥

स्वाध्यायेनापीति। विदुषा इत्यस्यायं भावः। सकलेतरप्रतिनिधितया सङ्कल्पेतरप्रतिनिधिस्वाध्याययोगगुरुपूजनसत्सेवास्वन्यतरानुष्ठानेनापि अभिगमनादिकं सर्वमनुष्ठितकल्पं भवति ॥ ६१ ॥

विशुद्धं वैष्णवं बिम्बं गृहीत्वा न्यासतत्त्ववित्।
सलिले देवमावाह्याभिषिञ्चेत्स्थापनं हि तत् ॥ ६२ ॥

गुरुकल्पाशक्तानां स्थापने लघुकल्पमाह—विशुद्धमिति। न्यासतत्त्वविदाचार्यः सलिले देवं नारायणमावाह्य तेन सलि-

लेन अभिषिञ्चेदिति यत्तत्स्थापनमित्यन्वयः । विशुद्धमित्यनेन द्रव्यशुद्धिरुच्यते । यद्वा, अम्लादिना पञ्चगव्यस्थापनादिना आधेया शुद्धिरुच्यते । न्यासतत्त्वविदित्यनेन बिम्बे योगोपनिषदादिन्यासः मन्त्रन्यासश्चाभिप्रेतः ॥ ६२ ॥

महाभागवतो मन्त्रैः शुद्धैर्यदभिषिंचति ।
बिम्बं सर्वापचाराणां प्रायश्चित्तमिदं परम् ॥ ६३ ॥

संप्रोक्षणे लघुकल्पमाह—महाभागवत इति । महाभागवतः शुद्धैरव्यामिश्रैर्मन्त्रैः विम्बमभिषिञ्चतीति यत्सर्वापचाराणामिदं परं प्रायश्चित्तं सर्वेषु संप्रोक्षणनिमित्तेष्विदं श्रेष्ठं प्रायश्चित्तमित्यर्थः ॥ ६३ ॥

न परैः सङ्करं कुर्यात्पात्राणां यज्ञकर्मणि ।
कांस्यानां भोजने पाके मृन्मयानां विशेषतः ॥ ६४ ॥

नेति । यज्ञकर्मणि भगवदाराधने भोजने पाके च विनियुक्तानां कांस्यानां विशेषतो मृन्मयानाञ्च पात्राणां परैरन्यत्र विनियुक्तैः पात्रैः सह सङ्करं न कुर्यात् ॥ ६४ ॥

शुद्धव्यामिश्रपात्राणां न कुर्याच्च परस्परम् ।
व्यामिश्रे शुद्धशेषं स्यात्तच्छेषं न शुचौ क्वचित् ॥६५॥

शुद्धेति । शुद्धक्रियाविनियुक्तानि पात्राणि शुद्धपात्राणि व्यामिश्रक्रियाविनियुक्तानि पात्राणि व्यामिश्रपात्राणि तेषां परस्परं सङ्करं न कुर्यात् । व्यामिश्रे व्यामिश्रक्रियाविनियुक्तपात्रे शुद्धशेषं स्यात् प्रक्षेप्यमिति शेषः । तच्छेषं व्यामिश्रशेषं शुचौ शुद्धक्रियाविनियुक्तपात्रे क्वचिदपि प्रक्षेप्यं न स्यात् । शुद्धशेषं शुद्धक्रियाशेषभूतं पात्रं व्यामिश्रं व्यामिश्रकर्मणि विनियोक्तव्यं स्यात्तच्छेषं व्यामिश्रक्रियाशेषभूतं पात्रं शुचौ शुद्धकर्मणि क्वचिदपि न विनियोक्तव्यं स्यादित्यर्थः ॥ ६५ ॥

सतां पादोदकं पात्रे काञ्चने मृन्मयेऽपि वा।
पावनं धारयेन्नित्यं प्रच्युताद्यैरदूषितम् ॥ ६६ ॥

सतामिति। प्रच्युताद्यैर्यद्दूषितं प्रच्युतादीन्वक्ष्यति। तैरदूषितम् अस्पृष्टं प्रच्युतादि पादोदकामिश्रितमिति वार्थः॥६६॥

सन्तोनुपनतारब्धविलयात्यन्तनिर्मलः।
अशुद्धैरतथाभावान्नाश्लिष्येयुः कथञ्चन ॥ ६७ ॥

न केवलं शुद्धपात्राणामेव तदन्यैः सङ्करः परिहर्त्तव्यः अपि तु सतामसद्भिः सङ्करः परिहर्त्तव्य इत्याह—सन्त इति। अनुपनतस्य सञ्चितस्य प्रारब्धस्य च विलयेन अत्यन्तनिर्मलाः। प्रारब्धविलयोऽप्यत्र अनभ्युपगतप्रारब्धप्रतियोगिको मन्तव्यः अन्यथा देहिनः सहवर्त्तमानानां यावत्प्रारब्धविलयायोगात्। अनुपनतारब्धविलयात्यन्तनिर्मलाः सन्तोऽपि अशुद्धैर्नाश्लिष्येयुः। कुतः? अतथाभावात् अशुद्धानां तथाभूतत्वादनुपनतारब्धविलयात्यन्तनिर्मलत्वाभावादित्यर्थः। कथञ्चनेत्यनेन नवधा सङ्करोऽपि परिहर्त्तव्य इत्युच्यते चेदित्युक्तं 'नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सहेति'। अनुपनतारब्धेत्यत्र अनुपनतशब्दश्च गोबलीवर्दन्यायात्प्रारब्धेतरपूर्वपापपरः प्रामादिकोत्तराद्यपरो वा ॥ ६७ ॥

कृत्वा मन्त्रान्वयं तत्र विवाहं परिवर्जयेत्।
वैवाहिकोऽन्वयः पूर्वो न तु मन्त्रं निवारयेत् ॥ ६८ ॥

कृत्वेति। मन्त्रान्वयं कृत्वा आचार्यात् मन्त्रं गृहीत्वेत्यर्थः। तत्र आचार्य्यगृहे विवाहं परिवर्जयेत्। तत्कन्याप्रतिग्रहादि वर्जयेदित्यर्थः। पूर्वमन्त्रं प्रतिग्रहात्पूर्वो वैवाहिकः सम्बन्धस्तु मन्त्रं न निवारयेत्। मन्त्रसम्बन्धानन्तरं विवाहो न कर्त्तव्यः विवाहानान्तरं तु मन्त्रे सम्बन्धो न निषिद्ध इत्यर्थः ॥ ६८ ॥

न्यासस्य सर्वयोगस्य शुद्धस्यात्यन्तिकस्य च ।
अन्यादृशस्य च विधेर्नानुबन्धं परे विदुः ॥ ६९ ॥

मतान्तरमाह-न्यासस्येति । सर्वयोग्यस्य सर्वाधिकारिकस्य शुद्धयोगस्य व्यामिश्रस्य अनात्यन्तिकस्य चेत्यर्थः । विधेर्वैवाहिकविधेश्च परे केचिन्मुनयः अनुसम्बन्धं न विदुः । विवाहानन्तरमपि न मन्त्रपरिग्रहः कर्त्तव्य इति परेषां मतम् । अन्ये तु पुनरप्यस्य श्लोकस्य परमर्थं वर्णयन्ति न्यास वैवाहिकयोः परस्परनिरपेक्षत्वेन प्रतिबन्ध्यप्रतिबन्धकाभावरूपाद्यनुबन्धो नास्ति इति मन्त्रपरिग्रहानन्तरमपि विवाहो न निषिद्ध इति परेषामिति अत्र यत्प्रमाणाविरुद्धं तद्ग्राह्यम्॥६९॥

प्राप्तुं लक्ष्मीपतेर्दास्यं शाश्वतं परमात्मनः ।
तमेव शरणं प्राप्य गच्छेदात्मविदं गुरुम् ॥ ७० ॥

प्राप्तुमिति । परमात्मनो लक्ष्मीपतेः शाश्वतं नियतं दास्यं कैङ्कर्यं प्राप्तुं लब्धुं तमेव लक्ष्मीपतिमेव शरणं प्राप्तुमिच्छुः आत्मविदम् आत्मज्ञं गुरुं गच्छेत् अभिगच्छेत् 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति' श्रुतिरत्रानुसन्धेया ॥ ७० ॥

संवत्सरमुपासीत तमेव सुसमाहितः ।
वर्षवातातपादीनां सोढा युक्तोऽस्य कर्मसु ॥ ७१ ॥

संवत्सरमिति । संवत्सरमित्यत्यन्तसंयोगे द्वितीया । अस्य गुरोः कर्मसु कैङ्कर्येषु युक्तो निरतः ॥ ७१ ॥

गुरुरस्य परं स्थैर्यं शौचमास्तिक्यमार्जवम् ।
ज्ञात्वा चान्यगुणान्सम्यक्संस्कारैर्योजयेत्ततः ॥ ७२ ॥

तस्मै स विद्वानुपसन्नाय सम्यक्शान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति श्रुत्यर्थमाह । गुरुरिति । स्थैर्यमापत्स्वप्यविकलचित्तत्वम् । शौचं बाह्याभ्यन्तरशुद्धिः । आस्तिक्यं वेदोक्तेष्वर्थेषु दृढप्रत्ययशालित्वम् । आर्जवं वाङ्मनःकायानामैकरूप्यम् अन्यान् गुणान् 'अमानित्वमदम्भित्व' मित्यादिना गीतोक्तान् गुणाँश्च सम्यक् ज्ञात्वा ततस्तापादिभिः संस्कारैर्योजयेत् ॥ ७२ ॥

अथ कञ्चिदनुग्राह्यमबुद्धं स्वयमेव वा ।
परिगृह्य परं प्राज्ञः प्रापयेच्छरणं हरिम् ॥ ७३ ॥

एवं प्रपन्नं शिष्यं तापादिसंस्कारैर्योजयेत्; इत्युक्त्वा अवश्यानुग्राह्यं कञ्चित् उपसत्तिं कर्तुमजानन्तं कृपयाचार्य्यः स्वयमेव परिगृह्य भगवन्तं शरणं प्रापयेदित्याह—अथ कञ्चिदिति । अबुद्धम् अज्ञमुपसत्तिं कर्तुमजानन्तमित्यर्थः । परिगृह्य कृपया दृष्ट्या परमत्यर्थं परिगृह्येत्यर्थः ॥ ७३ ॥

क्रमाच्च बुद्ध्यमानन्तं बोधनीयानि बोधयेत् ।
कारयेत्करणीयानि प्रापयेत्परमां स्थितिम् ॥ ७४ ॥

क्रमादिति । क्रमात्कालक्रमेण बुद्ध्यमानं जानन्तं पूर्वोक्तं शिष्यं बोधनीयान्याज्ञापनीयानि बोधयेत् । करणीयानि कर्त्तव्यानि कारयेत् । परमाम् उत्कृष्टां स्थितिमवस्थां प्रापयेत् । परिग्रहदशायामबुद्धमपि शिष्यं परिगृह्य भगवन्तं शरणं प्रापयेत् । अनन्तरं क्रमेण शिष्यबुद्ध्युन्मेषानुसारेण अर्थपञ्चकविषयकं ज्ञानमुत्पाद्य वृत्तिमप्युपदिश्य अविकलतदनुष्ठापनेन तं परमैकान्तिनामग्रेसरं कुर्यादिति निर्गलितार्थः ॥ ७४ ॥

आजिह्मा सात्त्विकी बुद्धिर्येषां शास्त्रावगाहिनी ।
तेषां नारायणे भक्तिर्भवत्यव्यभिचारिणी ॥ ७५ ॥

अवश्यानुग्राह्यत्वेऽपि भगवद्भक्त्युपयुक्तयथार्हज्ञानार्हत्वात्सात्त्विकमेव परिगृह्णीयादिति आशयेनाह–अजिह्मेति । अजिह्मा अवक्रा यथार्थेत्यर्थः । सात्त्विकी सत्त्वगुणजन्या शास्त्रावगाहिनी शास्त्रार्थग्राहिणी अव्यभिचारणी देवतान्तराराध्याविषयतया बुद्धिः सत्त्वमूलतया शास्त्रतः सर्वस्मात्परं नारायणमवगम्य तत्रैवाव्यभिचारणीं भक्तिं करोतीत्यर्थः । नारायण इत्यनेन गतिसामान्यनयेन सदात्मादिशब्दानां नारायणे पर्य्यवसानं सूच्यते ॥ ७५ ॥

येषां शास्त्रेषु गाढापि राजसी कुटिला मतिः ।
तेषां न जायते भक्तिर्हरौ जातापि च स्खलेत् ॥ ७६ ॥

येषामिति । येषां प्रतिशास्त्रेषु गाढा शास्त्रार्थविषयिण्यपि राजसी रजोमूला अत एव कुटिला अन्यबुद्धिरूपा तेषां हरौ भक्तिर्न जायते । जातापि उत्पन्नापि स्खलेदेव । च त्वेवकारार्थः । रजोमूलाया बुद्धेरन्यथा शास्त्रावगाहित्वादव्यभिचरितं भगवद्भक्तिजनकत्वं नास्तीत्यर्थः ॥ ७६ ॥

तमसाभिप्लुता येषां शास्त्रेषु क्रमते न धीः ।
न ते स्वात्मानमीशं वा बुध्यंते देहबुद्धयः ॥ ७७ ॥

तमसेति । तमसाभिप्लुता येषां धीः शास्त्रेषु न क्रमते न चरति तेन स्वात्मानमीशं परमात्मानं वा बुद्ध्यन्ते कुतः देह बुद्धयः देहमात्रपर्य्यवसितज्ञानत्वात्तदतिरिक्तं स्वात्मानं तदीशितारं भगवन्तं च न जानन्तीत्यर्थः ॥ ७७ ॥

लोभाद्वा यदि वा मोहाच्छिष्यं शास्ति न यो गुरुः ।
नास्मात्संशृणुते यश्च प्रच्युतौ तावुभावपि ॥ ७८ ॥

एवं नत्वस्य यथार्थशास्त्रार्थविषयकज्ञानजनकत्वं शास्त्रार्थ विषयकान्यथाज्ञानजनकत्वं विपरीतज्ञानस्याशास्त्रस्पर्शि-

तया तमसः शास्त्रसंस्पर्शिविपरीतज्ञानजनकत्वं चोक्तम् । सात्त्विक एव शिष्यतया परिग्राह्यो नेतरोऽपीति ज्ञापनाय लोभादिना स्खालित्ये शासितृत्वाभावे आचार्य्यस्य तच्छासनलङ्घने शिष्यस्य च प्रत्यवायमाह—लोभाद्वेति । यो गुरुर्न शास्ति यः शिष्यः अस्माच्छासितुराचार्य्यात् न शृणोति तावुभावाचार्य्यशिष्यौ प्रच्युतौ ॥ ७८ ॥

अपरीक्ष्य चिरं क्षेत्रं यः परं ज्ञानमावहेत् ।
प्रमाद्यतः सुगोप्तव्ये परमार्थोऽस्य हीयते ॥ ७९ ॥

अपरीक्ष्य मन्त्रप्रदानादिकं न कर्त्तव्यमित्याह—अपरीक्ष्येति। क्षेत्रं शिष्यरूपं ज्ञानबीजाधानस्थलं चिरं बहुकालमपरीक्ष्य परं तत्त्वं हितपुरुषार्थतया उत्कृष्टज्ञानमावहेत् ज्ञानरूपबीजावापनं कुर्यादित्यर्थः । सुगोप्तव्ये अत्यन्तगोपनीये मोक्षोपायभूते ज्ञान प्रमाद्यतः परमरहस्यमनधिकारिभ्य उपदिशत इत्यर्थः । अस्य उपदेष्टुराचार्यस्य परमार्थो हीयते अयं परमप्रयोजनाच्च्युतो भवतीत्यर्थः ॥ ७९ ॥

न्यासे हि देहिनोऽपायैर्जायते प्रच्युतिः फलात् ।
वारयत्याप्रशमनात्सा हि सद्व्यवहार्य्यताम् ॥ ८० ॥

प्रपन्नस्याप्यपायान्वये अत्र कैङ्कर्य्याख्यपुरुषार्थे अनधिकारो भवतीत्याह—न्यास इति । देहिनो न्यासे कृते सत्यपि अपायैः प्राकृतसंसर्गादिभिः फलात् अत्रत्यकैङ्कर्यफलात्प्रच्युतिर्भवेत्सा प्रच्युतिः आप्रशमनात् प्रायश्चित्तादिना प्रशमनपर्यन्तं सद्व्यवहार्य्यतां वारयति प्रपन्नोऽप्यपायान्वितः भगवत्कैङ्कर्य्येष्वनधिकारी भूत्वा शिष्टबहिष्कार्यो भवतीत्यर्थः ॥ ८० ॥

यज्ज्ञानपूर्वं न्यसनं मन्त्रेण गुरुणा हरौ ।
स एव सर्वसंस्कारः प्राक्तस्मात्प्राकृता नराः ॥ ८१ ॥

प्राकृतसंस्पर्शादिकं परित्याज्यमिति वक्ष्यन्प्राकृतानां लक्षणमाह-यदिति । गुरुणा आचार्य्येण ज्ञानपूर्वकं मन्त्रार्थज्ञानपूर्वकं मन्त्रेण शरणागतिमन्त्रेण हरौ भगवति न्यसनं शिष्यस्वरूपभरसमर्पणमिति यावत् स एव सर्वसंस्कारः सर्वविधसंस्कारोपि सर्वविधः संस्कार इति वा तस्मात् संस्कारात् प्राङ्नरः प्राकृत इत्युच्यते ॥ ८१ ॥

प्राकृताद्यैः परिहृतो निवसेन्नासहायवान् ।
वसँश्चाभ्यन्तरान्प्राज्ञः संसर्गान्परिवर्जयेत् ॥ ८२ ॥

प्राकृताद्यैरिति । असहायवान् सहायरहितः प्राकृताद्यैः आदिशब्देन प्रच्युतपरिग्रहः । परिहृतः सह तैः न निवसेत् सर्वदेशकालविषयेण परिहृतः सन्नपि प्राज्ञो बुद्धिमानाभ्यन्तरान्संसर्गान् एकशय्यासनादीन् परिवर्जयेत् ॥ ८२ ॥

श्रद्धापूतमवैष्णवस्याप्यन्नाद्यं तु कदाचन ।
इज्यासु विनियुञ्जीत न श्राद्धे सति किंचन ॥ ८३ ॥

श्रद्धेति अवैष्णवस्य प्राकृतस्य श्रद्धापूतमप्यन्नाद्यं किंचन किंचिदपि अल्पमपि श्राद्धे सति अनापदि कदाचन कदाचिदपि इज्यासु न विनियुञ्जीत । अन्नाद्यमित्यत्र अपक्वमेव विवक्षितम् । 'पानीयं पक्वमन्नं च विशेषेण विवर्जयेदिति' पक्वान्नस्यापद्यपि निषेधात् । श्रद्धापूतमित्यस्यायं भावः ' श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्द्धुषेः । मीमांसित्वोभयं देवाः सममन्नमकल्पयन् । तान् प्रजापतिरित्याह माकृध्वं विषमं समम् । श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतर' दित्यादिभिः श्रद्धापूतं पवित्रमित्युच्यते। तथाभूतमप्यवैष्णवान्नं परित्याज्यमिति ॥ ८३ ॥

गुणासहास्त्यजन्त्यार्य्या न सन्ताश्चिरमंहसे ।
दोषासहास्त्यजन्त्येव सन्तश्च श्रेयसे परान् । ८४ ॥

वैष्णवावैष्णवयोः परस्परत्यागे अविशेषेण शिष्टेऽपि हेतुफल भेदोऽस्तीत्याह—गुणेति। सतां श्रेयः फलमित्यर्थः ॥ ८४ ॥

धर्मच्छद्मभृतो धर्मान् घ्नन्ति वेदपराङ्मुखाः।
वैदिकाभास्तथा वेदान्कृष्णैकान्त्यपराङ्मुखाः॥८५॥

असतां त्यागे तद्दोषदर्शनं हेतुरित्युक्त्वा तेषां दोषमेवाह—धर्मेति। वेदपराङ्मुखाः वेदबाह्याः धर्मच्छद्मभृतः चैत्यवन्दनादिधर्मकारिणः धर्मान्ज्योतिष्टोमादीन् घ्नन्ति अनेन वेदबाह्यानां दोषः उक्तः। अथ वेदेष्वेव कुदृष्टीनां दोषमाह। वैदिकाभा इति वैदिकाभा न परमार्थतो वैदिकाः कृष्णैकान्त्यपराङ्मुखाः भगवदैकान्त्यविद्वेषिणः। तथा धर्म्मच्छद्मभृतः धर्म्मानिव वेदान् घ्नन्ति इत्यर्थः ॥ ८५ ॥

य आत्मनां परो वेद्यस्तं विष्णुं वेदयन्ति यत्।
तद्वेदानां हि वेदत्वं यस्तं वेद स वेदवित्॥ ८६ ॥

सकलवेदतात्पर्य्यविषयभूतं विष्णुमविदित्वा अतथाभूतार्थमेव जानन्तो वेदाघातका एवेत्याशयेन वेदशब्दार्थमाह—य आत्मनामिति। आत्मनां चेतनानां यः परमः उत्कृष्टवेद्यो ज्ञातव्यो विष्णुः तं विष्णुं यद्यस्मात् कारणाद्वेदयन्ति इति तत्तस्मात् कारणात् वेदानां वेदत्वम् विष्णुं वेदयन्ति वेदा इति व्युत्पत्तिरुक्ता भवति। यः पुमान् तं विष्णुं वेद स पुमान्वेदवित्। अन्ये तु वेदघातका एवेति भावः ॥ ८६ ॥

दर्शयन्त इव श्रेयो विप्लुतैर्हेतुभिर्बलात्।
च्यावयन्ति श्रुतिपथाद्दूरं बाह्याः स्थिरानपि॥ ८७॥

बाह्याः कुदृष्टयश्च क्रमेण वेदविश्वासविरोधित्वात् भगवत्कैङ्कर्यरुचिविघातकत्वाच्च परित्याज्य इत्याशयवानाह—दर्शयन्त इति स्थिरानपि श्रुतिपथाद्दूरं च्यावयन्तीत्यन्वयः ॥ ८७ ॥

वैदिका इव चाप्यन्ये दर्शयन्तोऽन्यथा श्रुतेः ।
अर्थमच्युतकैङ्कर्य्याच्च्यावयन्ति कुदृष्टयः ॥ ८८ ॥

वैदिका इति श्रुतेः अन्यथा अर्थं दर्शयन्तीत्यन्वयः ॥ ८८॥

तस्मात्कुदृष्टिभिर्बाह्यैरप्रकम्प्यो गतव्यथः ।
ऐकान्त्यममलं विष्णोरातिष्ठेत्परमं सुधीः ॥ ८९ ॥

तस्मादिति । अप्रकम्प्यः स्वधर्म्माच्चालयितुमशक्यः । परमं सर्वोत्कृष्टं विष्णोरैकान्त्यमातिष्ठेत् ॥ ८९ ॥

नास्तिकः संशयी मूढ इत्यदूरतरा नराः ।
विज्ञाय लक्षणैस्तांस्तु सम्यग्व्यवसितस्त्यजेत् ॥९० ॥

नास्तिक इति । अदूरतराः सन्निकृष्टाः नास्तिकसंशयिमूढानामति भेदो नास्तीत्यर्थः । सम्यग्व्यवसितः समीचीनव्यवसायवान् ॥ ९० ॥

मत्प्रत्यक्षन्तदेवास्ति नास्त्यन्यदिति निश्चिताः ।
अर्थकामपराः पापा नास्तिका देहकिङ्कराः ॥ ९१ ॥

नास्तिकानाह-मदिति निश्चिताः निश्चयवन्तः देहकिङ्कराः देहपोषणमात्रनिरता इत्यर्थः ॥ ९१ ॥

नानाविधेषु ज्ञानेषु नराः संशयिनोऽधमाः ।
निश्चयं नाधिगच्छन्ति लिङ्गमात्रधराः क्वचित् ॥९२॥

संशयिन आह-ज्ञानेति ज्ञानेषु करणव्युत्पत्त्याज्ञानकरण साधनेषु वाक्येष्वित्यर्थः । क्वचिदपि विषये निश्चयन्नाधिगच्छन्ति निश्चयं न प्राप्नुवन्ति । लिङ्गमात्रधराः वेषमात्रभूषणाः ९२

देहात्मस्वर्गनरकपुण्यपापाविमर्शिनः ।
गतानुगतिका मूढा नश्यन्ति पशुबुद्धयः ॥ ९३ ॥

मूढानाह-देहेति। देहात्मेत्यादि अयं देह एतद्विलक्षण आत्मा एतादृशः अयं स्वर्ग ईदृशश्च नरकः। इदं पुण्यम् इदं पापमिति परामर्शशून्याः। गतानुगतिकाः पूर्वाचरितं दुर्वर्त्मनीमनुसंरताः॥ ९३॥

कुदृष्टयो बहुविधा वृथा वैदिकमानिनः।
तथा मिथ्यादृशो बाह्याः सर्वैरेवावृतञ्जगत्॥ ९४॥

कुदृष्टय इति। बहुविधाः निरीश्वराः, निर्द्धमाः, निर्गुणब्रह्मवादिनः, ब्रह्मविकारवादिनः, ब्रह्मण उपादानत्वमनिच्छन्त इत्यादयो बहुप्रकाराः। वृथा वैदिकमानिनः वृथैव आत्मनो वैदिकान्मन्यमानाः। तथा तद्वदुपहताः मिथ्यादृशो बाह्या वेदबाह्याश्चेत्येतैः सर्वैरेव जगदावृतम्। अतः सम्यक् परीक्ष्य तैः सङ्गं वर्जयेदिति भावः॥ ९४॥

वेदवेदाङ्गतत्त्वज्ञा नारायणपरायणाः।
धन्याः केचन तेभ्योऽपि तेषामादेशवृत्तिनः॥ ९५॥

नास्तिकादीनां बाह्यान्तानां पापिष्ठत्वं ज्ञापयितुं नारायणपरायणानां तदादेशवर्त्तिनां धन्यत्वं धन्यतमत्वञ्च दुर्लभत्वञ्चाह—वेदवेदाङ्गेति। साङ्गवेदतत्त्वज्ञानस्य फलं नारायणपरायणा इत्यनेनोच्यते। साङ्गानां वेदानां नारायणे निष्ठां ज्ञात्वैतज्ज्ञानगुणं तस्मिन्नेव परिनिष्ठिताः धन्याः केचनेत्यनेन दुर्लभत्वमुच्यते॥ ९५॥

आदिष्टाः पुण्ड्रमन्त्रार्चानामतापपराङ्मुखाः।
धूतावधूतनिर्द्धूतविधूतोद्धूतसंज्ञकाः॥ ९६॥

अथ विकलानाह—आदिष्टा इति। पुण्ड्रपराङ्मुखा धूताः। नामपराङ्मुखाः अवधूताः। अर्चापराङ्मुखा निर्धूताः। मंत्र पराङ्मुखा विधूताः तापपराङ्मुखाः उद्धूताः। आदिष्टा उक्ताः पञ्चस्वपि परमसंस्कारेष्वेकैकविकलानामेव उक्ताः संज्ञा वेदितव्याः॥ ९६॥

आदिष्टा एव चान्यार्चामन्त्रपुण्ड्राङ्कनामकाः ।
राक्षसासुरवेतालव्यालप्रेता नराधमाः ॥ ९७ ॥

परमसंस्कारविरुद्धान्वयिनां नामान्याह-आदिष्टा एवेति । अन्यार्चनपराः राक्षसाः । अन्यमन्त्रनिरताः असुराः । अन्यपुण्ड्रधरा वेतालाः । अन्याङ्कधारिणो व्यालाः । अन्यनामधारिणः प्रेताः एते सर्वे नराधमा इत्यर्थः । भूतव्रता इत्यपरः पाठः ॥ ९७ ॥

तथा स्वकर्मशास्त्रेशगुरुसत्सङ्गवर्जिताः ।
ऊना हीनाः स्रस्ता नष्टा दग्धा ज्ञेयास्समाख्यया॥९८॥
भिन्नोऽन्यनाथो भिन्नोऽन्यफलो भिन्नोऽथनिन्द्यकृत् ।
भग्नोऽन्यदेशिकादेशोऽनृतोऽन्यजनसंश्रयः ॥ ९९ ॥

तथेति । स्वकर्मविहिताचारः तद्विवर्जिता ऊनाः । शास्त्रं दृष्टिः । तद्विर्जिता हीनाः । ईशवर्जिताः स्रस्ताः । गुरुवर्जिता नष्टाः । सत्सङ्गवर्जिता दग्धाः । समाख्यया नाम्ना ज्ञेयाः । स्वकर्मविवर्जितानामनादिसंज्ञा इत्यर्थः ॥ ९८ ॥ ९९ ॥

निहीनान् प्राकृतेभ्योऽपि प्रच्युतान्परिवर्जयेत् ।
भक्तानाराधयन्विष्णोः प्राप्नोति परमम्पदम् ॥ १०० ॥

इति श्रीनारदपञ्चरात्र भारद्वाजसंहितायां परिशिष्टे
तृतीयोऽध्यायः ॥ ३ ॥

---

निहीनानिति । प्राकृतेभ्यो निहीनानपकृष्टान्प्रच्युतान्परिवर्जयेत्सवासनं त्यजेत् । प्राकृतान्प्रच्युतांस्त्यक्त्वा विष्णोर्भक्तानाराधयन् परमम्प्राप्नोति ॥ १०० ॥

इति श्रीभारद्वाजसंहितायां परिशिष्टटीकायां तृतीयोऽध्यायः ॥ ३ ॥

---

पुनरेव मुनिश्रेष्ठं पप्रच्छुस्ते महर्षयः।
कथं निक्षेपजा वृत्तिर्विस्तारोऽस्याश्च कीदृशः॥ १॥

प्रपन्नानुष्ठेयां वृत्तिं विस्तरेण प्रपंचयिष्यन् तद्विषयकमृषिप्रश्नमाह—पुनरेवेति। निक्षेपजा आत्मनिक्षेपान्तरमनुष्ठेयत्वतज्जन्यत्वोक्तिरुपचारात् कथं कीदृक्प्रकारा। अस्यावृत्तेर्विस्तारः कीदृशः कथंभूत इत्यर्थः॥ १॥

भरद्वाजो महातेजाः श्रुत्वा तेषामिदं वचः।
प्रत्युवाच परं हृष्टो भगवद्दास्यतत्ववित्॥

भरद्वाज इति परं हृष्टः अतिसंहृष्टः॥ २॥

विशुद्धज्ञानसलिलां भक्तिकल्लोलमालिनीम्।
सत्सेवनस्वादुरसां दिव्यलक्षणवारिजाम्॥ ३॥
वैराग्यतीरसुभगामाचारोपवनावृताम्।
वृत्त्यापगां निषेवध्वं विष्णुसागरगामिनीम्॥ ४॥

सकलार्तिहरतया वृत्तिं नदीत्वेन रूपयति-विशुद्धेति। विशुद्धज्ञानं दृष्टिरेव सलिलं यस्यास्ताम् सत्सेवनं सतां सेवैव स्वादुरसो यस्यास्ताम्। दिव्यलक्षणानि तापपुण्ड्रादीनि पङ्कजानि यस्यास्ताम्। वैराग्यं निषिद्धवर्जनमेव तीरं रोधः तेन सुभगां रम्याम्। आचारो विहिताचार एव उपवन्तेनावृताम्। विष्णुरेव सागरः तद्गामिनी तद्विषयावृत्तिरेवापगा नदी तां निषेवध्वं नितरां सेवध्वम्॥ ३॥ ४॥

न्यासस्तीर्थाभिगमनं सुदृष्टिर्यजनं हृदि।
स्वकर्मारण्यासनाविधिर्लक्ष्मावाहनसत्क्रिया॥ ५॥
भक्तिस्तु विविधा भोगाः सत्सेवा हविरुत्तमम्।
वैराग्ययोगनिर्विघ्ना यजध्वमनयेज्यया॥ ६॥

भगवदाराधनात्मकतया वृत्तिमिज्यात्वेन रूपयति—न्यासेति न्यासः प्रपत्तिरेव तीर्थाभिगमनन्तीर्थाभिगमनशब्देन स्नानादिहृद्यागपर्य्यन्तमङ्गमुच्यते । सुदृष्टिरेव हृद्यजनं हृद्यागाख्यमङ्गम् । स्वकर्माणि विहिताचारः आसनविधिः मन्त्रस्नानालङ्कारभोग्यपर्य्यङ्कार्पणरूपः सत्कारः । लक्ष्म चक्रादिधारणम् । आवाहनं मन्त्रयोगसमाह्वानं परपुष्पोपदर्शनम् । विविधाः नाना विधाः गन्धमाल्यादिभोगाः । सत्सेवा सतां सेवा उत्तमं श्रेष्ठतमं हविः । वैराग्यं निन्द्यवर्जनम् । एवं योगो ध्यानं तेन निर्विघ्नाः । यद्वा वैराग्ययोगेन वैराग्यसम्बन्धेन निर्विघ्नाः वैराग्यमेव योग उपायस्तेन निर्विघ्ना इति वा । अनया वृत्त्याख्यया इज्यया यजध्वम् ॥ ५ ॥ ६ ॥

भूमाविव परे पुंसि न्यस्तबीजवदात्मनि ।
विज्ञानमूलसन्तानः क्रियाचारनिबन्धनः ॥ ७ ॥
भक्तिप्रकाण्डविस्तारो वैराग्यरसपेशलः ।
नानालक्षणपुष्पाढ्यः सत्सेवनमहाफलः ॥ ८ ॥
उच्चैस्तरोऽतिविपुलः सर्वसन्तापनाशनः ।
सम्प्रवेत सदा सेव्यो हरिकैंकर्यपादपः ॥ ९ ॥

अथ परमपुरुषं भूमित्वेन तत्र न्यस्तम् आत्मानं बीजत्वेन दृष्टिं मूलसन्तानत्वेन विहिताचारं मूलबन्धनत्वेन भक्तिं स्कन्धत्वेन लक्ष्म पुष्पत्वेन सतां सेवां महाफलत्वेन एवं वृत्तिं तरुत्वेन रूपयति—भूमाविवेत्यादिभिः श्लोकैः । बीजवदात्मनि न्यस्ते सतीत्यर्थः । विज्ञानमूलसन्तानः विज्ञानं दृष्टिः मूलसन्तानः मूलपरम्परा । स्वक्रियामूलबन्धनः स्वक्रिया, विहिताचारः मूलबन्धनं नाम दाढर्यार्थं मूले मृद्दारुपाषाणादिभिर्वेद्यादिरूपेण विधीयमानो बन्धविशेषः । भक्तिप्रकाण्डविस्तारः प्रकाण्डः ।

स्कन्धः। वैराग्यरसपेशलः वैराग्यं निन्द्यवर्जनं तदेव रसः तेन पेशलः सनालः ससारः। नानालक्षणपुष्पाढ्यः लक्षणानि तापपुण्ड्रादिलक्ष्माणि तान्येव पुष्पाणि यस्य। सत्सेवनबृहत्फलः सतामाचार्यमुख्यानां सेवैव बृहत्फलं यस्य स तथोक्त उच्चैस्तरः परमपदप्रयाणपर्यन्तमनुवर्त्तनीयत्वादिति भावः। अतिविपुलः सर्वदेशानुष्ठेयत्वादिति भावः। सर्वसन्तापनाशनः इति तरुत्वानिरूपणम् ॥ ७ ॥ ८ ॥ ९ ॥

आदौ गुरूणां विज्ञानमथ तन्त्रार्थचिन्तनम्।
तत एवात्मनो ज्ञानं तद्धर्माणां च सर्वशः ॥ १० ॥
परस्य पुंसः श्रीशस्य परेशस्य परात्मनः।
स्वरूपरूपविभवगुणव्यापारचिन्तनम् ॥ ११ ॥
परिबर्हविभूषास्त्रपत्नीपरिजनात्मनाम्।
सर्वेषां चैव दिव्यानां गुणानामनुचिंतम् ॥ १२ ॥

आदावित्यादि। गुरूणां विज्ञानं तदुपसत्तिपर्यवसितमाचार्यत्वेन ज्ञानमित्यर्थः। आचार्याणामसावित्यारभ्याभगवत इति वक्ताचार्यपरम्परा ज्ञानादीनां परसम्प्रतिपन्ना परमपुरुषस्य परस्य ब्रह्मरुद्रादिनायकस्य परात्मनः सर्वान्तरात्मनः स्वरूपं दिव्यं तत्त्वरूपम्। रूपं विग्रहः। विभवो विभूतिर्गुणा ज्ञानादयः। आत्मगुणाः सौंदर्यादयः विग्रहगुणाश्च व्यापारा हिरण्यकशिपुरावणशिशुपालादिनिबर्हणादयः। दिव्यानां नित्यानां ये गुणास्तेषामनुचिन्तनमित्यन्वयार्थः॥१०॥११॥१२॥

विमानमण्डपोद्यानवापीकूपादिशालिनः।
नानाश्चर्यमयानन्तदिव्यप्रासादमालिनः ॥ १३ ॥

साप्सरो भूरिसङ्घस्य सदिव्यमृगपक्षिणः ।
पुरस्य दिवि लोकानां लोकस्य परिचिन्तनम् ॥ १४ ॥
तथा भगवतो व्यूहविभवार्चाव्यवस्थितेः ।
अन्तःस्थितेश्च जगतां सृष्ट्यादेश्च विचिन्तनम् ॥१५॥

विमानेत्यादि । विमानेत्यादिपुरविशेषणानि । वचनव्यत्ययेन तदव्यत्ययेन च दिव्यदेशदिव्यकालयोरपि विशेषणानि वा । देशा दिव्यजनपदाः । व्यूहा वासुदेवादयः । विभवा रामकृष्णादयः । अर्चाः श्रीवैकुण्ठनाथादयः । अन्तःस्थितेरन्तर्यामित्वस्य । सृष्ट्यादेरित्यत्रादिशब्दस्य स्थितिप्रलयावर्थः ॥ १३ ॥ १४ ॥ १५ ॥

प्रधानमहदादीनां तत्त्वानामवबोधनम् ।
अण्डानां कालतत्त्वानां लोकानां भूतसंहतेः ॥ १६ ॥

प्रधानमिति । महदादीनामित्यत्रादिशब्देन इन्द्रियपञ्चतन्मात्राणां ग्रहणम् । भूतसंहतेः पञ्चमहाभूतानामित्यर्थः । जन्तुजालस्येति वार्थः । कार्यवर्गस्येतिवार्थः ॥ १६ ॥

परसम्बन्धविज्ञानं प्रकृतेः पुरुषस्य च ।
कर्मयोगस्य विज्ञानं धर्माणां चाप्यशेषतः ॥ १७ ॥
ज्ञानयोगस्य विज्ञानं भक्तियोगस्य चाखिलम् ।
तथैव न्यासयोगस्य साङ्गस्य परिचिन्तनम् ॥ १८ ॥

परेति । प्रकृतेः प्रधानस्य पुरुषस्य जीवस्य च परसम्बन्धविज्ञानं भगवच्छरीरस्वरूपसम्बन्धस्मृतिविशेषणज्ञानमित्यर्थः ॥ १७ ॥ १८ ॥

इहैव फलरूपाया वृत्तेः सम्यक् प्रदर्शनम् ।
देहान्निष्क्रमणस्यापि मार्गस्य च विचिन्तनम् ॥ १९ ॥

इहेति । देहनिष्क्रमणस्य उत्क्रान्तेर्मार्गस्य अर्चिरादिमार्गस्य ॥ १९ ॥

दिव्यलोकस्य संप्राप्त्या भर्तुरालोकनार्चया ।
निरस्तातिशया प्रीतिः सदा तस्याश्च भावना ॥ २० ॥

दिव्येति । दिव्यमार्गस्य परमपदस्य सम्प्राप्त्या भर्तुः परमपदसाधनस्य आलोकनाच्च या निरस्तातिशया प्रीतिः तस्याश्च भावना बोधना चिन्तनमित्यन्वयः ॥ २० ॥

भगवच्चरणाम्भोजानुभवप्रीतिजन्मनः ।
कैङ्कर्यस्य परा काष्ठा या तस्याश्च विचिन्तनम् ॥२१॥

भगवदिति । पराकाष्ठा भागवतपर्यन्तकैङ्कर्यम् ॥ २१ ॥

अनादेर्मोहकलनात्संसारावृत्तिहेतवः ।
प्रभवन्त्यात्मनां कर्मवासनारुचयो यथा ॥ २२ ॥

अनादेरिति । अनादेर्मायाकलनात् । अनाद्यविद्यासम्बन्धात्संसारावृत्तिहेतवः संसारचक्रपरिवृत्तिहेतवः । कर्माणि वासनारुचयश्च आत्मनां यथा येन प्रकारेण प्रभवन्ति तथ' मतिरित्युत्तरेणान्वयः ॥ २२ ॥

यथा रागादयो दोषा नित्यं चात्मगुणच्छिदः ।
कारणान्यपचारेषु क्षिपन्ति च तथा मतिः ॥ २३ ॥

यथेति । आत्मगुणच्छिदः अहिंसाद्यात्मगुणविरोधिनः कारणानि पुण्यपापकर्मद्वारा संसारबीजानि रागादयो दोषाः अपचारेषु यथा क्षिपन्ति येन प्रकारेण पातयन्ति तथा मतिः तत्प्रकारस्य चिन्तनमित्यर्थः ॥ २३ ॥

विमर्श इह दुःखानां यातनानां परत्र च ।
विषयाणां च हेयत्वदर्शनं वृष्टिरुच्यते ॥ २४ ॥

विमर्श इति । इहास्मिँल्लोके दुःखानां परत्र लोके यातनानां विमर्शः चिन्तनम् ॥ २४ ॥

सैषा सुदृष्टिर्वृत्त्याख्यतरोर्मूलमुदाहृता ।
अतोऽन्यथा कुदृष्टिर्हि तस्य सा मूलघातिनी ॥ २५ ॥

सैषेति । तस्य वृत्त्याख्यतरोः ॥ २५ ॥

प्रथमासनसंस्कारो निषेको विधिपूर्वकः
संस्कारास्त्वाव्रतादेशात्तत्र भोगक्रमा हरेः ॥ २६ ॥

अथ स्वाक्रियामूलबन्धन, इति वृत्त्याख्यतरुमूलबन्धनत्वेन निरूपयितुं विहिताचारं भगवदिज्यात्वेन रूपयन् विशदयति नवभिश्लोकैः–प्रथमेति । विधिपूर्वको निषेकः यथाशास्त्रमनुष्ठितो गृहाश्रमः प्रथमासनं संस्कार इत्यर्थः । आव्रतादेशात्संस्कारा उपनयनपर्यन्तसंस्काराः पुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलरूपाः । तत्र प्रथममासने हरेर्भोगक्रमा उपचारक्रमा इत्यर्थः ॥ २६ ॥

द्वितीयमासनं विष्णोरस्योपनयनक्रिया ।
स्नानान्तास्तत्र संस्कारा बोद्धव्या भोगसम्पदः ॥ २७॥

एवं निषेकं प्रथमासनत्वेन उपनयनपर्य्यंतसंस्कारान् तदासनकर्त्तव्योपचारत्वेन च रूपयित्वा उपनयनं द्वितीयासनत्वेन समावर्त्तनपर्य्यन्तान् संस्कारान् तत्रत्योपचारत्वेन रूपयति द्वितीयमिति । अस्य उपनयनक्रिया विष्णोः तद् द्वितीयासनं ज्ञानासनमित्यर्थः ॥ २७ ॥

वैवाहिको विधिर्धर्मो यस्तृतीयं तदासनम् ।
गृहस्थधर्मा ये तत्र ते प्रसाधनविग्रहाः ॥ २८॥

अथ विवाहमलङ्कारासनत्वेन गृहस्थधर्मास्तत्रत्योपचारत्वेन च रूपयति–वैवाहिक इति। तृतीयमासनमलङ्कारासनमित्यर्थः। प्रसाधनविग्रहा उपचाररूपा इत्यर्थः ॥ २८ ॥

योगक्षेमविधिर्नित्यस्तच्चतुर्थमिहासनम्।
ततः परेऽखिला यज्ञा हविषां विनिवेदनम् ॥ २९ ॥
वनस्थाश्रमसम्प्राप्तिर्हरेः पञ्चममासनम्।
नियमा ये च तत्र स्युस्ते वै भोगास्तदाश्रयाः ॥ ३० ॥

अथार्थार्जनं भोज्यासनत्त्वेन अग्निष्टोमादियज्ञान् हविषां सम्पर्णत्त्वेन च तदाश्रमनियमान् तदासनकर्त्तव्योपचारत्त्वेन च रूपयति–योगेति। वनस्थेति पञ्चममासनं पुनर्मन्त्रासनमित्यर्थः। तत्र वनस्थाश्रमे ये नियमाः स्मृतास्ते नियमास्तदाश्रयाः पञ्चमासनकर्त्तव्या भोगा उपचारा इत्यर्थः ॥ २९ ॥ ३० ॥

यत्प्रव्रजन्ति तत्षष्ठमासनं परमात्मनः।
योगाख्यमतुलं शुद्धं तद्धर्मास्तत्र सत्क्रियाः ॥ ३१ ॥

अथ चतुर्थाश्रमपर्यन्तं षष्ठासनत्वेन तदाश्रमप्रतिनियतधर्मास्तदासनकर्त्तव्यत्वोपचारेण च रूपयति–यदिति। यत्प्रव्रजन्ति संन्यस्यन्तीति यत् तत्संन्यसनं परमात्मनो नारायणस्य योगाख्यं योगापरनामधेयं षष्ठमासनम्, तद्धर्माः संन्यासधर्माः। तत्र योगासने कर्त्तव्याः सत्क्रिया उपचारा इत्यर्थः। ॥ ३१ ॥

सतासुत्क्रमणादेश्च कर्त्तव्या विधयः परे।
उद्वासनोपचारा वै भवन्ति दिवि शार्ङ्गिणः ॥ ३२ ॥
अग्नौ तु परमे व्योम्नि ध्यायेतां नित्यमच्युतम्।
वैश्यत्वे चार्णवगतं शूद्रत्वे च भुवि स्थितम् ॥ ३३ ॥

सतामिति । उत्क्रमणादिविहिताः कर्तव्याः परे उपरितना विधयः शार्ङ्गिण उद्वासनोपचारा भवन्ति ॥ ३२ ॥ ३३ ॥

इत्थं वर्णाश्रमादीनां नित्यनैमित्तिकादिकम् ।
विहितं कर्म सकलं विष्णोराराधनं परम् ॥ ३४ ॥

इत्थमिति । वर्णाश्रमादीनामित्यत्रादिशब्देन अबद्धो गृह्यते ॥ ३४ ॥

निबोधत महाप्राज्ञास्तदेतदखिलं पुनः ।
वृत्त्याख्यस्य तरोरेव सुदृढं मूलबन्धनम् ॥ ३५ ॥

निबोधतेति । 'निबोधत महाप्राज्ञा' इत्यनेन निर्णयोपयुक्ता प्रश्नोक्ता ॥ ३५ ॥

त्यागेन कर्मणां स्वस्य निषिद्धकरणेन च ।
आज्ञातिक्रमणं यत्तन्मूलबन्धोपघातकम् ॥ ३६ ॥

विहिताचारान्मनोवृत्त्याख्यतरुमूलबन्धनस्य अकृत्यकरणकृत्याकरणाभ्यां भगवदाज्ञाविलङ्घनं मूलबन्धोपघातकमित्याह—त्यागेनेति स्वस्य कर्मणां स्ववर्णाश्रमविहितकर्मणामित्यर्थः ॥ ३६ ॥

विहितैवमुपावृत्तिर्विशुद्धपरिवारके ।
विशुद्धे ब्रह्मणि परे प्रीत्या सा भक्तिरुच्यते ॥ ३७ ॥

अथ भक्तिकाण्डं विस्तारयति । वृत्त्याख्यतरुस्कन्धत्वेन रूपितां भक्तिं प्रपञ्चयति दशश्लोक्या—विहितैवेति । विशुद्धपरिवारके अशुद्धपरिवाररहिते विशुद्धे देवतान्तर्यामिभावमन्तरेण स्वस्वरूपेणावस्थिते परे ब्रह्मणि या वृत्तिराराधनात्मिका विहिता विधिना बोधिता सैव प्रीत्या कृता भक्तिरु

च्यत इत्यर्थः। विहितेत्यनेन प्रीतिमूलाया अप्यशास्त्रीयवृत्तेर्भक्तित्वव्युदासः। विशुद्धपरिवारक इत्यनेनाशुद्धपरिवारकविषयिकाया वृत्तेः, विशुद्ध इति देवतान्तर्य्यामिविषयिकाया वृत्तेः प्रीत्यतिशयेन कृतायाश्च भक्तित्वं व्युदस्तमिति वेदितव्यम् ३७॥

श्रुतिस्मृतीतिहासाद्यैर्दिव्यार्षागमविस्तरैः।
ब्रह्मसूत्रपदैर्मन्त्रैः सन्निबन्धैः सुयुक्तिभिः॥ ३८॥

श्रुतीति। इतिहासाद्यैरित्यत्राद्यशब्दः पुराणपरः। दिव्यार्षागमविस्तरैः दिव्यागमविस्तरैरार्षागमविस्तरैश्चेत्यर्थः। साक्षाद्भगवन्मुखोद्गततया रत्नत्रयमिति प्रसिद्धा संहिता लक्ष्मीतन्त्राद्यश्च दिव्यागमविस्तरा आर्षागमविस्तरा ऋषिमुखात्प्रवर्तिता अपि संहिताः। ब्रह्मसूत्रपदैः अथातो ब्रह्मजिज्ञासेत्यारभ्यानावृत्तिः शब्दादित्यन्तैः तत्तन्मन्त्रकल्पैः सन्निबन्धैः साद्भिः प्रणीतैः निबन्धैः न्यायतत्त्वप्रभृतिभिः सतर्कसुयुक्तिभिः बलैः साधनैः॥ ३८॥

नाथस्य रूपविभवस्वरूपगुणकर्मणाम्।
कीर्त्तनं ख्यापनं चिन्ता भृशं व्यक्तिषु चादरः॥ ३९॥

नाथस्येति। नाथस्य शेषिणो भगवतः रूपविभवस्वरूपगुणकर्मणां विग्रहविभूतिस्वरूपगुणचेष्टानां चिन्ताविमर्शनमित्यन्वयः। कीर्त्तनमुच्चारणं ख्यापनं परस्मै प्रतिपादनं व्यक्तिषु अर्चावतारेषु॥ ३९॥

स्तुतिर्नतिः परिक्रामः प्रीतिरात्मनिवेदनम्।
उपहाराच्छेषरतिः समीपपरिवर्त्तनम्॥ ४०॥

स्तुतिरिति। स्तुतिः स्तोत्रम्। नतिः साष्टाङ्गादिरूपः प्रणामः। परिक्रमः प्रदक्षिणम्। प्रीतिः स्तुत्यादिजनितः सन्तोषः।

प्रेम्णा आत्मनिवेदनमात्मसमर्पणम् । उपहारः नैवेद्यसमर्पणम् शेष इति भगवद्भक्तोत्तारितान्नादिषु रतिः । समीपपरिवर्तनम् अर्चावतारं विहाय गन्तुमशक्ततया तत्समीपप्रदेश एव सञ्चारणम् ॥ ४० ॥

दिव्यार्चायतनग्रामपुरराष्ट्रादिसम्पदाम् ।
निष्पादनं तथारामतटाकादिप्रकल्पनम् ॥ ४१ ॥

दिव्येति । दिव्यार्चायतनग्रामपुरराष्ट्रादिसम्पदाम् । निष्पादनम् इत्यत्र दिव्यार्चादीनां प्रत्येकं निष्पादनेनान्वयः । दिव्यार्चानिष्पादनं नाम अर्चाविग्रहराहित्ये तत्सम्पादनम्।जीर्णोद्धारः आयतनं विष्ण्वालयः। ग्रामादीनां भगवदर्चा ग्रामादीनां निष्पादनं सम्पादनमित्यर्थः । आरामतटाकादिप्रकल्पनमित्यत्रापि भगवदर्चारामादिकल्पनं मन्तव्यम् ॥ ४१ ॥

स्थापनार्चनयात्रादिमङ्गलानां प्रवर्तनम् ।
आस्थानासनयोग्यानां पात्रोपकरणस्य च ॥ ४२ ॥

स्थापनेति । स्थापनं विग्रहप्रतिष्ठापनम् । अर्चनं नित्याराधनम् । यात्रा पक्षोत्सवमासोत्सवादिषु भगवतो ग्रामप्रदक्षिणादिरूपा । आस्थानासनयोग्यानामास्थाने आसनदाने च योग्यानां चोपकरणानामिति शेषः ॥ ४२ ॥

स्नानप्रसाधनहविःशय्यान्तःपुरसंपदाम् ।
संग्रामसृगयाणाञ्च क्रीडोपकरणस्य च ॥ ४३ ॥

स्नानेति । प्रसाधनमलङ्कारः ॥ ४३ ॥

दिव्यानां मानुषाणां च सेवकानां पृथक्पृथक् ।
अन्येषां चैव भोगानां चेतनाचेतनात्मनाम् ॥ ४४ ॥

निष्पादनं रक्षणं च संस्क्रियोपनयादि च ।
भक्त्या च नियतौत्सुक्यं स्वयमाराधनक्रियाः ॥ ४५ ॥

दिव्येति । संस्क्रिया मालिन्याद्यपाकरणादिरूपः संस्कारः ॥ ४४ ॥ ४५ ॥

इत्येतत्सकलं काण्डस्कन्धशाखादलाङ्कुरम् ।
देवतान्तरभक्तिस्तु निरासस्तस्य हा शनिः ॥ ४६ ॥

इतीति । निर्गलितासङ्गसन्निर्गलितेतरसङ्गविषयसङ्घातस्य तस्य तरोः काण्डस्कन्धशाखादि यस्य तरोः ॥ ४६ ॥

अथ पुष्पं फलञ्चास्य लक्ष्म सत्सेवनन्तथा ।
युक्तोऽप्यन्यैर्विना पुष्पैः फलैरवति कस्तरुः ॥ ४७ ॥

'नानालक्षणपुष्पाढ्यः सत्सेवनबृहत्फल' इति वृत्त्याख्यतरोः पुष्पतया रूपितानां लक्ष्मणां फलतया रूपितस्य सत्सेवनस्य च प्रपञ्चनमधिकरोति–अथेति । लक्ष्म पुष्पं सत्सेवनं फलमित्यन्वयः ॥ ४७ ॥

प्रतप्तैर्भगवद्दिव्यायुधैर्गात्रेषु लाञ्छनम् ।
सततं च हरिक्षेत्रोद्धृतमृत्स्नोर्द्ध्वपुण्ड्रकः ॥ ४८ ॥
पद्मबीजमयी माला तुलसीदिव्यचूर्णकम् ।
पवित्रञ्चाथ कौपीनं व्यतिस्यूता च मेखला ॥ ४९ ॥

अथ लक्ष्म चतुःश्लोक्या प्रपञ्चयति–प्रतप्तैरिति । गात्रेषु भुजद्वयललाटशिरोहृदयेषु, बाह्वोर्ललाटे शिरसि हृदये चाग्रजन्मनामिति प्रागुक्तत्वात् । तुलसीदिव्यचूर्णकं तुलसीहारिद्राचूर्णम् । ततो दिव्यञ्च हारिद्रं सहेम तुलसीदलम् । मन्त्रेण धारयेच्चूर्णं ललाटे मस्तके तथेति प्रागुक्तत्वात् । पवित्रमिति न कौपीन-

विशेषणं किन्तु भगवता पवित्रारोपणोत्सवे धृतपट्टकार्प्पासादितन्तुनिर्मितमूलादिशेषपरम् । व्यतिस्यूता व्यत्यासेन स्यूता मेखला कटिसूत्रम् ॥ ४८ ॥ ४९ ॥

पञ्चायुधाब्जतार्क्ष्यादिलक्षणाभरणादिकम् ।
वेषश्चानुल्बणः शौक्ल्यं दन्तहृत्पुण्ड्रवाससाम् ॥ ५० ॥

पञ्चायुधेत्यादि । पञ्चायुधलक्षणम् अब्जलक्षणं तार्क्ष्यादिलक्षणं चाभरणं यथोक्तलक्षणरूपशब्दचिह्नपरपंचायुधादिचिह्नितपराभरणमित्यर्थः । आभरणादिकमित्यत्रादिशब्देन उष्णीषादिग्रहणम् । वेषश्चानुल्बण इति अतिशब्दायमानातिसूक्ष्मवस्त्रादिधारणादिकमुल्बणवेषतया स्मृतिप्रसिद्धं तच्चिह्नवेषा इत्यर्थः । शौक्ल्यं दन्तहृत्पुण्ड्रवाससामिति अत्र वैरूप्याय शुक्लशब्दः शुद्धिपरः । पुण्ड्रादेः शुभ्रत्वं वचनान्तरसिद्धम् । वैरूप्यायेति हृदि शुद्धिरित्यादि ॥ ५० ॥

विष्णोस्तत्संश्रयाणाञ्च चेतनाचेतनात्मनाम् ।
आख्यया व्यपदेशश्च लक्षणानि सतां विदुः ॥ ५१ ॥

विष्णोरित्यादि । विष्णोराख्यया भगवन्नाम्ना चेतनाचेतनात्मनाश्चेतनरूपाणामचेतनरूपाणां तत्संश्रयाणां विष्णुसंश्रयाणाम् आख्यया परांकुशः, परकाल इत्यादिकया श्रीरङ्गवेङ्कटाद्रिर्हस्तिगिरिरित्यादिकया व्यपदेशश्चेत्येतानि सतां लक्षणानि विदुरित्यर्थः ॥ ५१ ॥

लक्ष्मणामपचारेण विरुद्धानाञ्च धारणात् ।
कैंकर्य्यामोदसम्पत्तिर्नश्येन्मोहश्च जायते ॥ ५२ ॥

पुष्पत्वेन लक्ष्मणां रूपितत्वात्तद्धारणे कैङ्कर्यामोदनं वृत्तिर्नास्तीत्याह-लक्ष्मणामिति । अपचारेण लक्ष्मणां भगवल्लक्ष्मा

धारणेनाविरुद्धानां देवतान्तरचिह्नानां धारणात् । अपचारेण लक्ष्मणां भगवल्लक्ष्मधारणकैंकर्यामोदनवृत्तिनाशः अन्यलक्ष्म धारणे मोह इति विवेकः । उभयत्र वा द्रष्टव्यम् ॥ ५२ ॥

पत्युर्ज्ञानमयी वृत्तिर्विष्णोः प्रियमिहोच्यते ।
ये सन्ति तत्र निरतास्ते सन्त इति कीर्त्तिताः ॥ ५३ ॥

अथ सच्छब्दार्थकथनपूर्वकम् सत्सेवां प्रपञ्चयति चतुर्दशभिः—पत्युरिति । पत्युः शोषिणः ॥ ५३ ॥

सर्वात्मना हि या वृतिस्तेषु भक्तिमयी परा ।
सा भक्तेः परमा काष्ठा वृत्तेश्च परमात्मनि ॥ ५४ ॥

सर्वात्मनेति । तेषु सत्सु भक्तिमयी सर्वात्मना परा उत्कृष्टा या वृत्तिः सा परमात्मनि भक्तेर्वृत्तेश्च पराकाष्ठा सत्सु भक्तिः परमात्मनि भक्तेः पराकाष्ठा, सत्सुवृत्तिः परमात्मनिवृत्तेः परा काष्ठेत्यर्थः ॥ ५४ ॥

आचार्यवद्दैवतवन्मातृवत्पितृवत्स्ववत् ।
सुहृद्वत्स्वामिवत्सन्तो द्रष्टव्या राजवत्तथा ॥ ५५ ॥

आचार्यवदिति।स्ववदात्मवद् धनवदिति वा । आचार्य्यादिविषये यादृशी प्रीतिः तादृशी सत्सु कर्त्तव्येत्यर्थः ॥ ५५ ॥

श्रुत्वैव सहसोत्थानम्प्रत्युत्थानं सुदूरतः ।
दर्शनानुभवः प्रीतिः प्रणिपातोऽभिवादनम् ॥ ५६ ॥

श्रुत्वेति । सन्त आयान्ति इति श्रुत्वैवेत्यर्थः । सहसोत्थानम् अविलम्बेनोत्थानम् । दूरतः दूरादेव अभिगमनन्तदभिमुखेन गमनम् । निवदनं तवाहमस्तीत्यात्मनिवेदनम् ॥ ५६ ॥

नीचैः संश्लेषणं हस्तदानं मार्गप्रदर्शनम् ।
पश्चात्पार्श्वपुरोयानञ्चयालोकाभिभाषणम् ॥ ५७ ॥

नीचैः संश्लेषणम् अहङ्काराभावाद्यो नतिकारेण संगमः शेषत्वद्योतकमिति शेषः। पुरोयानं शेषत्वद्योतनङ्कीदृशमित्यपेक्षायामाह–नीचैरिति । जयालोकाभिभाषणमिति तदर्थे पुरोयानं शेषत्वद्योतकमिति भावः ॥ ५७ ॥

गृहोपनयनञ्चान्तर्देशक्रमणमासनम् ।
पादावनेजनञ्चार्घ्योपहारः स्वागतादि च ॥ ५८ ॥

गृहेति । गृहोपनयनं स्वगृहप्रापणम् । अन्तर्देशाक्रमणं तान्स्वगृहाभ्यन्तरे नीत्वा तैरन्तर्वेशसञ्चारणम् । उपवेशनम् आसनदानमित्यर्थः । पादावनेजनं पादप्रक्षालनम् ॥ ५८ ॥

प्रसादनं क्षमापणञ्च प्रीतिसंकथनानि च ।
उपासनं प्रश्रयणमात्मात्मीयनिवेदनम् ॥ ५९ ॥

प्रसादनमिति । प्रसादनं प्रसीदेत्युक्त्या प्रसादोत्पादनम् । क्षमापणं क्षमस्वेत्युक्त्या प्रीतिसंकथनानि प्रीतिमूलानि संकथानि संल्लापाः । उपासनं समीपेऽवस्थानम् । पादसंवाहनाद्यात्मकशुश्रूषा वा । प्रश्रयणं विनयः ॥ ५९ ॥

आज्ञाभ्यर्थनमालोकनिदेशवचनादरः ।
साधनं सम्पदामिष्टादरोऽनिष्टनिवर्त्तनम् ॥ ६० ॥

आज्ञेति । आज्ञाभ्यर्थनम् अभीष्टकर्मण्याज्ञापयेत्याज्ञार्थनम्। आलोकनिर्देशवचनादरः आलोके तत्कटाक्षे तन्निदेशवचने आज्ञावचने चादरः । कदा वा कटाक्षं मयि निक्षिपेत्कदा वा स्वकैङ्कर्ये आज्ञापयेदित्यभिरतिः।साधनं सम्पदां शाकफलादीनां तदभ्यवहारार्थानां पाचनम् । छत्रचामराद्युपकरणसम्पादनं वा । इष्टादरः तदिष्टसम्पादने आदरः ॥ ६० ॥

विरहानर्थपीडावमाननाद्यसहिष्णुता।
दास्याभिमानोऽनुव्रज्या श्रवणं कीर्त्तनं स्मृतिः॥६१॥

विरहेत्यादि। विरहस्य तद्विश्लेषस्य अनर्थस्य तदर्थहानेः पीडायास्तद्दुःखस्य अवमानना परकृततदवमाननस्य चासहिष्णुता। दास्याभिमानः अस्याहं दास इति सुदृढनिश्चयः। अनुव्रज्या तेषु गच्छत्सु सत्सु अनुव्रजनम्। श्रवणं तद्योगक्षेमगुणानुष्ठानादिश्रवणम्। कीर्त्तनं स्वयमन्येभ्यस्तत्कथनं तन्नामकीर्त्तनं वा स्मृतिस्तत्स्मरणम्॥६१॥

भक्तिज्ञानसमाचारवैराग्याद्यनुमोदनम्।
संगमेच्छोपगमनमन्वक्स्थानासनादिकम्॥६२॥

भक्तीति। सङ्गमेच्छा समागमेच्छा उपगमनं तानुद्दिश्य तत्समीपगमनम्। अन्वक्स्थानादिकम् अन्वक्पश्चात्स्थानम्। उपस्थानम् आसनादिकमित्यत्रादिशब्देन गमनसंग्रहः॥६२॥

समानसुखदुःखत्वं मिथश्चार्थविचिन्तनम्।
क्रियाकाले तु वरणं सदस्याग्रे तु पूजनम्॥६३॥

समानमिति। समानसुखदुःखत्वं तत्सुखदुःखाभ्यां सुखदुःखत्वम्। मिथश्चार्थविचिन्तनन्तत्त्वार्थविचारणं वैदिकविचारे सहायकरणम्। क्रियाकाले स्वस्य यज्ञाद्यनुष्ठानकाले वरणम् ऋत्विगादीनां वरणम्। सदस्याग्रे तु पूजनं गरिष्ठे अग्रपूजा॥६३॥

परिषत्सु च सान्निध्यं संविदाश्च प्रवर्त्तनम्।
तथाभ्यनुज्ञापूर्वं च सर्वार्थेषु प्रवृत्तयः॥६४॥

परिषदिति। सान्निध्यं सन्निधाववस्थानम्। संविदां प्रवर्त्तनं तत्प्रतिज्ञापरिपालनं तत्सङ्कल्पपरिपालनं वा॥६४॥

प्रच्छादनञ्च दोषाणां गुणानां ख्यापनन्तथा ।
क्वचिन्नैवाप्यधर्मेण कृच्छ्रेणाप्यर्थसाधनम् ॥ ६५ ॥

प्रच्छादनमिति । दोषाणान्तदीयानामिति शेषः एवं गुणानामित्यत्रापि क्वचिन्नैवेति । तेषामत्यन्तवृत्तिकर्शिततत्वावस्थायामित्यर्थः । तेन 'विनैव प्रतिषिद्धेन सर्वार्थान्साधयेत्फल, मित्यनेन न विरोधः ॥ ६५ ॥

एताश्चान्याश्च विविधा वृत्तयो रसनिर्भराः ।
विष्णुभक्तेषु वृत्त्याख्यतरोर्हि फलसम्पदः ॥ ६६ ॥

एताश्चेति। रसनिर्भराः भक्तिपरिबृंहिताः । स्वयम्प्रयोजनभूता इति वा फलपक्षे रसपूर्णाः ॥ ६६ ॥

सतामाचार्यमुख्यानामपचाराः पृथग्विधाः ।
असतामिव संसर्गास्समूलफलनाशनाः ॥ ६७ ॥

सतामिति । सतां विषये अपचाराः असत्संसर्गाश्च एतत्फलनाशका इत्याह । सतामिति असतामिवेत्यत्र इवकारो भिन्नक्रमः । असतां संसर्गश्च एवेत्यर्थः ॥ ६७ ॥

दास्यामृतरसास्वादतर्षादत्यन्तमीशितुः ।
वैरस्येन विरुद्धानां हानं वैराग्यमुच्यते ॥ ६८ ॥

अथ तज्ज्ञानमूलसन्तानस्वक्रियाचारबन्धनः । भक्तिप्रकाण्डविस्तारो वैराग्यरसपेशल इति वैराग्यशब्देनोक्तं दृष्टयादिविरुद्धवर्जनमित्याह-दास्यामृतेत्यादि। ईशितुर्भगवतः दास्यमेवामृतरसः। तस्यास्वादे यस्तर्षस्तृष्णा तस्माद्धेतोः अत्यन्तवैरस्येन विरुद्धेषु नितरां वैरस्येन विरुद्धानां दृष्टिविहिताचार

भक्तिलक्ष्मसत्सेवाविरुद्धानां संत्यागो वैराग्यमुच्यते, वैराग्य रसपेशल इत्युक्तं वैराग्यं दृष्ट्यादिविरुद्धवर्जनमित्यर्थः ॥ ६८ ॥

श्रुतिभिः पञ्चरात्रेण स्मृतिभिस्तत्त्वदर्शिनाम्।
दर्शितान्यर्थतत्त्वानि न हि मन्दधियो विदुः ॥ ६९ ॥
ब्रह्मरुद्रमुखा देवा विविधाश्च महर्षयः ।
मनुष्या नागयक्षाश्च सिद्धविद्याधरास्तथा ॥ ७० ॥
तत्तत्कार्योपपत्त्यर्थं शासनाच्च जगत्पतेः ।
रजस्तमोऽभिभूत्या च जगुः शास्त्राण्यनेकशः ॥ ७१ ॥
विपरीतार्थतत्त्वानि क्षुद्रनानाफलानि च ।
अपवर्गकथावन्ति मोहनान्यद्भुतानि च ॥ ७२ ॥

श्रुतिपञ्चरात्रमन्वादिस्मृतिसात्त्विकपुराणेतिहासदृष्टिः, तद्विरुद्धवर्जनं दृष्टिविरुद्धवर्जनमित्याह । श्रुतिभिरित्यादिभिः पञ्चदशभिः श्लोकैः । श्रुतिभिरिति । श्रुतिशब्देन वेदः । वेदार्थस्मरणमूलतया इतिहासपुराणयोरपि संग्रहः । तत्त्वदर्शिनां स्मृतिभिरित्यनेन रजस्तमोमूलव्यावृत्तिः । तत्तत्कार्योपपत्त्यर्थम् । असुरमोहनादिकार्यसिद्ध्यर्थम । 'शासनाच्च जगत्पतेरि'त्यनेन 'सत्त्वं हि रुद्रमहाशास्त्रादिकारये'त्यादिकं स्मारितम् विपरीतान्यर्थतत्त्वानि येषामिति बहुव्रीहिः। क्षुद्रनानाफलानि क्षुद्राणि शिशुभावे नानाविधानि फलानि येषां तानि । अपवर्गकथावन्ति मोक्षप्रस्तावन्ति मोक्षकथनमात्रमेव न मोक्ष इति भावः । मोहनानि मोहाविपरीतभूतानि विशेषेण पाषाणभेदनाद्यद्भुतकार्यकरत्वाद्वा आश्चर्यकथायुतत्वाद्वा अद्भुतत्वम् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

अपरेषामपि पुनस्तत्तन्मार्गानुसारिणाम्।
धर्मवादच्छलोपेता ये च स्युर्ग्रन्थविस्तराः ॥ ७३ ॥

अपरेषामिति। परेषां ब्रह्मरुद्रादिव्यतिरिक्तानां तत्तन्मार्गानुसारिणां हैरण्यगर्भपाशुपतादिमतानुसारिणां धर्मवादच्छलोपेताः धर्मवाद एव च्छलं कपटं तेनोपेताः । धर्मवादव्याजेन मोहनाद्यर्थप्रवृत्ता इत्यर्थः ॥ ७३ ॥

हरेरालोकहीनानामद्यापि किल पश्यत ।
तेषु तेष्ववगाहेन भवन्ति ज्ञानविप्लवाः ॥ ७४ ॥

हरेरिति ।हरेरालोकहीनानां जायमानदशायां भगवत्कटाक्षरहितानामपरेषां ये प्रबन्धविस्ताराः सन्ति तेष्वलगाहेन ज्ञानविप्लवो भवति, पश्यतेत्यन्वयः ॥ ७४ ॥

वेदानां सोपनिषदां पौरुषेयत्वचिन्तनम् ।
पञ्चरात्रे च सकले तन्त्रान्तरसमत्वधीः ॥ ७५ ॥

वेदानामिति । पश्यतेत्यस्य एतद्ग्रन्थविस्तारावगाहिनः ते विप्लुतज्ञाना एवं वर्त्तन्ते, ते भवद्भिरपि साक्षात्कर्त्तुं शक्याः॥ तेन मया वक्तव्यमस्तीति भावः । पौरुषेयत्वचिन्तनं पुरुषप्रणीतत्वमतिः सकले कृत्स्ने एतेन पञ्चरात्रे एकदेशे प्रामाण्यं नास्तीत्युक्तं भट्टपाराशरपादैः । पञ्चरात्रे सर्वत्रैव प्रमाणं तदिदमवगतं पंचमी देवदेवादिति । तन्त्रान्तरसमत्वधीः पाशुपतादितन्त्रसाम्यबुद्धिः समताबुद्धिः ॥ ७५ ॥

वृद्धानां चैव मुक्तानां नित्यानां च तथात्मनाम् ।
अच्युतादन्यशेषत्वशंका च समताभ्रमः ॥ ७६ ॥

वृद्धानामिति । शिवादिष्वच्युतसाम्यबुद्धिः ॥ ७६ ॥

तस्य चान्येशितव्यत्वबुद्धिर्विश्वपृथक्त्वधीः।
विभूतिगुणरूपादिविशेषविरहभ्रमः ॥ ७७ ॥

तस्येति। तस्याच्युतस्य अन्येशितव्यत्वस्य बुद्धिः। विश्वस्य बुद्धिः विश्वस्यापृथक्त्वधीः ॥ ७७ ॥

अन्यतो जगदुत्पत्तिस्थितिप्रलयचिन्तनम्।
योगानां चैव सर्वेषां नित्यादेः कर्मणस्तथा ॥ ७८ ॥

अन्यत इति। अन्यतो जगदुत्पत्तिस्थितिप्रलयचिन्तनम् जगतो भगवतोऽन्यस्मादुत्पन्नत्वादिचिन्तनमित्यर्थः। योगानां कर्मयोगभक्तियोगानामनित्यादेरित्यादिशब्देन नैमित्तिककाम्ययोर्ग्रहणम् ॥ ७८ ॥

ज्ञानभक्त्यंकसत्सेवातत्त्वानां चाविचिन्तनम्।
विरुद्धानां च सर्वेषामपायत्वविमर्शनम् ॥ ७९ ॥

ज्ञानेति। ज्ञानं दृष्टिः अङ्को लक्ष्म। ज्ञानभक्त्यङ्कसत्सेवारूपाणां तत्त्वानां तत्त्वशब्देन महदादीनि तत्त्वानि विवक्षितानि। विरुद्धानां दृष्टिभक्तिलक्ष्मसत्सेवाविरुद्धानाम् ॥ ७९ ॥

तथानादेरविद्यायाः स्वरूपस्यानिरूपणम्।
हरेरालोकनान्तायास्तस्याश्चान्यनिवर्त्यधीः ॥ ८० ॥

तथेति। हरेरालोकनान्तायाः भगवत्कटाक्षैकनिवर्त्यायाः भगवद्दर्शनेन निवर्त्याया इति वा। तथा च श्रुतिः। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि येस्मिन्दृष्टे परावर' इति। दर्शनं च प्रत्यक्षसमानाकारा ध्रुवा स्मृतिः। सत्त्वशुद्धौ च ध्रुवा स्मृतिः। स्मृति

(१) उपनिषदि तु तस्मिन्निति पाठान्तरम्।

लम्भे सर्वग्रन्थीनां विप्रमोक्ष, इति ग्रन्थिभेदनस्य ध्रुवानुस्मृति कार्यरूपतया श्रुत्यैव प्रतिपादनात् । सर्वस्यामेवश्रुतौ स्मृति समानाकारदर्शनमेव विधीयत इति न वाच्यम् । अतिशयाभाव प्रसङ्गात दर्शनस्य स्मृतिपदेनोपचारे अपिशाब्दत्वमेव लभ्यते दर्शनपदेन स्मृतेरुपचारे तु विशदतमत्वं तस्या लभ्यत इस्यस्यैवोपपन्नत्वादिति एतस्मादपि व्याख्यानात् भगवत्कटाक्ष निवर्त्याया इति व्याख्यानमेव साधीयः । अन्यथा प्रपदनासंग्रहात् । उपासनेन प्रपदनेन वा यथाधिकारमनुष्ठितेन प्रीतो भगवान्संसारसागरान्निर्गमनं सङ्कल्पयेदित्यस्य चेतनेक्षेति हि वेदान्तसिद्धान्तः । तथा चोक्तं वेदान्ताचार्यैर्यथा । [1] हेमार्चना भरणासनप्रत्तिभिः समाराधितः फलं दिशति देहिना'मिति हि सम्प्रदायस्थितिः श्रुतिस्मृतिगुरुयुक्तिभिर्नयदिति कराराधिति न इति हरेरालोकनं चात्र मोक्षयिष्यामीति सङ्कल्पः। तस्या अविद्यायाः अन्यनिवर्त्यधीः भगवत्कटाक्षभिन्ननिवर्त्यबुद्धिः ॥ ८० ॥

फलानां चान्यतः प्राप्तिश्चिन्ता निःश्रेयसस्य च ।
हरेः कैङ्कर्य्यसम्प्राप्तिर्व्यतिरिक्तामृतत्वधीः ॥ ८१ ॥

फलानामिति । फलानां निःश्रेयसः मोक्षस्य चान्यतः भगवद्व्यतिरिक्तात्प्राप्तौ चिन्ता लाभबुद्धिः । भगवद्व्यतिरिक्तः कर्म फलानां मोक्षस्य च प्रदातेति बुद्धिरित्यर्थः । अन्योपासकानामपि चेतनानां तदादिचेतनानां तदादिदेवतान्तर्यामितयावस्थाय तैराराधितः स एव भगवान् तद्वृदयेप्सितानि प्रयच्छति ॥ ८१ ॥

---

(१) आदर्शपुस्तकान्तरालाभाच्छोधयितुमेतद्वचनमशक्तोऽस्मि संवृत्तः । ( शोधकः ) ।

विशेषेणाप्यनर्थेषु देहादिष्वर्थतामतिः।
इत्यादयो बहुविधा महापापाः कुदृष्टयः॥ ८२॥
हरेः प्रियतमं ज्ञानं सन्तो ज्ञानधना ह्यतः।
तथैव चापचाराणां काष्ठा ज्ञानविपर्य्ययः॥ ८३॥
ज्ञानस्य कर्मणा गुप्तिर्हतं ज्ञानमकर्मणा।
प्रवृत्त्या प्रतिषिद्धेषु ज्ञानं कर्म च नश्यति॥ ८४॥
अचिन्ता च विनिन्दा च मतिपूर्वं च वर्जनम्।
विहितानाञ्च धर्माणां सर्वज्ञात्मावघातकम्॥ ८५॥
स्वरूपस्य विनाशाय रुचिर्निन्द्येषु कर्मसु।
विषयेषु च सर्वेषु लौल्यं विषमधुस्पृहा॥ ८६॥
विष्णोर्विद्वेषयुक्तस्य वैमुख्यं प्रतिपत्तिषु।
प्रवृत्तिश्चापचारेषु सम्यगात्मविनाशनम्॥ ८७॥
अन्यतान्त्रिकदेवानां संसर्गप्रतिपत्तिषु।
प्रवृत्तिरच्युतैकान्त्यनियमाध्वरनाशिनी॥ ८८॥
लक्षणानि हि पुष्पाणि मुकुन्दचरणार्चने।
तदभावपरीभावौ प्रध्वंसनकरावुभौ॥ ८९॥
अन्यपुण्ड्राङ्कनादीनां धारणं दृष्टिनाशनम्।
परचिह्नव्रणं गात्रे भ्रंशाय नरकाय च॥ ९०॥
सतामसेवनान्नित्यमसताञ्च निषेवणात्।
क्षीयन्ते चाथ नश्यन्ति ज्ञानवैराग्यभक्तयः॥ ९१॥
महापचारो देवस्य भक्तानाम्भुवि शार्ङ्गिणः।

धर्मरक्षानियुक्तानां समयस्य व्यतिक्रमः ॥ ९२ ॥
एते चान्ये च विविधा ह्यपचाराः सुदुःसहाः ।
वैराग्यं वर्जनं तेषां लज्जामानमदादिभिः ॥ ९३ ॥
वृत्तेर्हि जीवितं गुप्तिः सारो वैराग्यमुच्यते ।
वैराग्ययुक्ता हि नरा यजन्त्यप्रच्युतान्तराः ॥ ९४ ॥
अनुज्झितक्रियायोगा ज्ञानवैराग्यशालिनी ।
इति भक्तिमयी वृत्तिः पुनरेव प्रपञ्चिता ॥ ९५ ॥
इत्थं किलात्मनो न्यासाज्जातो वृत्त्याख्यपादपः ।
असौ फलमयः सेव्यस्तत्र चोत्पद्यते विना ॥ ९६ ॥
सुसूक्ष्मत्वाद्दुरापत्वान्महत्त्वाद्गौरवादपि ।
मयायं परमो धर्मः प्रोक्तः स्थित्यै पुनः पुनः ॥ ९७ ॥
वृत्तिं सन्तोऽनुभूयेमामनुरूपहिमात्मनः ।
परत्र चानुमोदन्ते परमेण विपाश्रिता ॥ ९८ ॥

इति श्रीनारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे चतुर्थोऽध्यायः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ।

(१) तृत्फलम् । (२) उत्तरान्वयि ।

पुस्तकमिलनेकाठिकाना-खेमराजश्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" (स्टीम) यन्त्रालय-बंबई.